THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

## NOS. 155, 156, 157 & 158.

# वेदान्तदर्शनम् ।

परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वती
स्वामिकृत ब्रह्मामृतवर्षिणी समाख्य
व्याख्यासंवलितं
वेदान्तपरिनिष्ठितप्रज्ञश्रीप्रज्ञानानन्दसरस्वती
स्वामिभिः परिष्कृत्य संशोधितम् ।

## VEDÂNTADARŚANA

WITH A COMMENTARY CALLED BRAHMÂMRITA

by

ŚRÎ RÂMÂNANDA SARASWATI SWAMI

EDITED BY

PRAJNÂNÂNANDA SARASWATI SWÂMI.

*PUBLISHED AND SOLD BY THE SECRETAR*
CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT.
BENARES:
AGENTS:- OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHÂRÂMA MUKUNDAJI, BOMBAY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Hari Krishna Dâsa Gupta*
PROPRIETOR AT THE V YÂ VILÂSA PRESS.
BENARES.

*Price Rupee One.*

॥ नमः श्रीगणेशाय ॥

# वेदान्तदर्शनम् ।

## ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासमान्वितम् ।

---

श्रीरामचरणद्वन्द्वमद्वन्द्वानन्दसाधनम्[1] ॥
नमामि यद्रजोयोगात् पाषाणो[2]ऽपि सुखं गतः ॥ १ ॥
संगतिः संशयः पूर्वपरपक्षौ तयोः फलम् ॥
भाष्यस्थाः श्रुतयः सर्वाः सूत्राण्यनवशेषतः ॥ २ ॥
व्याख्यायन्ते स्फुटन्यायै[3]र्मतभेदोऽपि कुत्रचित् ॥
उच्यते सुखबोधार्थं श्रीरामो वीक्षतामिदम् ॥ ३ ॥

इह खलु नित्याध्ययनविधिना[4] अधीतस्वाध्याय[5]मापातज्ञान[6]वन्तं, परमपुरुषार्थकामम्, ऐहिकाऽऽमुष्मिकफलेषु विरक्तमुपलभमानः परमकारुणिको[7] मुनिः[8], सूत्रयामास[9]—

---

१ अद्वन्द्वानन्दसाधनम् – ब्रह्मानन्दप्रापकम् ।

२ पाषाणोऽपि – अहिल्यापि ।

३ स्फुटन्यायैः – स्पष्टतया दृष्टान्तयुक्तिभिः ।

४ नित्याध्ययनविधिना – स्वाध्यायोऽध्येतव्यो, वेदाध्ययनं पठनं पाठनं षडङ्गं कर्त्तव्यं ब्राह्मणेन निष्कामतया, अनेन उपदेशवाचिना शब्देन । ५ अधीतस्वाध्यायम् – अधीतवेदवेदाङ्गमधिकारिणम् ।

६ आपातज्ञानवन्तं – सामान्यतया विचारितवेदवेदाङ्गं सदसद्विचारसम्पन्नं साधनचतुष्टययुक्तम् । ७ कारुणिको – दयालुः ।

८ मुनिः – मननशीलो ब्रह्मनिष्ठः ।

९ सूत्रयामास – संक्षेपेण सर्ववेदार्थतत्त्वं सच्चिदानन्दाऽद्वितीयं वस्तुभेदरहितं शुद्धं ब्रह्म बोधयामास ।

( १ ब्रह्मणो विचार्यत्वाऽधिकरणम् । सूत्रम् १ )

## अथाऽतो ब्रह्मजिज्ञासा ॥ १ ॥

अत्राथशब्देन साधनचतुष्टयसंपत्त्यानन्तर्यमुच्यते । तद् यथेह कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते इत्यादिना कर्मफलानाम्[1]नित्यत्वम् । परीक्ष्य[2] लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेनेति वैराग्यं[3] कर्मफलेषु दर्शितम् । शान्तो[4] दान्त[5] इत्यादिना शान्त्यादि[6] । न स पुनरावर्तते इत्यादिश्रुत्या मोक्षस्य नित्यत्वेन तत्रेच्छा । एतदानन्तर्य्यमेव साधनचतुष्टयसंपत्त्यानन्तर्यम् । अर्थान्मोक्षकामोऽधिकारी सूच्यते । अतः—शब्देन साधनचतुष्टयस्य संभावना[7], ब्रह्म[8]जिज्ञासे[9]-त्यनेन अज्ञातत्वेन विषय[10]त्वं, ज्ञातत्वेन प्रयोजनत्वं च ब्रह्मण उक्तं भवति ॥

---

१ कर्मफलानां – स्वर्गादिवैषयिकसुखाभासानाम् ।

२ परीक्ष्य – कृतकत्वेन हेतुना स्वर्गादिसुखमनित्यं विनाशिस्वभावं ज्ञात्वा साक्षात्कृत्य ।

३ वैराग्यं – विगतरागत्वं प्रीतेरभावः ।

४ शान्तः – मनसः कामादिराजसवृत्तित्यागः ।

५ दान्तः – बाह्येन्द्रियविषयवृत्तित्यागः ।

६ आदिना, उपरतस्तितिक्षुः समाधानं, श्रद्धा इत्येषां ग्रहः । मोक्षो नाम, सदसद्विचारेण सर्वदुःखत्यागपूर्वकं परमानन्दरूपेण स्थितिः ।

७ सम्भावना – परमास्तिक्यनिश्चयः ।

८ ब्रह्म – निरपेक्षव्यापकं, द्वितीयवस्तुभेदरहितं, शुद्धं, सच्चिदाऽऽनन्दघनम् ।

९ जिज्ञासा – ज्ञातुमिच्छा ।

१० विषयत्वं – जीवब्रह्मणोर्वास्तवैक्यम् । प्रयोजनपरमफलं कैवल्यमुक्तिरूपं शुद्धब्रह्मरूपेण स्थितिः ।

एवञ्च प्रेक्षावत्प्रवृत्त्यङ्गभूताधिकार्यादिसमर्पकत्वेन, समन्वयाद्यखिलविचारोपोद्घातत्वादादावस्य सूत्रस्य संगतिः। श्रवणविधिविषयवेदान्तवाक्यैः स्वार्थनिर्णयायाऽस्यापेक्षणाच्छ्रुतिसंगतिः। एवमन्येषामपि सर्वेषां सूत्राणां श्रुतिसंगतिः। विशेषतो ब्रह्मपरवाक्यतात्पर्यनिर्णायकन्यायसूचकत्वाद् ब्रह्मविचाराऽऽत्मकशास्त्रसंगतिः। एवमग्रेऽपि शास्त्रसंगतिरूह्या। अथातो ब्रह्मजिज्ञासा इत्यादिभिः सूत्रैः, सर्वे वेदान्ता ब्रह्मपरा इति समन्वयप्रतिपादनात्तेषामाध्यायं समन्वयाध्यायसंगतिः। प्रथमपादे स्पष्टब्रह्मलिङ्गानां वाक्यानां विचार्य्यत्वाद् आपादं पादसंगतिः। प्राथम्यादस्य सूत्रस्याधिकरणसंगतिर्नापेक्षिता। एतदानन्तर्य्यं त्वितरेषामपेक्षितम्। तच्च तत्तदधिकरणप्रस्तावे वक्ष्यामः॥

तत्रतावद् आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति वाक्यं, द्रष्टव्य इत्यात्मसाक्षात्कारफलमनूद्य,

---

१ प्रेक्षावान् – पण्डितः सदसद्विवेकी। २ अङ्गभूतः – सहायकः। ३ समर्पकत्वेन, बोधकत्वेन। ४ समन्वयः – अखण्डार्थकत्वम्। ५ उपोद्घातः, – मुख्यप्रयोजनार्थमन्यदन्यदर्थवर्णनम्।

६ सङ्गतिः – व्यवस्था, सर्ववाक्यार्थविरोधपरिहारः। सङ्गतिरनेकविधा श्रुतिसङ्गतिः, सूत्रभाष्यदृष्टान्तः, अवान्तर आक्षेपसमाधाने उपोद्घातप्रसङ्ग इत्यादयः॥

७ शास्त्रम् – हितशासकत्वम्। बोधकत्वं, सर्वशङ्कादुःखनिवर्त्तकत्वेन॥ ८ लिङ्गानां – बोधकानाम्। ९ अधिकरणत्वं नाम – विषयसंशयपूर्वपक्षसङ्गतिसिद्धान्तानां पञ्चानामाधारत्वं ज्ञापकत्वम्।

१० इति वाक्यं – विधिच्छायापन्नं वाक्यम्। आत्मा वा रे द्रष्टव्य इत्यादिरूपम्। श्रवणं नाम षड्विधतात्पर्यबोधकलिङ्गैरुपक्रमादिभिः, सर्ववेदान्ततात्पर्यावधारणम्। मननं नाम वेदान्ताविरुद्धयुक्तिदृष्टान्तचिन्तनम्। निदिध्यासनं नाम विजातीयज्ञानव्यवधानराहित्येन ग्रन्थप्रतिपादितमुख्यज्ञानाकारेणस्थितिः। समाधिर्नाम निदिध्यासनपरिपाकः ब्रह्मरूपेणस्थितिस्तस्य परिपाकोब्रह्मसाक्षात्कारोनिर्वाणं कैवल्यं मोक्षः

तत्साधनत्वेन श्रवणं विदधाति । श्रवणं नाम सर्वेषामुपनिषद्वाक्यानाम् अद्वितीये ब्रह्मणि तात्पर्याऽवधारणाऽनुकूलन्यायविचारः । तादृशविचारात्मकं वेदान्तशास्त्रमारम्भणीयं न वेति सन्देहः । सर्वत्र पूर्वोत्तरपक्षयुक्तिद्वयं, संशयबीजं द्रष्टव्यम् ॥

तत्र पूर्वपक्षः । शास्त्रं नारम्भणीयम् । विषयप्रयोजनशून्यत्वात् । तथाहि । सन्दिग्धं विषयः । ब्रह्म तु जीवात्मना ब्रह्मात्मना वा, न सन्दिग्धम् । अहम्प्रत्ययेन[1], सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्येन च निश्चितत्वात् । नच तत्त्वमस्यादिवाक्येनैक्यप्रतिभासनादहम्प्रत्ययेन भेदावभासनात् संशयः[2] । अबाधिताऽहम्प्रत्ययाविरोधेनैक्यश्रुतेरुपचरितार्थत्वात् । न चाध्यस्तात्मविषयत्वमहम्प्रत्ययस्य । स्वयम्प्रकाश आत्मन्यध्यासाऽयोगात् । नापि प्रयोजनम् । उक्तरूपब्रह्मज्ञानेऽपि मुक्तेरदर्शनात् । तस्माच्छास्त्रं नारम्भणीयमिति प्राप्ते, राद्धान्तैः[3]– शास्त्रमारम्भणीयम् । विषयप्रयोजनयोः सम्भवात् । श्रुत्यहम्प्रत्ययविरोधेन[4], जीवाऽभिन्नब्रह्मणः सन्दिग्धत्वेन च विषयत्वात् । न च श्रुतेरुपचरितार्थत्वम्[5] । उपक्रमादितात्पर्यलिङ्गसहकृतानेकवाक्यानामुपचरितार्थत्वाऽयोगात् । मनुष्योऽहमित्यादौ परैरपि भ्रमत्वेन स्वीकारात्, कर्तृत्वाद्यंशेऽपि श्रुतिबलाद् भ्रमत्वमास्थ्येयमिति नाध्यासा[6]ऽनुपपत्तिः ॥

---

१ प्रत्ययेन – ज्ञानेन ।

२ संशयः उभयकोट्यवगाहनं भ्रान्तिज्ञानं स्थाणुर्वा पुरुषो वेति ।

३ राद्धान्तः – सिद्धान्तः, वादिप्रतिवादिभ्यां निर्णीतोऽर्थः ।

४ अहम्प्रत्ययाविरोधेन – अभेदश्रुत्यहंज्ञानयोर्विरोधेन ।

५ उपचरितत्वं – गौणत्वम् ।

६ अध्यासः नाम अतस्मिँस्तद्बुद्धिः । यथा शुक्ताविदं रजतमिति बुद्धिस्तत्कारणं चाऽज्ञानम् ।

किञ्च, न केवलं सन्दिग्धत्वेनाऽपि तु विपर्यस्तत्वेनापि
वेषयत्वम्। ननु स्वयम्प्रकाशे आत्मनि कथं सन्देहादिरितिचे-
। अनाद्यऽविद्यावशात् तादृशेऽप्यात्मन्यध्यासस्याऽनुभवसिद्ध-
ाया, स्वरूपज्ञानस्य तदविरोधित्वात्। नाऽपि फलाभावः।
थावत्स्वरूपसाक्षात्कारस्येदानीं[1] सम्भवेऽप्यसम्भावनादिशङ्का-
कलङ्कितत्वेन। अविद्यानिवर्त्तकत्वाभावेऽपि, श्रवणमनननिदि-
ध्यासनैः शङ्कायां निरस्तायां, ब्रह्मसाक्षात्कारेणाऽविद्यानिवृत्तौ
तिबन्धकाभावात्[2]। तथाच श्रुतिः— तरति शोकमात्मवित्, एतद्यो
द निहितं[3] गुहायां[4] सोऽविद्याग्रन्थिं विकिरतीह[5] सोम्येति[6]।
स्माद्विषयफलसम्भवाच्छास्त्रमारम्भणीयम्॥

अत्र कृत्स्नशास्त्रप्रतिपाद्यं ब्रह्म। अध्यायैस्तु प्रतिपाद्यानि
समन्वयाऽविरोधसाधनफलानि। तदुक्तम्॥

शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः।
समन्वयाऽविरोधौ द्वौ साधनं च फलं तथा, इति॥

तत्र विवरणमतानुसारिणः, सूत्रे कर्त्तव्येतिपदमध्याहर्तव्य-
वदन्ति। तथाहि। द्रष्टव्य इति परमपुरुषार्थसाधनं ज्ञान-
, तत्र, द्वा सुपर्णा इत्यादिना ब्रह्म वेद ब्रह्मैव भवतीत्या-

साक्षात्कारस्येदानीं सम्भवेऽपि— साक्षात्काररूपात्मनः संभवेऽपि।
२ ब्रह्मसाक्षात्कारेणाविद्यानिवृत्तौ प्रतिबन्धकाभावात् — ब्रह्मा-
क्यज्ञानेनाऽविद्यानिवृत्तिरूपे बाधरूपे कार्ये, असम्भावनादिशङ्का-
ः स एव प्रतिबन्धो वेदान्तशास्त्रप्रोक्तमहावाक्यार्थयथार्थ-
तस्याऽभावात् प्रतिबन्धकनिवृत्तिरेव शास्त्रस्य मुख्यं फल-
। सच्चिदानन्दाऽद्वितीयात्मनस्तु स्वतः सिद्धत्वात् तस्मादिति
। ३ निहितं — स्थितम्। ४ गुहायां — बुद्धौ।
५ विकिरति — नाशयति। ६ सोम्य — प्रियदर्शन।

दिना च, भिन्नाऽभिन्नात्मविचारयोः साधनत्वेन पक्षेप्राप्तौ[1] श्रोतव्य इत्यनेन प्रकृतिलक्षणया[2] भिन्नात्मविचार एव साक्षात्कारसाधनमिति नियम्यते । व्रीहीनवहन्तीतिवत्[3] । एवञ्च, नावेदविन्मनुते तं बृहन्तं, तं त्वौपनिषदं[4] पुरुषं पृच्छामीत्यादिना ब्रह्मणि प्रमाणान्तराभावान्मनननिदिध्यासनसहकृतविचारितवेदान्तवाक्यमेव साक्षात्कारहेतुरिति सम्पद्यते । तथाच विचारविध्यपेक्षिताधिकार्यादीनामागमिकत्वेऽपि[5], न्यायैर्[6] निर्णयार्थमिदं सूत्रम् ॥ अथातो ब्रह्मजिज्ञासा ॥ तस्याऽनुवादकत्वे आनर्थक्यं स्यादिति कर्त्तव्यपदाध्याहारः । शास्त्रे पुरुषप्रवृत्तिसिद्धये

---

१ विकल्पेन प्राप्तिः – पक्षप्राप्तिः ।

२ प्रकृतिलक्षणया – जहत्स्वार्थलक्षणया ज्ञापिकया । आत्मदर्शनमुद्दिश्य आदाय, तद्धेतुविचार एवेति नियते सति प्रकृतिलक्षणयेति वा ।

३ व्रीहीनवहन्तीतिवत् – यथा, व्रीहीनवहन्तीत्यादौ पुरोडाशोत्पादनकारणीभूतव्रीह्यादेरवघातस्य लोकप्राप्ततया अवहन्तीति नाऽपूर्वविधिः, अपि तु नियमविधिः । व्रीहीनवघातेनैव संस्कुर्यादिति यावत् । न तु नखविदलनादिना इति । तद्वदत्राप्यभिन्नात्मविचार एव कर्त्तव्यो, न भिन्नात्मविचार इति नियम्यते । भिन्नात्मविचारस्य स्वयमेव लोकसिद्धत्वात् । कर्त्ता भोक्ता सुखी दुःखीत्यादिवत् । पूर्वं प्रमाणान्तराऽसिद्धार्थविषयोऽपूर्वविधिः । भिन्नात्मविचारस्य पूर्वमीमांसासिद्धत्वेन लोकसिद्धत्वेन च नाऽपूर्वविधिः सम्भवति । किन्तु अभिन्नात्मविचारे नियमविधिरेव ।

४ औपनिषदम् – उपनिषत्प्रतिपादितं ब्रह्मात्मैक्यज्ञानं, किं वा उपनिषत्सु भवं सच्चिदानन्दस्वरूपं ब्रह्माद्वितीयमौपनिषदं पुरुषं पूर्णम् ।

५ आगमिकत्वेऽपि – वेदान्तप्रतिपादितत्वेऽपि ।

६ न्यायैः [illegible] सद्युक्तिर्वेदान्ताऽनुकूला पञ्चशताऽधिकषट्पञ्चाशत्सूत्रैरुपनिबद्धा वेदान्ताचार्य्यवर्येण वेदव्यासेन महर्षिणा ।

श्रुतिसारूप्यार्थं[1] वा। एवं सति जिज्ञासेत्यत्र प्रकृत्या ज्ञानमात्रपरया साध्यज्ञानमजहल्लक्षणया[2] बोध्यते। प्रत्ययेनेच्छासाध्य[3]विचारो जहल्लक्षणया बोध्यते इति नवीनमतम्॥

विवरणटिप्पण्यां तु प्रकृतेः सिद्धज्ञानमात्रवाचकत्वमङ्गीकृत्य साध्यज्ञानेऽपि जहल्लक्षणैवेत्युक्तम्। तथाचाऽयं सूत्रस्य श्रौतोऽर्थः। साधनचतुष्टयसम्पन्नस्य ब्रह्मज्ञानाय वेदान्तविचारः कर्त्तव्य इति। ब्रह्मज्ञानस्य मोक्षहेतुत्वं[4], वेदान्तानां विचार्य्यत्वं चाऽर्थाल्लभ्यते। तथाचोक्ताधिकारिणो मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्त्तव्य इत्यार्थिकार्थ इति॥

मिश्रमताऽनुसारिणस्तु श्रुतिसूत्रयोरैक्यरूप्यनियमाऽभावं विषयप्रयोजनज्ञानादेव पुरुषप्रवृत्तिसिद्धं श्रवणविध्यऽसम्भवं च मन्वानाः कर्त्तव्येति पदं नाध्याहर्त्तव्यमिति वदन्ति। तेषां मते साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मज्ञानेच्छा भवति। कर्म्मफलस्याऽनित्यत्वाद् ब्रह्मज्ञानात् परमपुरुषार्थश्रवणाच्चेति श्रौतोऽर्थः। ज्ञानस्य विचारसाध्यत्वाद्विचारकर्तव्यताऽऽक्षिप्यत इति विचारकर्त्तव्यतार्थिक्येवेति॥ अत्र विचाराऽनारम्भवादिन उपायान्तरसाध्या मुक्तिरिति फलम्। सिद्धान्तिनस्तु विचारसम्भ-

१ श्रुतिसारूप्याय – श्रोतव्यरूपश्रुतितुल्यतायै सूत्रस्याऽऽदिमस्य कर्त्तव्येतिपदाध्याहारः। श्रोतव्य इत्यत्र कर्त्तव्यपदस्य विद्यमानत्वात्।

२ साध्यज्ञानमजहल्लक्षणया – ज्ञानांशत्यागेन विनाऽसाध्यविशिष्टवाक्यजन्यज्ञानग्राहिकया। ३ प्रत्ययेन – जिज्ञासा इत्यत्र सन्प्रत्ययेन, इच्छासाध्यविचारो बोध्यते। ब्रह्मजिज्ञासेत्यत्र, प्रकृतिपदज्ञानपदार्थान्मोक्षहेतुत्वं ज्ञानस्य लभ्यते। इच्छापदार्थाद्वेदान्तानां विचार्यत्वं लभ्यते। ४ ब्रह्मज्ञानस्य मोक्षहेतुत्वं – वेदान्तानां विचार्यत्वं चार्थाल्लभ्यते साधनचतुष्टयवतः कर्मफलस्यानित्यत्वज्ञानं ब्रह्मज्ञानात् परमपुरुषाऽर्थश्रवणं चास्त्येवाऽतस्तदनन्तरं स्वयमेवेच्छा भवति।

वाद् ब्रह्मज्ञानसाध्यैव मुक्तिरिति फलफलिभावो द्रष्टव्यः ॥ १ ॥

एवं प्रथमसूत्रे ब्रह्ममीमांसायाः प्रतिपादितत्वात्तस्याश्च लक्षणप्रमाणसमन्वयाविरोधसाधनफलविषयतयाऽनेकविधत्वेऽपि प्रथमं ब्रह्मणः प्राधान्यात्तल्लक्षणार्थमिदं सूत्रम्—

( २ ब्रह्मणो लक्षणाधिकरणम् । सूत्रम् १ )

**जन्माद्यस्य यतः ॥ २ ॥**

अस्य पूर्वाधिकरणेन, संदिग्धत्वाद् ब्रह्म विचार्यमित्युक्तमयुक्तम् । जन्मादेरन्यनिष्ठत्वेन ब्रह्मणो लक्षणाभावेन स्वरूपस्यैवाभावाद् इत्येवंरूपाऽऽक्षेपसङ्गतिः । एवं पूर्वाधिकरणसिद्धान्तयुक्तिम् उत्तराऽधिकरणपूर्वपक्षयुक्तिं चाऽवेक्ष्य यथासम्भवमाक्षेपसङ्गतिस्तत्रतत्रोह्या । दृष्टान्तप्रत्युदाहरणसङ्गती च सर्वत्र सम्भवतः । प्रकृते तु यथा संदिग्धत्वेन हेतुना ब्रह्म विचार्य्यम्, एवं जन्माद्यन्यनिष्ठत्वेन हेतुना ब्रह्मणो लक्षणं नास्तीतिदृष्टान्तसङ्गतिः। यथा विचार्यत्वे हेतुः, न तथा लक्षणसद्भावे हेतुरस्तीति प्रत्युदाहरणसङ्गतिः । पूर्वसूत्रस्थब्रह्मलक्षणपरीक्षणात्तदेवाऽत्र फलम् । अस्येदं विषयवाक्यम् । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्मेति । प्रयन्ति म्रियमाणानीत्यर्थः । तथाच म्रियमाणानि सन्ति अभिसंविशन्तीतिवाक्यार्थः । अत्र श्रूयमाणं जन्मा-

---

१ फलफलिभावः सम्बन्धः – पूर्वपक्षसिद्धान्तयोरिति शेषः ।

२ ब्रह्मणः प्राधान्यात् – जिज्ञासायाः सकाशात् प्रथमोक्तत्वेन ब्रह्मणः प्राधान्यम् । अभ्यर्हितं पूर्वमिति न्यायात् ।

३ लक्षणाभावेन – अन्यनिष्ठस्यात्मलक्षणाभावेन ।

४ ऊह्या – ज्ञातव्या तर्कणीया । ५ प्रत्युदाहरणम् – उदाहरणस्योदाहरणं प्रत्युदाहरणम् । ६ तदेव – लक्षणपरीक्षणमेव ।

ऽऽदिकं, ब्रह्मलक्षणं ? न वेति सन्देहः। जन्मादेः प्रपञ्चनिष्ठत्वेन ब्रह्मसम्बन्धाऽभावान्न तल्लक्षणत्वमिति प्राप्तम्। न च, सत्यं ज्ञानमित्यादिवाक्यस्थं, सत्यादिलक्षणं भवत्विति वाच्यम्। लोकसिद्ध[1]भिन्नार्थानामेकब्रह्म[2]लक्षणत्वेन अप्रसिद्धत्वादिति प्राप्ते, अभिधीयते। जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणं तटस्थम्। सत्यादिकं तु स्वरूपलक्षणम्। नच लोकसिद्धाभिन्नार्थत्वात् सत्यदीनामेकब्रह्मलक्षणत्वमप्रसिद्धमिति वाच्यम्। सत्यादिपदानामखण्डाऽर्थत्वेनैकब्रह्मपर्यवसायित्वेन सत्यादीनां लक्षणत्वसंभवादिति ॥

सूत्रार्थस्तु—जन्म आदिर्यस्येति[3] तद्गुणसंविज्ञानो[4] बहुव्रीहिः। जन्मस्थितिभङ्गं समासार्थः। पूर्वसूत्रस्थब्रह्मपदानुषङ्गः। तच्छब्दाध्याहारः। तेनाऽस्य प्रत्यक्षाद्युपस्थितस्य प्रपञ्चस्य, जन्मस्थितिभङ्गं यतो भवति तद् ब्रह्मेत्यर्थः। यद्यप्यऽव्यभिचाराज्जन्मादिकारणत्वं प्रत्येकं लक्षणं संभवति, तथाप्युत्पादकत्वमात्रं निमित्तेऽपीत्युपादानसिद्ध्यर्थं त्रितयग्रहणम्। नच लयग्रहणेनैव तत्सिद्धौ शेषपदवैय्यर्थ्यमिति वाच्यम्। न ह्युपादानत्वं कुलालधर्मतयोच्यते। किन्तु प्रकृतिविकारन्यायेनाऽद्वितीयब्रह्मसिद्धा-

---

१ लोकसिद्धभिन्नार्थानां—सत्यादिपदानाम्। २ ब्रह्मलक्षणत्वेन अप्रसिद्धत्वात्—सत्यादिपदार्थानामनेकलक्षणत्वात्तेषां ब्रह्मलक्षणाऽङ्गीकारे ब्रह्मणो बहुत्वं स्यात्। तस्य भावस्तत्त्वं, तस्मात् ॥ ब्रह्मपर्यवसायित्वेन एकब्रह्मतात्पर्यवत्त्वेन, अखण्डैकब्रह्मबोधकत्वेन ॥

३ अस्य—जन्मादिसमूहस्य ॥ ४ तद्गुणसंविज्ञानो बहुव्रीहिः—तद्गुणसंविज्ञान इत्यत्र तदा बहुव्रीह्यर्थो गृह्यते। तस्य गुणत्वेन संविज्ञानं सम्यक्साक्षात्कारो यत्र समासे, स तथा। सर्वस्य विशेषणत्वे समासाऽयोगात् तदेकार्थदेशस्तथा। तेन विशेष्यैकदेशं विशेषणं कृत्वा समासो भवतीति यावत् ॥ ५ प्रकृतिविकारन्यायेन मृद्विकारन्यायेन, सुवर्णकटकादिन्यायेन, स्वप्नादिन्यायेन च, कार्य-

ऽर्थम् । एवञ्च भवतु ब्रह्मोपादानम् । कुलालवदधिष्ठाताऽन्य एवाऽस्तु । राज्यस्थितौ, राजवच्चान्य एव स्थितौ कर्त्तास्त्वित्याशङ्का मा भूदिति त्रितयग्रहणं कृतमिति ॥ २ ॥

एवं जगत्कारणत्वेन ब्रह्मणः सर्वज्ञत्वमर्थादुक्तम् । तद् आर्थिकसर्वज्ञत्वं, हेत्वन्तरेण समर्थयितुमाह—

( ३ । ब्रह्मणो वेदकर्तृत्ववेदैकमेयत्वाधिकरणम् । सूत्रम् । १ । )

शास्त्रयोनित्वात् ॥ ३ ॥

शास्त्रं वेदः[२] । तद्योनित्वं तत्कर्तृत्वम् । सर्वज्ञकल्पवेदकर्तृत्वादपि ब्रह्म सर्वज्ञमित्यर्थः । अत्र सर्वज्ञत्वाऽनिर्द्धारणं पूर्वपक्षफलम् । तन्निर्द्धारणं सिद्धान्तफलम् ॥

अथवा वेदस्य नित्यत्वाद् ब्रह्मणो विश्वयोनिता नेति शङ्कामपाकर्त्तुं शास्त्रयोनित्वमुच्यते । अस्मिन् पक्षे, श्रौतप्रतिज्ञयैव सङ्गतिः । पूर्वसूत्रोक्तजगत्कारणत्वस्यैव समर्थनात् । अस्य महतो भूतस्य, निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद इत्यादिवाक्यमस्य सूत्रस्य विषयः । अस्य नित्यसिद्धस्य ब्रह्मणो निश्वास इवाऽनायासेनैव वेदः सिद्ध इत्यर्थः । अत्र, ब्रह्म वेदं करोति, न वेति संदेहे, न करोति । वाचा विरूप नित्ययेति नित्य-

कारणयोर्मायिकत्वसमर्पणात् ॥ १ सर्वज्ञत्वं विचित्रनानाविधाऽतर्क्यज्ञानवत्त्वम् । चित्त्वेन सर्वाधिष्ठानवत्त्वम् ॥ २ शास्त्रं वेदः । शास्ति उपदिशति सर्वदुःखनिवृत्तिं, परमानन्दावाप्तिमिति शास्त्रं वेद एव । अन्येषां तद्‌थाऽनुकूलत्वाच्छास्त्रत्वम् । विरुद्धत्वे अशास्त्रत्वमेव ॥ पूर्वाधिकरणेन सहास्याधिकरणस्योपोद्घातसङ्गतिर्हेतुहेतुमद्भावसङ्गतिर्वा बोध्या । अस्मिन् पक्षे पूर्वाधिकरणेना स्याऽऽक्षेपसङ्गतिर्बोध्या । वेदस्य सर्वार्थप्रतिपादकत्वेन सर्वज्ञकल्पत्वम् ॥

त्वश्रवणात् । अस्मिन्मन्त्रे, विरूपेति देवतां सम्बोध्य, नित्यया वाचा स्तुतिं प्रेरयेति, प्रार्थ्यते । अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा * आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तय इति स्मृतेः । अतो न वेदकर्तृत्वं ब्रह्मण इति, न जगद्योनित्वमिति प्राप्ते ब्रूमः । निश्वसितन्यायेन, वेदोत्पत्तिश्रवणात् । तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे इति सर्वैर्यज्ञैर्हूयमानाद्यज्ञशब्दवाच्याद् ब्रह्मणो, जज्ञिरे इति, वेदकर्तृत्वप्रतीतेर्विश्वयोनित्वम् । एतदनुरोधेन, वाचेत्यादिश्रुतिस्मृत्योरर्थवादत्वम् । न च वेदस्य सकर्तृत्वे पौरुषेयत्वम्, उपलभ्य विरचितत्वानङ्गीकारादिति ॥

अस्य सूत्रस्य द्वितीयं वर्णकम्[1] । पूर्वसूत्रे जन्मादिकारणत्वकथनेनाङ्कुरादिकं सकर्तृकं कार्यत्वाद् घटवदित्यनुमानमपि ब्रह्मणि प्रमाणमित्याशङ्का स्यात्तन्माभूदितीदमुच्यते । ब्रह्म न मानान्तरवेद्यम् । कुतः । शास्त्रयोनित्वात् । शास्त्रं वेदो, योनिः प्रमाणं यस्य । तत्त्वादित्यर्थः । तं त्वौपनिषदं पुरुषं पृच्छामीत्युपनिषद्वेद्यत्वप्रतीतेः । नाऽवेदविन्मनुते तं बृहन्तमिति श्रुत्या स्पष्टं मानान्तरनिषेधाच्च । अनुमानं त्वनुकूलतर्कतयैवोपयुज्यते, न स्वातन्त्र्येणेत्यभिप्रायः । ननु, यतो वाचो निवर्तन्त इति श्रुतेर्वेदवेद्यत्वं कथमितिचेन्न । लक्षणया वृत्तिविषयत्वेन, शास्त्रयोनित्वं, चैतन्याऽविषयत्वेनाऽप्रमेयत्वमित्यविरोधादिति ॥ ३ ॥

पूर्वसूत्रे द्वितीयवर्णके ब्रह्मणः शास्त्रप्रमाणकत्वमुक्तम् । तदाक्षिप्य समाधीयते । तथाचाऽऽक्षेपसङ्गतिः । फलं तु पूर्वपक्षे उपनिषत्सु मुमुक्षुप्रवृत्त्यनुपपत्तिः । सिद्धान्ते प्रवृत्तिसिद्धिरिति । वेदान्ताः कर्मशेषभूतकर्त्रादिपराः? उत नित्यशुद्धबुद्धमुक्तब्रह्मपरा

१ वर्णकं– वर्णयतीति वर्णकं, व्याख्यानम् ॥

एवेति संशये, न ब्रह्मपराः । अहेयानुपादेयसिद्धब्रह्मपरत्वे निष्प्रयोजनत्वसापेक्षत्वयोः प्रसङ्गात् । तदुभयनिवारणाय, कर्तृदेवतादिप्रतिपादनद्वारा कर्मपरत्वमिति प्राप्ते, सिद्धान्तः—

( ४ । वेदान्तानां ब्रह्मैकपरत्वाधिकरणम् । सूत्रम् १ )

### तत्तु समन्वयात् ॥ ४ ॥ ( १ )

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद् ब्रह्म वेदान्तेषु तात्पर्येण प्रतिपाद्यते । कुतः । समन्वयात् । सम्यगन्वयः समन्वयस्तस्मा-

---

१ तत्तु समन्वयात्— अखण्डसच्चिदानन्दस्वरूपत्वप्रतिपादनात् संसर्गविशिष्टाद्यर्थासम्भवात् । ननु सत्यादिपदानामनेकलक्षणत्वात्तेषां ब्रह्मलक्षणाङ्गीकारे बहुत्वं स्यादिति चेन्न । एकब्रह्मतात्पर्यवत्त्वेनाऽखण्डैकब्रह्मबोधकत्वात् । तथाचोक्तमाचार्यैः—

संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मत इति ॥

श्रुतिस्तात्पर्यदृष्ट्या भागत्यागलक्षणया ब्रह्म बोधयति । ननु वेदान्तानां कर्तृदेवतादिप्रतिपादकत्वेनार्थवादत्वं कथं न स्यादिति चेन्न । अपूर्वार्थप्रतिपादकत्वेन सापेक्षत्वाभावात् । परमपुरुषार्थतया परब्रह्मप्रकरणस्थत्वाच्च । विधिरहितानामपि तेषां तात्पर्येण परिपूर्णब्रह्माखण्डैकत्वप्रतिपादनाच्च । अन्वितार्थे शक्तिग्रहादपि वेदान्तानां विध्यपेक्षितत्वं नास्ति । प्रकरणान्तरासिद्धत्वेन तत्प्रतिपादितप्रमेयानां न सम्भवति । स्वप्रकरणस्थत्वेन प्राधान्यात् । अपूर्वार्थप्रतिपादकत्वेन च सापेक्षत्वाभावात् ॥

कार्यपरकलिङ्—लोट्—तव्यप्रत्यय—पञ्चमलकारयुक्तवाक्यस्यैवापूर्वार्थप्रतिपादकत्वेन प्रामाण्यं, तद्व्यतिरिक्तानां वाक्यानां न बोधकत्वमिति न नियमः । सप्तद्वीपा वसुमती, रामो गच्छति, पुत्रस्ते जातः, कन्या ते गर्भिणीत्यादिवाक्यानां केवलान्वितेऽपि शक्तिग्रह-

दर्शनात् । तस्मान्न क्रियापरा वेदान्ताः । रज्जुरियं, नायं सर्प इति सिद्ध-बोधेनापि दुःखनिवृत्तिदर्शनात् । ननु वेदान्तेभ्यो ब्रह्मसिद्धिमिच्छतां वृत्तिकाराणां भर्त्तृप्रपञ्चादीनामुपासीत ध्यायीत इत्याद्युपासनाविधीनां विषयतया वेदान्ता बोधकाः । उपासनाबोधकत्वेन ब्रह्मसिद्धिमिच्छतां न स्वार्थसिद्धिः । किन्तु सर्वसाक्षितया नित्यचिद्रूपपरिपूर्णत्वेन ब्रह्मातिरिक्तवस्त्वभावात् । मुख्याद्वैतमेव वेदान्तमहावाक्यानां तात्पर्यम् । सर्वतत्त्वज्ञानामपि संमतोऽयमर्थः । उपासनापरत्वे गौणत्वमनर्थत्वं च स्याद्वेदान्तानाम् । तच्चानिष्टं सर्वविवेकिनाम् । तथाचोक्तं सर्वतत्त्वविच्छ्रेष्ठवार्त्तिककारैः—

भावनाजं फलं यत् स्याद् यच्च स्यात् कर्मणः फलम् ।
न तत्स्थास्न्विति मन्तव्यं परस्त्रीगमनं यथा, इति ॥

तस्मान्नोपासनाबोधकत्वमपि मुख्यत्वेन वेदान्तानाम् । ज्ञानस्य वस्त्वधीनत्वादपि । तथाहि । यद् वस्तु यादृशं वर्त्तते तमेव ज्ञानं बोधयति, तदेव प्रमाज्ञानं, वस्तु नान्यथा करोति । घटज्ञानं घटाकारमेव जायते, न पटाकारम् । यथार्थबोधो हि प्रमा । सिद्धान्ते चिदेव प्रमा । अनधिगताऽबाधितज्ञानत्वं स्मृतिव्यावृत्तं तु व्यावहारिकम् । नच कर्मोपासनाबोधकत्वं मुख्यं वेदान्तानाम् । सर्वतत्त्वज्ञसम्प्रदायबहिर्भूतत्वात् । अहं ब्रह्मास्मीति ज्ञानं, ज्ञानातिरिक्तकालाऽव्यवधानेन जायमानत्वेनाऽविद्याध्वंसकत्वाद् बाधकत्वाद्, न कर्मोपासनाबोधकत्वं, प्रत्युत द्वैतस्योपमर्द्दकत्वमेव । एवं यादृशं ब्रह्माऽद्वितीयं वस्तु परिच्छेदरहितं शुद्धमस्ति, तदेव वृत्तिज्ञानमहं ब्रह्मास्मि बोधयति । चिन्मात्रं सन्तं ब्रह्माऽद्वितीयं, जडं द्वितीयभेदसहितं जीवाभिन्नसन्तं ब्रह्मभिन्नत्वेन बोधयेच्चेत् तदा वेदान्तानां प्रामाण्यमेव न स्यात् । द्वैतस्य स्वयमेव सर्वलोकसिद्धत्वादयमस्मात् पृथगिति । अपूर्वत्वञ्च वेदान्तानां न स्यात् । तथाचोक्तं भगवता वेदव्यासेन महाभारते—

अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा, इति ॥

श्रुत्याप्येवमुक्तम् । तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जना इति । आत्मा सच्चिदानन्दोऽद्वितीयः, कर्त्तृत्वभोक्तृत्वरहितः । तं विपरीतं मन्यमानः आत्महा भवतीति श्रुत्यर्थः । चतुर्विधक्रियाविलक्षणत्वादप्यात्मस्वरूपस्य वेदान्तानां कर्मोपासनाबोधकत्वं मुख्यत्वेन न

त् । अन्वयस्य सम्यक्त्वं तात्पर्यवत्त्वम् । वेदान्ता न कर्त्रादिप्रतिपादकाः । भिन्नप्रकरणस्थत्वात् । नच प्रकरणभेदादुपासनाविधिपरा इति वाच्यम् । तत्त्वमस्यादीनां विधिरहितानां बहुलमुपलब्धेः । स्वरूपज्ञानादपि, नायं सर्प इतिवदनर्थनिवृत्तेः प्रयोजनस्य सद्भावादपि विधिशेषत्वकल्पनाऽयोगात् । न च

सम्भवति । तथाहि । नात्मनः कर्मत्वं, क्रियाजन्यफलशालित्वाभावात् । असङ्गत्वात् । यथा घट उत्पत्त्यादिक्रियाशाली, न तथात्मा । मूर्त्तत्वाभावाद्, व्यापकत्वाच्च । आत्मन्युत्पत्त्यादिचतुर्विधक्रियाफलानित्यत्वसंबन्धाभावात् । सर्वसाक्षित्वादात्मत्वादेव, कर्मत्वाभावः । तथा न विकार्यत्वमप्यात्मनः । अन्यथाभावो विकारस्तद्वान् विकार्यो यथा दुग्धाद्दधि। अविकृतपरिणामोऽपि न सम्भवति, कटकादिवत् । तत्रापि क्रियासत्त्वेनाऽविकारित्वं न सम्भवति । किन्तु स्वप्नरज्जुसर्पादिवच्च ब्रह्मविवर्त्तोऽयं प्रपञ्चः । अतात्त्विकान्यथा भावो विवर्त्त इति लक्षणसत्त्वात् । गुणाधानलक्षणसंस्काराभावाद् दोषापनयाभावाच्च । गुणाधानं नाम गुणोत्पादनम् । यथोपनयनादिना संस्कारेण यज्ञोपवीतादिना, द्विजन्मनो वेदाध्येतृत्वरूपगुणाधानं, न तथात्मनोऽसङ्गत्वात् । नाऽपि दोषापनयः संस्कारः । ब्रह्मणो निष्क्रियत्वात् । दर्पणादेवन्मलनिवृत्तिरूपक्रियापि न सम्भवति । सदा शुद्धत्वादात्मनः । यथा, व्रीहीनवहन्तीत्यादौ कार्यान्तरयोग्यताऽऽपादनरूपसामान्यसंस्कारः । सोऽपि नात्मनि नित्यशुद्धबुद्धमुक्ताऽद्वितीयत्वात् । तस्मान्न वेदान्तानां मुख्यतया कर्मोपासनाप्रतिपादकत्वं, किन्त्वखण्डैकरस सच्चिदानन्दाद्वितीयबोधकत्वमेवेति समन्वयपदार्थ इति यावत् ॥

१ भिन्नप्रकरणस्थत्वात्– परमपुरुषार्थतया परब्रह्मप्रकरणस्थत्वात् ।

२ विधिरहितानां – वास्तवैक्यप्रतिपादकानाम् ॥

३ विधिशेषत्वं – विध्यनुकूलत्वं, वेदान्तानां न सम्भवति, ज्ञानानान्तरं द्वैताऽप्रतीतेः ॥

सापेक्षत्वम्[1] । रूपादिविहीनस्य ब्रह्मणः प्रमाणान्तराऽगम्यत्वेन तत्प्रतिपादकवेदान्तानां सापेक्षत्वाऽभावात् । तस्मादुपक्रमादि-लिङ्गैर्वेदान्तानां ब्रह्मपरत्वमेवेति उपक्रमादिकं च दृश्यते । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । आत्मा वा इदमेक एवाग्र आसीत्, तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्, अयमात्मा ब्रह्म सर्वानुभूः, ब्रह्मैवेदममृतं पुरस्तादित्यादिश्रुतीनामयमर्थः। सदित्य-स्तितामात्रं बोध्यते।एवेत्यवधारणे।किं तदवध्रियते तदाह इदमिति। यदिदं व्याकृतं जगदग्रे उत्पत्तेः प्राक् सदेवाऽऽसीत् । अव्याकृतं सत् कारणात्मकं, सदेवासीदित्यर्थः । हे सोम्य, प्रियदर्शनेति, पित्रा पुत्रः सम्बोध्यते । बुद्धिग्राह्यं स्थूलं पृथिव्यादि प्रागुत्पत्ते-र्मा भूद्, अन्यत्तु महदादिसूक्ष्ममासीदेवेति, नेत्याह । एकमिति । सतोऽन्यत् कार्यं नासीदेवेत्यर्थः । तथापि मृदो घटाकारपरि-णामयितृकुलालवज्जगन्निमित्तं सतोऽन्यदासीदित्याशङ्क्याऽऽह । अद्वितीयमिति । सतोऽपि, चित्त्वं विना प्रधानवन्न हेतुतेत्याश-ङ्क्य, श्रुत्यन्तरमुदाहृतम् । आत्मा वा इति । आप्नोतीत्यात्मा । मूलकारणम् । वैशब्देन प्रागवस्था स्मर्य्यते । अवशिष्टमुक्तार्थम्। तस्य निर्विशेषत्वार्थं, श्रुत्यन्तरम् । तदेतदिति।तच्छब्देन, इन्द्रो मायाभिरिति प्रकृतात्मोक्तः । विधेयं ब्रह्माऽपेक्ष्य, नपुंसकमेतद् यत्तद् ब्रह्मेत्यर्थः। तत् किंलक्षणकम् ? । तत्राह । अपूर्वमिति । पूर्वं कारणं यस्य नास्ति तदपूर्वमकार्यमित्यर्थः । अपरं कार्यं वास्तवं यस्य नास्तीत्यनपरमकारणमित्यर्थः । अन्तरं जात्य-

[1] सापेक्षत्वम् – अर्थवादत्वं, विध्यपेक्षितत्वं प्रमाणान्तरसिद्धत्वं वा वेदान्तानां तत्प्रतिपादितप्रमेयानां न सम्भवन्ति, स्वप्रकरणस्थत्वेन प्राधान्यात् ॥

न्तरमन्तराले यस्य नास्तीत्यनन्तरमेकरसमित्यर्थः । तथाविध-मन्यदपि तटस्थमस्तीति किं, नेत्याह। अबाह्यमिति। बाह्यमनात्म-भूतमेवंविधमस्य नास्तीत्यबाह्यमद्वितीयमित्यर्थः । तस्याऽपरोक्ष-तामाह । अयमिति । तत्सर्वेसिद्ध्यर्थं, चित्स्वरूपमाह । सर्वे-ति । ब्रह्मात्मना सर्वमनुभवतीति सर्वानुभूः। अनुभाव्यस्य पृथ-क्त्वान्नाऽद्वैतमित्याशङ्क्य श्रुत्यन्तरं, ब्रह्मेति । यत् पुरस्तात् । पूर्वस्यां दिश्यब्रह्मेवाऽविदुषां भाति, तत्सर्वमिदममृतं ब्रह्मैव वस्तुत इत्यर्थः ॥

एवं लौकिकवाक्यानां सिद्धेऽर्थेऽप्रामाण्यमभ्युपगच्छतां वेदान्तेषु विधिपरत्वं विनाऽनपेक्षत्वं फलवत्त्वं च न लभ्यते इति वदतां वेदान्तेभ्यो ब्रह्मसिद्धमनङ्गीकुर्वतां मतं, ब्रह्मणो मानान्तराऽगम्य-त्वात् सिद्धवस्तुज्ञानात् फललाभाच्च प्रत्युक्तम् । सम्प्रति सिद्धे व्युत्पत्तिमनिच्छतामुपास्तिविधिद्वारा वेदान्तेभ्यो ब्रह्म-सिद्धिमिच्छतां मतनिरासाय वर्णकान्तरमारभ्यते । तत्र वेदान्ता विधेयोपासनाविषयत्वेन ब्रह्म समर्पयन्ति, उत साक्षादिति सिद्धे व्युत्पत्त्यऽभावभावाभ्यां संशये, पूर्वपक्षः । प्रवृत्त्यादिलिङ्गा-ऽभावान्न सिद्धे व्युत्पत्तिः सम्भवतीति । न सिद्धब्रह्मपरा वेदा-न्ताः । किञ्च प्रवृत्तिनिवृत्तिपरस्यैव शास्त्रत्वेन, सिद्धब्रह्मपरत्वे, शास्त्रत्वं च न सम्भवति । नाऽपि प्रयोजनवत्त्वम् । अहं ब्रह्मा-ऽस्मीति ज्ञाने सत्यपि प्रयोजनस्याऽदर्शनात् । यद्येवम्भूतज्ञाना-त् प्रयोजनसिद्धिस्तर्हि मननादिविधानं न स्यात् । तस्मादात्मे-त्येवोपासीत, ब्रह्म वेद ब्रह्मैव भवति । ब्रह्मभवनकामो ब्रह्म-वेदनं कुर्यादित्येवमादिषु विधिषु कोऽसावात्मेत्याकाङ्क्षायां त-त्समर्पकत्वेन सर्वे वेदान्ता उपयुज्यन्ते । उपासनासाध्यश्च मोक्ष इति । उच्यते ॥ तत्तु समन्वयात् ॥ ४ ॥

तद् ब्रह्म साक्षाद्वेदान्तप्रतिपाद्यम् । कुतः । समन्वयादित्यर्थः । न तावदुपासना साध्यो मोक्षः । उपासनायास्तारतम्येन, तत्साध्यमोक्षस्यापि तारतम्यमनित्यत्वं च स्यात् । विधेयकर्मफलभोगदशायां शरीरस्याऽवश्यकत्वेन मोक्षेऽपि शरीरं स्यात् । किञ्चाऽशरीरं वा व सन्तं न प्रियाप्रिये स्पृशत इति मुक्तस्य प्रियाप्रियस्पर्शनिषेधो न स्यात् । मोक्षस्य धर्मफलत्वेन तस्यैव प्रियस्य विद्यमानत्वात् । श्रुत्यर्थस्तु— वस्तुतोऽशरीरं सन्तमात्मानं वैषयिके सुखदुःखे नैव स्पृशतः।वा वेत्यवधारणादिति । ननु धर्मजन्याशरीरत्वाख्यमोक्षातिरिक्तसुखादिनिषेधपरमिदं वाक्यमिति चेन्न।अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति । अप्राणो ह्यमनाः शुभ्रः । असङ्गो ह्ययं पुरुष इत्यादिश्रुतिभ्योऽशरीरत्वस्य, स्वाभाविकत्वाऽवगमात् । श्रुतीनामयमर्थः । वस्तुतो नास्ति स्थूलशरीरम् । तत्र हेतुः— अशरीरं शरीरेष्विति । अनवस्थेष्वनित्येषु। अवस्थितं नित्यम् । तत्रैव हेत्वन्तरम्— महान्तमिति । आपेक्षिकं महत्त्वं वारयति । विभुमिति । मन्तृमन्तव्यभेदं प्रत्याह । आत्मानमिति । ईदृशम् आत्मानं मत्वा धीरो भवति।न हि तन्मतिं विना धीरत्वम् । स च शोकोपलक्षितं संसारं नाऽनुभवतीत्यर्थः। सूक्ष्मशरीराऽभावे श्रुतिः-- अप्राण इति। क्रियाशक्तिमान् प्राणोऽस्य वस्तुतो नास्तीति । तन्निषेधात् तत्प्रधानानि सार्थानि कर्मेन्द्रियाणि निषिद्धानि । तदभिप्रायेण हि शब्दः । ज्ञानशक्तिमन्मनोऽस्य वस्तुतो नास्तीति तन्निषेधात् तत्प्रधानानि ज्ञानेन्द्रियाणि सार्थानि निषिद्धानि । अत एव शुभ्रः शुद्ध इत्यर्थः । स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवतीति स्वप्नादिकृतकर्मस्वकर्त्तात्मेत्युक्तेऽर्थे हेतुरुच्यते । असङ्ग इति श्रुत्या । मूर्त्तं मूर्त्तान्तरेण युज्यमानं

स्पन्दते। आत्मा तु पूर्णत्वान्न मूर्त्तेन स्थूलसूक्ष्मशरीरादिना केन-चिद् युज्यते। तेनाऽकर्त्तेत्यर्थः। एवं स्वाभाविकाऽशरीरत्वाऽपरपर्याय–मोक्षाख्यब्रह्मणि सुखादिस्पर्शाभावे श्रुत्यन्तरमपि—अन्यत्र धर्मादन्यत्राऽधर्मादन्यत्राऽस्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वदेति। धर्मात् तत्फलाच्च सुखादधर्मात्तत्फलाच्च दुःखात् कृतात् कार्य्यादकृतात् कारणाद् भूतादतीताद् भव्याद्भाविनः। चशब्देन वर्तमानादन्यत्रान्यदित्यर्थः। एतत्सर्वासंस्पर्शीति यावत्। एवम्भूतं यत् पश्यसि तद्वदेति मृत्युं प्रति नचिकेतसो वचनम्। अपि च मोक्षस्य कर्मफलत्वे स्वर्गादिवन्मुमुक्षूपादेयत्वं न स्यात्। ब्रह्म वेद ब्रह्मैव भवति, क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति, अभयं वै जनक प्राप्तोऽसि तदात्मानमेवावेदहं ब्रह्मास्मीति, तस्मात्तत्सर्वमभवत्, तत्र को मोहः कः शोक एकत्वमनुपश्यतः, तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे। अहं मनुरभवं सूर्यश्चेतीत्येवमादीनां ब्रह्मविद्याकाल एव मोक्षं दर्शयन्तीनां बाधश्च स्यात्। कर्म्मफलानां कालान्तरभावित्वनियमात्। श्रुतीनामर्थस्तु, यो ब्रह्म प्रत्यक्षेन वेद साक्षात्करोति स तदैव वेद्यं ब्रह्म भवति। तस्मिन् परमात्मनि परं कारणम् अवरं कार्यं, तद्रूपे तदधिष्ठाने प्रत्यक्षेन साक्षात्कृते सति अस्य विदुषः। अभुक्तफलानि कर्माणि क्षीणानि भवन्ति, ब्रह्मणो रूपमानन्दं विद्वान् भयहेत्वभावान्निर्भयो भवति। इतिशब्दः श्लोकपूरणार्थः। हे जनक, त्वमभयं ब्रह्म प्राप्तोऽसि, तत्त्वसाक्षात्कारवत्त्वात्। यस्मिन् देहे जले सूर्यवत् प्रविष्टं ब्रह्म जीवाख्यं सदाचार्येण बोधितमात्मानमेव सर्वकल्पनाऽतीतमवेत् विदितवान्। कथम्। अहं ब्रह्माऽद्वितीयमस्मीति। तस्माज्ज्ञानादज्ञानकृता-

ऽसर्वज्ञत्वादिनिवृत्त्या, तद् ब्रह्म पूर्णात्मना स्थितमासीत् । यस्मिन् सर्वाणि भूतान्यात्मैवाऽभूद्विजानत इति यः सर्वात्मभावो विद्याऽव्यङ्ग्यत्वेनोक्तः । तत्रात्मनि तद्धीकाले वा तदात्मैक्यमुपदेशेन पश्यतः शोकाद्युपलक्षितः संसारो नेति तत् तत्पदलक्ष्यं ब्रह्म एतदात्मत्वेनाऽवस्थितमहमस्मीति पश्यन्, अस्मादेव दर्शनादृषिर्वामदेवाख्यः परं ब्रह्माऽविद्याध्वंसद्वारा, प्रतिपेदे प्रतिपन्नवान् किलेति । हशब्दोऽव्यवधानेन सम्बध्यते । स चास्मिन् दर्शने स्थितः सर्वात्मभावप्रकाशकान् अहं मनुरभवमित्यादीन् मन्त्राँश्च ददर्श । इतश्च ब्रह्मधीर्न विधेया तत्फलं च न वैधमिति गम्यते । तथाहि । त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि । श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति, सोऽहं भगवः शोचामि । तं मां भगवान् शोकस्य परं पारं तारयतु । तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार इत्याद्याः श्रुतयो ब्रह्मविद्याया अविद्यानिवृत्तिद्वारा मोक्षहेतुत्वं दर्शयन्ति । अविद्यानिवर्त्तकत्वं च प्रमाणवस्तुपरतन्त्रज्ञानस्यैवेति, न विधेया ब्रह्मविद्या । तत्फलं च न विधेयसाध्यमिति । श्रुतीनामेषोऽर्थः । भारद्वाजादयः षड् ऋषयः परविद्याप्रदं पिप्पलादाख्यं गुरुं विद्यानिष्क्रयार्थमन्यदननुरूपं पश्यन्तः पादयोः प्रणम्योचिरे — त्वं हि नः पितेति । त्वं खल्वस्माकं पिता । ब्रह्मदेहस्य अजरामरणस्य विद्यया जनयितृत्वात् । पितरौ तु हेयदेहमात्रमेव जनयतः । जनयितृत्वमपि, सिद्धस्यैव अविद्यानिरासादित्याह । यस्त्वम् अस्माकमविद्यामहोदधेः परम् अपुनरावृत्तिरूपं पारं तारयसि विद्याप्लवेनेति । श्रुतं हीत्यादिना तारयत्वित्यन्तमुपक्रमस्थं, शेषमुपसंहारस्थमिति भेदः । मे मया भगवद्दृशेभ्यः भगवत्तुल्येभ्यः श्रुतमेव, यदात्मवित् शोकं मन-

स्तापम् अकृतार्थबुद्धिं तरतीति । सोऽहमनात्मविच्छोचामि।अतस्तं मां शोचन्तं शोकसागरस्यापारस्य पारमन्तं तारयतु प्रापयतु, भगवानात्मज्ञानोडुपेनेति, नारदेन प्रेरितः सनत्कुमारः, तस्मै नारदाय, मृदितकषायाय वैराग्यादिना, क्षालितरागादिसमस्तदोषाय योग्याय, तमसः अविद्यायाः पारं परमात्मतत्त्वं दर्शितवानिति ॥

ननु ब्रह्मैव विधेयमस्तु । मुक्तेः फलस्य सत्त्वात् । न च ब्रह्मणोऽकारकत्वादविधेयता । ब्रह्म वेदेत्यादिना कर्मत्वप्रतीतेरितिचेन्न । फलाऽसम्भवस्योक्तत्वात् । ब्रह्मणः कृतिसाध्यत्वाऽभावेन, विधेयत्वानुपपत्तेश्च । नाऽपि कर्मत्वम् । किं विदिक्रियाकर्मत्वमुतोपासनाकर्मत्वम् । नाद्यः । अन्यदेव तद्विदितादथो अविदितादधि, येनेदं सर्वं विजानाति तं केन विजानीयादित्यादिना विदिक्रियाकर्मत्वनिषेधात् । न द्वितीयः । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासतेइत्युपासनाकर्मत्वप्रतिषेधात् । श्रुत्यर्थस्तु तद् ब्रह्म विदितात् कार्यादन्यदेव, अथोऽपिअविदितात् कारणादप्यन्यदेव । अधि उपरिष्टादप्यन्यदिति । येन प्रमात्रा इदं सर्वं वस्तु लोको जानाति, तं केन करणेन जानीयात् । करणस्य ज्ञेयविषयत्वाज्ज्ञातर्यऽप्रवृत्तेः । तस्मान्न ज्ञाता ज्ञेयः, किन्तु साक्षीति । यद्वाचाऽनभ्युदितं येन वागभ्युद्यते इत्यविषयत्वमुक्त्वा, तदेवेति प्रमात्रादेः कल्पनामपोह्य, आत्मभूतं ब्रह्म महत्तममिति त्वं विद्धि । यदुपाधिविशिष्टं, देवतादिकमिदमित्युपासते जनाः, नेदं ब्रह्म त्वं विद्धीत्यर्थः । इतश्च ब्रह्मणोऽकर्मत्वं गम्यते । यस्याऽमतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् । न हि दृष्टेर्द्रष्टारं पश्येर्न विज्ञातेर्विज्ञातारं विजानीया इत्यादिश्रुतयः, अविषयत्वं बोधयन्ति । यस्य

ब्रह्माऽमतम् अविषय इति निश्चयः, तस्य तन्मतं सम्यग् ज्ञातम्। यस्य तु मतं विषयतया ज्ञातुं शक्यं ब्रह्मेति धीः, नाऽसौ तद्वेद। भेदधीमत्त्वात् । एवमेवेति नियमार्थमुक्तार्थमनुवदति, अविज्ञातमिति श्रुतिः । विषयतयाऽज्ञातमेव ब्रह्म सम्यग्ज्ञातं, विशेषज्ञानवतां ज्ञातमेव विषयतया यथावदविजानतामिति बुद्धिमान् विषयतया न विजानाति, मूर्खस्तु विषयतया विजानातीति तात्पर्यार्थः । दृष्टेश्चक्षुर्जन्यायाः कर्मभूताया द्रष्टारं स्वभावभूतानित्यदृष्ट्या व्याप्तारं दृश्यमानया दृष्ट्या न पश्येः, विज्ञातेर्बुद्धिधर्मस्य निश्चयस्य विज्ञातारं साक्षिणं, तयैव वेद्यया विज्ञात्या विज्ञातारं न विजानीया इति मैत्रीयीं प्रति याज्ञवल्क्यवचनम् ॥

नन्वऽविषयत्वे कथं शास्त्रप्रमाणकत्वमितिचेन्न । तज्जन्याऽविद्याभ्रान्तिध्वंसरूपातिशयवत्त्वेन तद्विषयत्वसंभवादिति। किञ्च, न तावाद्विधेयक्रिययोत्पाद्यत्वं मोक्षस्य। तस्य स्वरूपत्वेनाऽनादित्वात् । न विकार्यः । अविकार्योऽयमुच्यते इति स्मृतेः । नाप्याऽऽप्यः।नित्याप्तत्वात् । नाऽपि संस्कार्यः। निर्गुणत्वेन गुणाधानलक्षणसंस्काराभावत् । नाऽपि दोषाऽपनयः संस्कारः संभवति । ब्रह्मणि क्रियाया अभावेन स्वानिष्ठक्रियया दोषापगमायोगात् । अन्यनिष्ठाक्रिययाऽन्यत्र संस्काराऽयोगात् । नच देहनिष्ठक्रिययाऽऽत्मनि संस्कारो दृष्ट इति वाच्यम् । देहादिसंहतनिष्ठक्रियया तस्यैव संस्कार्यत्वं,तत्फलभोक्तृत्वं चेत्यवगमात् । तथाच श्रुतिः । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति । आत्मीयं शरीरमात्मेत्युच्यते । तथाच शरीरादिसंयुक्तमात्मानं भोक्तेति मनीषिण आहुरित्यर्थः ।

यद्वा, आत्मेति भोक्तेत्याहुरिति संबन्धः । इन्द्रियेत्यादि क्रियाविशेषणम् । आत्मनि दोषाभावाच्च न दोषनिवृत्तिः संस्कारः संभ-

वति । निर्गुणत्वे निर्दोषत्वे श्रुतिरेव मानम् । तथाहि । एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा * कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च। स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं, शुद्धमपापविद्धमिति । अनयोर्मन्त्रयोरयमर्थः।मूर्त्तित्रयस्य ब्रह्मरुद्राद्यात्मनो भेदं प्रत्याह।एक इति। जाड्यं प्रत्याह। देव इति।ज्ञानघन इत्यर्थः।आदित्यादिवैषम्यमाह।सर्वेति। तर्हि, किमिति न प्रतीयते ? तत्राह।गूढ इति।अनादिमाययाच्छन्न इत्यर्थः।तत्तद्भूतावच्छिन्नत्वेन परिच्छिन्नत्वं नेत्याह। सर्वव्यापीति। नभोवत्ताटस्थ्यं वारयति सर्वभूतान्तरात्मेति। सर्वेषुभूतेष्वन्तःस्थितस्य तत्तत्क्रियाकर्तृत्वं नास्तीत्याह । कर्मेति । सर्वकर्मसाक्षीत्यर्थः । सर्वभूतेष्वित्यादिना भूतानां पृथगुक्तेः । सद्वितीयत्वमाशङ्क्याह । सर्वेति । सर्वेषां भूतानामधिवासोऽधिष्ठानम् । न च कल्पितमधिष्ठानादर्थान्तरमित्यर्थः । न केवलं कर्मणामेवाध्यक्षः, अपि तु तत्कर्तृणामपीत्याह । साक्षीति । साक्षित्वे हेतुमाह । चेता इति । चित्स्वभाव इत्यर्थः । केवलो दृश्यवर्जितः अद्वयः । निर्गुणो ज्ञानादिगुणरहितः । चकारो दोषाऽभावसमुच्चयार्थः । गुणदोषाऽभावे मन्त्रान्तरं, सपर्यगादिति । सः, यस्मिन् सर्वाणि भूतानीति प्रकृतात्मा परितः समन्ताद् अगात् सर्वतोगत इत्यर्थः। शुक्रमित्यादिशब्दाः पुँल्लिङ्गत्वेन नेयाः । स इत्युपक्रमात् । शुक्रो दीप्तिमान् । अकायो लिङ्गशरीररहितः । अव्रणः । अक्षतः । अस्नाविरः अनाशिरः । आभ्यां स्थूलशरीराभाव उक्तः । शुद्धो रागादिगुणरहितः । अपापविद्धो,धर्माऽधर्मविधुर इति। तस्मान्न संस्कार्यो मोक्षः । तस्मान्न कर्त्तव्यविधिशेषतया ब्रह्मोपदेशसम्भवः । यत्तु सिद्धे प्रवृत्त्यादिलिङ्गाभावान्न शक्तिग्रह इति । तन्न । प्रवृत्तिनिवृत्ती एव लिङ्गमिति, न निर्बन्धः। पुत्रस्ते जात

इत्यादौ हर्षादिलिङ्गेनाऽपि शक्तिग्रहसम्भवात् । यत्तु प्रवृत्त्यादिपरस्यैव शास्त्रत्वमिति । तदपि न । हितशासनाद्वेदान्तानां शास्त्रत्वोपपत्तेः । नाऽपि फलाऽभावः । ब्रह्मात्मसाक्षात्कारस्य, मोक्षफलकत्वात्तादृशसाक्षात्कारार्थं मननादिसार्थक्यं चेति न कथञ्चिदपि विधिप्रवेशः । ब्रह्मात्मावगतेः प्रवृत्त्यादिनिरपेक्षाया मोक्षहेतुत्वं श्रुतिरपि दर्शयति । आत्मानं चेद्विजानीयादयमस्मीति पूरुषः * किमिच्छन् कस्य कामाय शरीरमनु संज्वरेदिति । अयं परमात्माऽहमस्मीत्यऽपरोक्षतया यदि कश्चित् पुरुषो विजानीयात् । आत्मसाक्षात्कारदौर्लभ्यं द्योतयति चेच्छब्दः।सः, स्वातिरिक्तमात्मनः किं फलमिच्छन् कस्य वा पुत्रादेः कामाय फलाय,तदऽलाभेन शरीरं तप्यमानम् अनु तदुपाधिः सन् संज्वरेत् तप्येतेति ॥

नन्वऽशरीरत्वाऽऽख्यमोक्षस्य स्वाभाविकत्वं सिद्धवत्कृत्य, न धर्मजन्यत्वमित्युक्तम् । शरीरदशायामऽशरीरत्वस्याभावेन धर्मजन्यत्वसम्भवादिति चेन्न । सशरीरत्वस्य मिथ्यात्वेनाऽशरीरत्वस्य स्वाभाविकत्वात् ।तथाच ब्रह्मविद्विषया श्रुतिः । तद्यथाऽहिनिर्ल्वयिनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते अथायमऽशरीरोऽमृतः प्राणो ब्रह्मैव तेज एवेति । सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इवेति च । अनया श्रुत्याऽहं ब्रह्मास्मीति ज्ञाने सत्यपि मुक्तिर्न दृश्यते, किन्तु यथापूर्वं संसारित्वमेवेति शङ्काऽपि परिहृता भवति । श्रुत्योरर्थस्तु अत्र ब्रह्म समश्नुते इति पूर्ववाक्यं जीवन्मुक्तिरुक्ता । स जीवन्मुक्तो देहस्थोऽपि पूर्ववन्न संसरतीत्यत्र दृष्टान्तमाह । तद्यथेति । तत्र जीवन्मुक्तदेहे ईदृशे देहे, दृष्टान्तो-यथेति । यथा लोकेऽहिनिर्ल्वयिनी सर्पविमुक्तत्वक्,

वल्मीके प्रत्यस्ता प्रक्षिप्ता मृता पूर्वमिव सर्पेणात्मत्वेनाऽगृहीता वर्तते, एवमेवेदं विदुषः शरीरं प्रागिवाऽऽत्मत्वेनाऽगृहीतं तिष्ठतीत्यर्थः । त्वचा साम्यं शरीरस्योक्त्वा सर्पसाम्यं विदुषो दर्शयति । अथेति । तथार्थकोऽथशब्दः । यथा प्रत्यस्तां त्वचमहिरहमिति नाऽभिमन्यते तथाऽयं जीवन्मुक्तो देहस्थोऽपि, न तत्राऽहंधियमादधातीत्यऽशरीरः । अशरीरत्वादेव अमृतः, देहाभिमानवतो हि मृतिः । निरुपाधिकः सन्, प्राणिति जीवतीति प्राणः, साक्षी । स च ब्रह्म एव । तच्च तेजो विज्ञानज्योतिः । अनया स्थूलदेहस्य मिथ्यात्वं दर्शयित्वा, सचक्षुरिति श्रुत्या लिङ्गशरीरस्य मिथ्यात्वं दर्शयति । वस्तुतोऽचक्षुरपि, बाधितचक्षुराद्यनुवृत्त्या सचक्षुरिवेत्यादियोजना । तस्माद्वेदान्ताः साक्षादेव ब्रह्मणि समनुगता, न विधिद्वारेति सिद्धम् । ब्रह्म स्वतन्त्रमेव शास्त्रप्रमाणकमिति ॥ ४ ॥

एवं चतुर्भिः सूत्रैः सर्वज्ञं सर्वशक्ति जगत्कारणं वेदान्तप्रतिपाद्यं ब्रह्मेत्युक्तम् । वस्तुतस्तच्चेतनमचेतनं वा इति संशयः । तत्र सांख्याः—कूटस्थब्रह्मणो ज्ञानक्रियाशक्त्यभावान्न जगत्कारणत्वं, प्रधानस्य तु तत्सत्त्वाज्जगत्कारणत्वम् । सत्त्वगुणमादाय ज्ञानशक्तिमत्त्वं, त्रिगुणत्वात् क्रियाशक्तिमत्त्वम् । ब्रह्मण एकत्वान्न क्रियाशक्तिः । तस्मात् सर्वज्ञं सर्वशक्ति प्रधानमेव । तदनुवादका वेदान्ता इति वदन्ति । तन्मतनिरासार्थमिदं सूत्रमारभ्यते—

( ५ । ब्रह्मण एव सच्छब्दवाच्यताऽधिकरणम् । सूत्राणि ७ )

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

सांख्यपरिकल्पितं प्रधानं, जगत्कारणं न भवति । तत्र हेतुः— अशब्दमिति । हेतुगर्भं विशेषणमेतत् । अशब्दत्वादवेद-

प्रमाणकत्वादित्यर्थः । वेदाऽप्रामाणकत्वे हेतुः— ईक्षतेरिति ॥ धातुवाचकेक्षतिशब्दो लक्षणया धात्वर्थेक्षणपरः। ईक्षितृत्वश्रवणादित्यर्थः । अस्य चाक्षेपसङ्गतिः । फलं च प्रधानैक्यसंपदुपास्तिः पूर्वपक्षे । सिद्धान्ते तु ब्रह्मैक्यप्रमितिरिति विवेकः । एवं हि श्रूयते । सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयमित्युपक्रम्य, तदैक्षत बहु स्यां प्रजायेयेति । तत्र प्रधानस्यैवोपक्रमे ईक्षितृत्वश्रवणं विरुध्येत । ईक्षणस्य चेतनधर्मत्वात् । नच ब्रह्मणो ज्ञानक्रियाशक्त्यभावः । अविद्यामहिम्ना सर्वस्याप्युपपत्तेः । सत्यप्रधानपरमाणुप्रेरक ईश्वरः सद्वितीय ईक्षितेति पातञ्जलादिमतनिराकरणार्थं, श्रुतावेकमिति पदम् । उपादानस्य चेतनत्वार्थं तदैक्षतेति। उपादानत्वार्थं तु बहु स्यामिति । एवमेवैतरेयश्रुतिः— आत्मा वा इदमेक एवाऽग्र आसीन्नान्यत् किञ्चन मिषत् । स ऐक्षत लोकानुसृजा इति, स इमाँल्लोकानसृजतेतीक्षणपूर्विकामेव सृष्टिमाचष्टे । मिषत् चलत् सत्त्वाक्रान्तमिति यावत् । एवं सर्वत्र ईक्षणपूर्वकसृष्टिश्रवणाद् ब्रह्मैव जगत्कारणमिति ॥ ५ ॥

नन्वीक्षणमात्रेण, न ब्रह्म जगत्कारणमिति निश्चयः । तत्तेज ऐक्षत,ता आप ऐक्षन्तेत्यऽचेतनयोरप्यप्तेजसोरीक्षणश्रवणात् तत्समभिव्याहारात् प्रधानेऽपि ईक्षतिर्गौण इति प्राप्ते, उच्यते—

गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

अप्तेजसोरिव प्रधानेऽपि ईक्षतिर्गौण इतिचेन्न । कुतः ? । आत्मशब्दात् । आत्मशब्दस्य श्रवणादित्यर्थः । सदेव सोम्येदमग्र आसीदित्युपक्रम्य, तदैक्षत तत्तेजोऽसृजतेति तेजोऽबन्नानां सृष्टिमुक्त्वा तदेव प्रकृतं सदीक्षितृ तानि च तेजोऽबन्नानि देवताशब्देन परामृश्याह । सेयं देवतैक्षत हंताहमिमास्तिस्रो देवता

अनेन जीवेनाऽऽत्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुतिः । तत्र यद्यचेतनं प्रधानमेवेक्षितृ तदा सेयं देवतैक्षतेति तस्यैव परामार्शात्तदात्मत्वेन जीवकीर्तनमनुपपन्नं स्यात् । आत्मा हि स्वरूपम् । न च चेतनो जीवोऽचेतनस्याऽऽत्मा । ब्रह्मणि तु जीवविषय आत्मशब्द उपपद्यते । स य एषोऽणिमैतदात्म्यमिदं सर्वं, तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति, श्वेतकेतोर्जीवस्याऽऽत्मना तादात्म्योपदेशात् । न हि चेतनस्य चेतनाऽभेदे शङ्काशूकः । नचाऽप्तेजसोर्गौणेक्षणश्रवणात् तत्प्रायपठितत्वेन, तदैक्षतेत्यादौ गौणेक्षणमेवेति वाच्यम् । संशयस्थल एव प्रायपाठस्य निश्चायकत्वात् प्रकृते तु गौणमुख्ययोर्गौणस्य जघन्यत्वेन संशयाऽभावात् । अत एव भगवान् जैमिनिः, विशये प्रायदर्शनादिति । संशयस्थले प्रायदर्शनस्य निश्चायकत्वमाह । अप्तेजसोस्तु नैवं मुख्यत्वे किञ्चित्कारणमस्तीति गौणमीक्षणं, कूलं पिपतिषतीतिवत् । श्रुत्यर्थस्तु— आकाशं वायुं च सृष्ट्वा, तत् सदेवेत्युपक्रान्तं, सच्छब्दवाच्यं ब्रह्म, तेजःसृष्टिवदिति प्रकृतसदात्मा परामृश्यते, सेयमिति सन्निहितेक्षितृपरामर्शो, देवतेति अलौकिकमुक्तमीक्षणमभिनयति, हंतेति । सृष्टिवाक्येनोक्तानि तेजोऽबन्नानि परामृशति, इमा इति । सूक्ष्मभूतास्तिस्रो देवता मया सृष्टा इत्यर्थः । सूक्ष्मत्वेन परोक्षत्वाद् देवताशब्दप्रयोगः । तासां व्यवहाराङ्गत्वं कथमित्यत आह । अनेनेति । अनेन पूर्वसृष्ट्यऽनुभूतेन प्राणधृतिहेतुना जीवेनाऽऽत्मना तद्रूपेणोक्तदेवतासर्गानन्तरं नाम रूपं चेति निस्तत्त्वमासमन्तात् करवाणीति पराऽधिदेवतेक्षितवतीत्यर्थः । यः सदाख्यः स एषोऽणिमा अणुरित्यर्थः । दुर्विज्ञेय इति यावत् । ऐतदात्म्यम् । एतदात्मकम् । भावभावित्रोरभेदात् । परं सूक्ष्मं, सर्वात्मकं सदेव सत्यं पारमार्थिकं तत्त्वम् । स एव सर्व-

स्याऽऽत्मा । वास्तवं निरुपचरितस्वरूपम् । हे श्वेतकेतो ! त्वं च संसारी नासि, किन्तु तदेव ब्रह्म इत्यऽक्षरयोजना ॥ ६ ॥

नन्वात्मशब्दोऽपि प्रधाने गौणोऽस्तु, नानार्थकतया मुख्यो वा इत्यत आह —

तन्निष्ठस्यमोक्षपदेशात् ॥ ७ ॥

न प्रधानमात्मशब्दवाच्यम् । तत् सत्यं, स आत्मेति प्रकृतं सदणिमानमादाय तत्त्वमसि श्वेतकेतो इति श्वेतकेतोश्चेतनस्य, मोक्षयितव्यस्य तन्निष्ठतामुपदिश्य, आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्षेऽथ संपत्स्य इति मोक्षोपदेशात् । यदि ह्यचेतनं प्रधानं, सच्छब्दवाच्यं मुमुक्षुं श्वेतकेतुं चेतनं, तत्त्वमसीति शास्त्रं ग्राहयेत्, हे श्वेतकेतो ! चेतन । अचेतनोऽसीति । तदा शास्त्रप्रामाण्यादचेतनोऽस्मीति ध्यायमानो, मोक्षाद् व्याहन्येत, अनर्थं चेयात् । तथाच शास्त्रमुन्मत्तप्रलापो भवेत् । तच्चाऽनिष्टम् । तस्माच्चात्मशब्दश्चेतनपर इति। ऐक्याऽपरोक्ष्यप्रतिबन्धकनिवृत्तिमाह श्रुतिः,आचार्यवानिति। उक्तप्रमित्या सर्वबन्धनिवृत्त्या देहादिदृष्टेरपि निवृत्तिप्राप्तौ, आरब्धकर्मणा तद्दृष्ट्यनुवृत्तिमाह । तस्येति । कथन्तर्हि प्रारब्धकर्मनिवृत्तिरित्याशङ्क्य भोगादित्याह । यावदिति । प्रारब्धध्वस्तावपि, कथं देहादिध्वंस इत्याशङ्क्याऽप्रतिबन्धादित्याह ।अथेति। उत्तमपुरुषस्तूभयत्र प्रथमपुरुषे छान्दसत्वादिति ॥ ७ ॥

ननु स्थूलारुन्धतीन्यायेन प्रधानोपदेशद्वारा आत्मोपदेशोऽयमस्तु । तत्राह—

हेयत्वाऽवचनाच्च ॥ ८ ॥

यद्यनात्मैव प्रधानं सच्छब्दवाच्यं, स आत्मा तत्त्वमसीति

इहोपदिष्टं स्यात्, सन्तत उपदेशश्रवणादनात्मज्ञतया तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदर्शयिषु * शास्त्रं तस्य हेयत्वं ब्रूयात्। यथाऽरुन्धतीं दिदर्शयिषुस्तत्समीपस्थताराया हेयत्वं ब्रूते तद्वदित्यर्थः । एकविज्ञानात् सर्वविज्ञानोपक्रमाविरोधसमुच्चयार्थश्चशब्दः । तथाहि । उत तमाऽऽदेशमप्राक्षो येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति।कथं नु भगवः स आदेशो भवतीति । यथा सोम्यैकेन मृत्पिण्डेन, सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । एवं सोम्य स आदेशो भवतीतिवाक्ये एकविज्ञानात् सर्वविज्ञानोपक्रमः श्रूयते स विरुध्येत । प्रधानविज्ञानात्तद्विकारविज्ञानेऽपि भोक्तृवर्गविज्ञानाऽसम्भवादिति । श्रुत्यर्थस्तु, हे श्वेतकेतो, येन श्रुतेन शास्त्रतोऽन्यदश्रुतमपि श्रुतं भवति । येन मतेन तर्कतोऽन्यदमतमपि मतं भवति।येन विज्ञातेनाऽन्यदविज्ञातमपि विज्ञातं भवति तमादेशम्, आदिश्यते इत्यादेशः शास्त्राचार्योक्तिगम्यं वस्तु, अप्राक्षः पृष्टवानसि त्वमाचार्यमिति पितृवाक्यार्थः । अन्यज्ञानादन्यं न ज्ञेयमिति पुत्रो ब्रूते, कथं नु भगव इति । कार्यस्य कारणाद्भाऽन्यत्वमित्याह । यथेति । ज्ञातेऽपि मृत्पिण्डे कथं तद्विकारधीरित्यत आह । वाचेति । यो विकारः, स वागालम्बनमुच्यते, परं न वस्तुतोऽस्तीत्यर्थः । तत्र हेतुः, नामधेयमिति । नाममात्रमेव, नार्थतोऽस्तीत्यर्थः । तर्हि मृद्घटयोरभेदे घटनाशे मृदोऽपि नाशः स्यादत आह । मृत्तिकेति।घटो मृद्भिन्नत्वेन, निर्वक्तुं न शक्यत इति स ततोऽभिन्न एव । मृत्तु घटाद्भिद्यते इति न दोषः ॥ ८ ॥

सदेव सोम्येति सच्छब्दवाच्यं प्रधानमितोऽपि न भवतीत्याह-

* ०पदिदिक्षु इति वा पाठः ।

स्वाप्ययात् ॥ ९ ॥

तदेव सच्छब्दवाच्यं कारणं प्रस्तुत्य, श्रूयते— यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति । तस्मादेनं स्वपितीत्याऽऽचक्षते । स्वं ह्यपीतो भवतीत्येषा श्रुतिः पुरुषस्य लोकप्रसिद्धं स्वपितिनाम निर्वक्ति । स्वशब्देन सच्छब्द-वाच्याऽऽत्मा परामृश्यते । स्वं प्रत्यपीतो भवति लीनो भवति । अपिपूर्वस्य इतेर्लयार्थत्वात् । सुषुप्त्यवस्थायामुपाधिकृतविशेषा-ऽभावात् स्वात्मनि प्रलीन इवेति स्वं ह्यपीतो भवतीत्युच्यते । तथा-च सूत्रार्थः । स्वस्मिन् प्रकृते सच्छब्दवाच्यात्मनि अप्ययात् लय-श्रवणादिति । तत्र यदि प्रधानमेव स्वब्देनोच्येत तदा चेतनो-ऽचेतनमप्येतीति विरुद्धं स्यात् । श्रुत्यन्तरं च, तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवाऽयं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति सुषुप्त्यवस्थायां चेतनेऽप्ययं दर्शयति । अतो यस्मिन्नप्ययः सर्वेषां चेतनानां तच्चेतनं सत् सच्छब्दवाच्यं जगत्कारणम् ॥ ९ ॥

किञ्च,

गतिसामान्यात् ॥ १० ॥

गतेः सर्वेषु वेदान्तेषु चेतनकारणाऽवगतेः समत्वादित्यर्थः । न हि क्वचिदपि विरुद्धमुपलभ्यते, कुत्रचिद्वाक्ये चेतनं कारणं कुत्रचिदचेतनमिति । किन्तु सर्वत्र चेतनमेव कारणमुपलभ्यते । यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैत-स्मादात्मनः सर्वे प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवा देवेभ्यो लोका इति, तस्माद् वा एतस्मादात्मन आकाशः सम्भूत इति, आत्मन एवेदं सर्वमिति आत्मन एव प्राणो जायते

इत्याद्याः श्रुतय आत्मन एव कारणत्वं दर्शयन्ति । आत्मशब्दश्चेतनपर इत्युक्तम् । यथाऽग्नेरित्यादेरयमर्थः । विस्फुलिङ्गप्रसङ्गार्थे, ज्वलत इति । विप्रतिष्ठेरन् नानागतित्वेन दिशो विप्रसृताः स्युः । प्राणाश्चक्षुरादयः, यथायतनं यथागोलकं, विप्रातिष्ठन्ते विविधमुद्गच्छन्तीति यावत् । प्राणेभ्योऽनन्तरमादित्यादयो देवास्तदनुग्राहकास्तेभ्योऽनन्तरं लोक्यन्ते इति लोका विषया भवन्तीत्यर्थः । प्राणो हिरण्यगर्भः ॥ १० ॥ ३१,६०२

किञ्च,

श्रुतत्वाच्च ॥ ११ ॥

स्वशब्देनैव सर्वज्ञेश्वरो जगतः कारणमिति श्रूयते, श्वेताश्वतराणां मन्त्रोपनिषदि— ज्ञः कालकालो गुणी सर्वविद्य इति । सर्वज्ञमीश्वरं प्रकृत्य स कारणं करणाधिपाधिपो नचाऽस्य कश्चिज्जनिता नचाधिप इति । ज्ञः सर्वज्ञः कारणम् । स कारणमिति कारणत्वोक्तेः सर्वज्ञता विशेषतः । सर्वविद्यः स सर्वज्ञः कारणम् । तस्य सर्वेश्वरत्वमाह । करणेति । करणानीन्द्रियाणि तेषामधिपाः स्वामिनो जीवास्तेषामधिपः परमेश्वरः । तस्य सर्वहेतुत्वमाह । न चेति । सर्वजीवान् प्रतीश्वरत्वं हिरण्यगर्भस्याप्यस्तीति, ततो विशेषमाह । न चाऽधिप इति । तस्य नियन्ता स्वयं, न स्वस्य नियन्ताऽस्तीत्यर्थः । तस्मात् सर्वज्ञं ब्रह्म जगत्कारणं, नाऽचेतनं प्रधानमन्यद्वेति सिद्धम् । अस्मिन्नधिकरणे गुणसूत्राणि षट् ॥ ११ ॥

नन्वेवमथात इत्यारभ्य, श्रुतत्वाच्चेत्येतदन्तैः सूत्रैः सर्वेषां वेदान्तानां सर्वज्ञसर्वशक्तिब्रह्मपरत्वं समर्थितम् । किमपरमवशिष्टं, यदर्थमुत्तरसूत्रसन्दर्भ इतिचेदुच्यते । निर्विशेषब्रह्मणः स्वरूपेणोपदेशाऽयोगात् किञ्चिदुपाध्युपहितत्वेनोपदेश इति वक्तव्यम् । तत्र

कस्मिन् वाक्ये उपाधिर्विवक्षितः, कस्मिन् वाक्ये न विवक्षित इत्याकाङ्क्षायां तद्विवेचनार्थमुत्तरसूत्रसन्दर्भोऽर्थवानिति ॥

तथैव सविशेषं निर्विशेषं च ब्रह्म श्रूयते । यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, अथ यत्राऽन्यत् पश्यति अन्यच्छृणोत्यन्यद्विजानाति तदल्पं, यो वै भूमा तदमृतम् अथ यदऽल्पं तन्मर्त्यम् । सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते इत्यादिसविशेषवाक्यानि । यत्र तु सर्वमात्मैवाऽभूत् तत् केन कं पश्येत् ,यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् । स एष नेति नेत्यात्मा, अस्थूलमनण्वित्यादिनिर्विशेषवाक्यानि ब्रह्मणो द्विरूपतां दर्शयन्ति । तत्र कानिचित् क्रममुक्त्यर्थान्युपासनानि, कानिचिदभ्युदयार्थानीति बोध्यम् । श्रुत्यर्थस्तु– यत्र यस्यां खल्वऽविद्यावस्थायां तुच्छमपि द्वैतं सदिव भाति तत्र इतरः संसारी सन् इतरं पश्यति द्रष्ट्रयादिगोचरमुपाधिमद्वस्तुं वदतीत्यर्थः । यस्मिन्नाऽऽत्मनि द्रष्टव्यादि चक्षुरादिनाऽनुसन्धत्ते तदल्पं, परिच्छिन्नमुपहितमिति यावत् । भूम्नोऽल्पस्य च विशेषान्तरमाह । यो वा इति । अथेति द्योतितो विशेषोऽनेन प्रकटितः । सर्वज्ञ ईश्वरो नामरूपादिकं विश्वं निर्माय तत्र प्रविश्य जीवरूपेणाऽभिवदनादि कुर्वन् योऽवतिष्ठते अन्तर्यामी तं विद्वानिहैवाऽमृतो भवतीत्यर्थः । यत्र यस्यां विद्यावस्थायाम् अस्य विदुषः, सर्वं कर्त्रादि, आत्माऽतिरेकेणाऽसदेवाऽऽसीत् तत्र केन करणेन कं विषयं को वा कर्त्ता पश्येदित्याक्षेपाद् अव्यवहार्य्यमनौपाधिकं तत्त्वमित्यर्थः । यत्र भूम्नि स्थितो विद्वान् अन्यद् द्रष्टव्यं चक्षुषा न पश्यति,अन्यच्छ्रोतव्यं श्रोत्रेण न शृणोति, न चान्यन्मन्तव्यं

ज्ञातव्यं वा मनसा बुद्ध्या वा मनुते जानाति, स भूमा दृष्ट्याद्यऽगोचरो निरतिशयमहत्त्वसम्पन्नः परमात्मेत्यर्थः । निष्कलं निरंशम् । अत एव, निष्क्रियम् । निष्क्रियत्वादेव शान्तं परिणामरहितम् । अत एव निरवद्यं रागादिरहितं, निरञ्जनं धर्मादिरहितमित्यर्थः । यद्वा निष्कलत्वान्निरञ्जनं, जडसंबन्धशून्यमित्यर्थः । यथा मृद्दारुमयः सेतुर्नदीकुल्यादिपरकूलप्राप्तेरुपायः,तथा संसारसागरस्य परम्पारं,परं ब्रह्म तद्भावस्याऽमृतत्वस्य, वाक्योत्थबुद्ध्यभिव्यक्तं सत् साधनं, सेतुवदवस्थितं, वाक्योत्थज्ञानस्य कथं नाशस्तत्राह । दग्धेति। यथा दग्धेन्धनोऽग्निः शाम्यति तथा ज्ञानमपीत्यर्थः । इतीदमर्थे । इदं न इदं नेति निषेधाऽवधिभूत आत्मेत्यर्थः । तथा सविशेषनिर्विशेषपरं वाक्यान्तरमपि,न्यूनमन्यत्स्थानं संपूर्णमन्यादिति । अस्याऽर्थः । निष्प्रपञ्चादन्यदुपास्यं गुणानां स्थानं न्यूनं परिछिन्नं ततोऽन्यन्निष्प्रपञ्चं मुक्तोपसृप्यं, त्रिविधपरिच्छेदशून्यं, सच्चिदाऽऽनन्दात्मकं, संपूर्णमपरिच्छिन्नमिति । एवञ्च यत्र सगुणवाक्ये गुणविवक्षा, तत्रोपासना भवति । यत्र तु श्रूयमाणोऽपि गुणो न विवक्षितस्तद्वाक्यं ज्ञेयब्रह्मपरमितिनिर्णयार्थमुत्तरसूत्रसंदर्भ इति फलितम् ॥

( ६ । ब्रह्मण आनन्दमयताधिकरणम् । सूत्राणि ८ )

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

पूर्वं तावत् सर्वेषां वेदान्तानां निर्गुणब्रह्मपरत्वमुत्सर्गतः सिद्धम् । तत् सगुणवाक्यदर्शनेनाऽपोह्य सगुणवाक्याविचारः प्राप्तः । तमपोह्येदमधिकरणं निर्गुणविचारात्मकमारभते । यद्यप्यपवादापवादकत्वादस्य सगुणविचाराऽऽनन्तर्यं युक्तं, तथापि पूर्वाधिकरणं, संशयाऽभावात् प्रायपाठो न निश्चायक इत्युक्ते-

रन्योऽन्तरआत्मानन्दमय इत्यत्र मयटो विकारे प्राचुर्ये च, मुख्य-त्वात् संशये, विकारप्रायपाठो निश्चायकोऽस्त्विति पूर्वाधिकरण-सिद्धान्तयुक्त्यऽभावेन प्रवृत्तत्वात् प्रत्युदाहरणलक्षणासङ्गति-रस्तीति सगुणविचारात् प्रागिदमारभ्यते। पूर्वपक्षे जीवस्या-ऽऽनन्दमयत्वेनोपास्तिः फलं, सिद्धान्ते निर्गुणब्रह्मप्रमितिरिति सिद्धान्तगत्या। एकदेशिमते तूभयत्रोपास्तिरिति विवेकः। तैत्तिरीयकेऽन्नमयप्राणमयमनोमयविज्ञानमयकोशचतुष्टयानन्तरं, तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय इति श्रूयते। तत्र संशयः। किमानन्दमयशब्देन, सत्यं ज्ञानमिति प्रकृतं परं ब्रह्मोच्यते उतान्नमयादिविकारवद् ब्रह्मणोऽर्थान्तरं जीव इति, तत्राऽन्नमयादिविकारप्रायपाठादस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठा इत्यादिना प्रियाद्यवयवयोगात्, तस्यैष एव शारीर आत्मेति शारीरत्वश्रवणाच्च जीव इतिप्राप्तम्।तस्य पूर्वोक्तस्य विज्ञानमयस्य एष आनन्दमय एव शारीर आत्मेति श्रुत्यर्थः।एवं प्राप्ते, उच्यते। आनन्दमयोऽभ्यासात्, आनन्दमयः परमात्मा भवितुमर्हति। कुतः।अभ्यासात्।आनन्दमयशब्दस्य ब्रह्मण्येव बहुकृतोऽभ्यासा-दित्यर्थः। तथाहि। आनन्दमयं प्रस्तुत्य रसो वै स इति तस्यैव रसत्वमुक्त्वोच्यते। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति। को ह्येवान्यात् कः प्राण्यात यदेष आकाश आनन्दो न स्यात्। एष ह्येवाऽऽनन्दयाति सैषानन्दस्य मीमांसा भवति, एतमानन्दमय-मात्मानमुपसंक्रामति, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति, आनन्दोब्रह्मेति व्यजनादिति बहुधाऽभ्यासः श्रूयते।नचानन्दपद-स्यैवाभ्यासो,नाऽऽनन्दमयपदस्येतिवाच्यम्। वसन्ते वसन्ते ज्योति-षा यजेतेत्यत्र ज्योतिःपदस्य ज्योतिष्टोमपरत्ववदानन्दपदस्यानन्द-

मयपरत्वात् । श्रुत्यर्थस्तु रसः सार आनन्द इत्यर्थः। अयं जीवः पूर्णानन्दः सर्वसाक्षी सर्वप्रेरको न स्याच्चेत्तर्हि प्राणादेरचेतनस्य चेष्टा न युक्तेत्याह । को हीति।अन्याज्जीवेत्, प्राण्याद् निश्वसेत् ।यत् यदि।आनन्द इत्यनन्तरं प्रेरक इति शेषः। आनन्दयितृत्वादपि परमानन्दत्वमित्याह । एष हीति। आनन्दयतीत्यर्थः । यातीति दीर्घत्वं छादसम् ।स्वयं धनी परं धनिनं करोति लोके, तद्वत् स्वयमानन्दः परमानन्दयतीति । यत्तु प्रायपाठादानन्दमयस्य विकारित्वमिति ।तन्न । स्थूलारुन्धतीन्यायेनाऽन्नमयादिविकाराऽमुख्यात्मप्रदर्शनस्यात्मज्ञानार्थत्वेनाऽऽनन्दमयस्य सर्वान्तरत्वात् स एवात्मेत्यवधारणात् । अनन्तरमन्यस्याऽऽत्मनोऽनुपदेशात् सर्वान्तरत्वमवगम्यते । विज्ञानकोशवशादौपाधिकप्रियाद्यवयवयोगो न विरुध्यते । ब्रह्मणोऽन्नमयादिकोशपरम्परया शारीरत्वमप्युपपन्नमेव। शारीरजीवप्रातिबिम्बत्वादीश्वरस्य । तस्मादानन्दमयः परमात्मा ॥ १२ ॥

विकारशब्दान्नेतिचेन्न प्राचुर्यात् ॥ १३ ॥

ननु नानन्दमयं ब्रह्म । कुतः । विकारार्थकमयट्प्रत्ययात् । ब्रह्मणश्चाऽऽनन्दविकारत्वाऽनुपपत्तेरितिचेन्न । कुतः । प्राचुर्यात् । मयटः प्रकृते आनन्दप्राचुर्यवाचकत्वादित्यर्थः ॥ १३ ॥

मयटः प्राचुर्यार्थकत्वे हेत्वन्तरमाह—

तद्धेतुव्यपदेशाच्च ॥ १४ ॥

तमानन्दं प्रति ब्रह्मणो हेतुत्वव्यपदेशादित्यर्थः । एष ह्येवानन्दयातीति ब्रह्मण आनन्दहेतुत्वं व्यपदिश्यते । योऽन्यानाऽऽनन्दयति स प्रचुरानन्द इति प्रसिद्धम् ॥ १४ ॥

अतश्चानन्दमयः परमात्मेत्याह—

मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

यद् ब्रह्मविदाप्नोति परमित्युपक्रम्य, सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायामित्यस्मिन्मन्त्रे सर्वान्तरं ज्ञेयत्वेनोक्तं, तन्मान्त्रवर्णिकं ब्रह्म । अन्योऽन्तर आत्मानन्दमय इति गीयते । मन्त्रब्राह्मणयोरैकार्थ्यात् । यद्यप्यत्र व्याख्यानव्याख्येयभावाऽभावेन न मन्त्रब्राह्मणभावस्तथापि ब्राह्मणस्य व्याख्यानरूपत्वेन व्याख्येयमन्त्रं प्रत्युपायत्वात्, प्रकृतेऽप्युपेयोपायभावोऽस्तीति मान्त्रवर्णिकमित्युक्तम् ॥ १५ ॥

इतश्चानन्दमयः परमात्मा, न जीव इत्याह—

नेतरोऽनुपपत्तेः ॥ १६ ॥

ईश्वरादितरो जीवो, नाऽऽनन्दमयः । कुतः । अनुपपत्तेः । सोऽकामयतेति सृष्टेः पूर्वमीक्षणं, बहु स्यां प्रजायेयेति सृष्ट्यात्मकत्वम् । स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजतेति सृष्टिहेतुत्वं च श्रूयते । तत्सर्वस्याऽनुपपत्तेरिति सूत्रार्थः । जीवज्ञानस्य शरीरसाध्यत्वादीक्षणाऽनुपपत्तिर्बोध्या । श्रुतौ तपःशब्द ईक्षणपरः ॥ १६ ॥

किञ्च,

भेदव्यपदेशाच्च ॥ १७ ॥

नानन्दमयो जीवः । कुतः । जीवानन्दमययोर्भेदेन व्यपदिश्यमानत्वादित्यर्थः । तथा च श्रूयते— रसो वै सः, रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवतीत्यानन्दमयस्य लब्धव्यत्वेन, जीवस्य लब्धृत्वेन भेदव्यपदेशः । न हि लब्धैव लब्धव्यो भवति ॥ १७ ॥

नन्वानन्दमयशब्देन प्रधानमुच्यतां, तत्राह—

कामाच्च नाऽनुमानापेक्षा ॥ १८ ॥

अनुमीयत इत्यनुमानम्, अनुमानैकगम्यं, प्रधानमित्यर्थः। आनन्दमयत्वेन कारणत्वेन वा प्रधानस्य नापेक्षा न स्वीकारः। कुतः। कामात्। आनन्दमयाधिकारे सोऽकामयतेति कामयितृत्वश्रवणादित्यर्थः। न ह्यचेतने प्रधाने, कामः सम्भवति। ईक्षतेर्नाऽशब्दमित्यत्र निराकृतमपि प्रधानं, गतिसामान्यप्रपञ्चनाय पुनर्निराकृतमिति बोद्धव्यम् ॥ १८ ॥

अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

इतश्च न जीवे प्रधाने वाऽऽनन्दमयशब्दः। यस्मादस्मिन्नानन्दमये प्रकृते, आत्मनि, अस्य प्रबुद्धस्य जीवस्य तद्योगं तदात्मना योगस्तद्योगस्तद्भावापत्तिर्मुक्तिरित्यर्थः। तं शास्ति शास्त्रं, तस्मादित्यर्थः। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति, यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवतीति शास्त्रम्। अस्यार्थः। यस्यामैक्यज्ञानावस्थायामेष विद्वानेतस्मिन ब्रह्मणि, पञ्चीकृतभूतपञ्चकेन तत्कार्येण समष्टिस्थूलदेहेन, विराजा दृश्यशब्दात्मकेन, तादात्म्यशून्ये दृश्यभिन्ने, स्वसम्बन्धितयाऽध्यस्तेन्द्रियजातेनाऽपञ्चीकृतभूतकार्येणाऽऽत्म्येन, तादात्म्यहीनेऽनात्म्ये। निष्कृष्योत्पद्यन्ते इति निरुक्तानि भूतसूक्ष्माणि तैश्चाऽभेदवर्जितेऽनिरुक्ते, निःशेषलयस्थानं निलयनं सकलकार्य्यसंस्काराधाराविद्यातदभेदशून्ये प्रकर्षेण स्थितिं पुनरावृत्तिरहिततां लभते। अभयं यथा स्यादित्युक्तं व्यनक्ति। अथेति ज्ञानफलमुक्त्वा ज्ञानाऽभावे दोषमाह श्रुतिः। यदा हीति। यदाऽस्मिन्नानन्दमये ब्रह्मणि अल्पमप्यन्तरम् अतादात्म्यस्वरूपं पश्यति तदा संसारभयान्न निवर्त्तत इत्यर्थः। इदं शास्त्रं प्रधान-

परिग्रहे जीवपरिग्रहे वा न घटत इति । तस्मादानन्दमयः परमात्मेति सिद्धम् ॥ इदं त्वेकदशिमतम् ॥

भगवत्पादास्तु, अभ्यस्यमानानन्दस्यानन्दमये लक्षणा। अन्योऽन्तर आत्मानन्दमय इत्यत्रानन्दमयपदस्य प्राचुर्यार्थकत्वे ब्रह्मणि दुःखलवप्रसङ्गः स्यादिति प्रचुरानन्दे लक्षणा । ब्रह्मपुच्छं प्रतिष्ठेत्यत्र ब्रह्मपदस्यावयवविशेषे लक्षणेति मुख्यात्रितयलङ्घनं, विकारप्रायपाठपरित्यागश्चैकदेशिमते स्यात् । स्वपक्षे तु, ब्रह्मपुच्छमित्यत्र पुच्छपदस्यावयवप्रायपाठपरित्यागमात्रमिति मन्वानाः, आनन्दमय इति मयट् विकारार्थक एवेति वदन्तः सूत्राण्यन्यथा व्याचक्रुः । अधिकरणरचना तु– ब्रह्मपुच्छं प्रतिष्ठेत्यत्र किमानन्दमयावयवत्वेन ब्रह्मोच्यते उत स्वप्रधानत्वेनेति ब्रह्मपुच्छशब्दाभ्यां संशयः, ईक्षत्यधिकरणे, संशयाऽभावात् प्रायपाठस्य न निश्चायकत्वमिह तु पुच्छपदस्यावयवाधारत्वयोर्लक्षणासामान्यात् संशयेऽवयवप्रायपाठस्य निश्चायकत्वमिति प्रत्युदाहरणसङ्गतिः, प्रयोजनं च पूर्वमुक्तं, तत्र पुच्छशब्दादवयवत्वे प्राप्ते, उच्यते—

आनन्दमयोऽभ्यासात्॥ आनन्दमयशब्देनानन्दमयवाक्यस्थब्रह्मपुच्छं प्रतिष्ठेत्यत्र, विद्यमानं ब्रह्मपदमुपलक्ष्यते, तद् ब्रह्मपदं स्वप्रधानं ब्रह्मपरम्। कुतः । अभ्यासात् । असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरित्यादौ, ब्रह्मपदस्याऽभ्यासादिति । ननु पुच्छशब्दादवयवपरत्वमिति, तत्राह॥ विकारशब्दान्नेति चेन्न, प्राचुर्यात्॥ विकारशब्दादवयवपरपुच्छशब्दान्न तत्समानाधिकरणं ब्रह्मपदम् । स्वप्रधानब्रह्मपरमिति चेन्न । कुतः । प्राचुर्यादवयवशब्दोपपत्तेः । प्राचुर्यं चात्राऽवयवप्रायप्रयोगः । एवञ्चाऽन्नमयादीनां पुच्छान्तानऽवयवानुक्त्वाऽऽनन्दमयस्यापीतरावयवोक्तौ पुच्छस्य बुद्धौ सन्निधाना-

दपुच्छमपि ब्रह्म पुच्छमित्युक्तं श्रुत्या । न हि ब्रह्मणो मुख्यं पुच्छत्वमानन्दमयस्य परमात्मत्वपक्षेऽपि युक्तम् । स्वं प्रति स्वस्य पुच्छत्वानुपपत्तेः।तस्माद् ब्रह्मपुच्छवत् पुच्छं सर्वाधिष्ठानं प्रतिष्ठा-परायणं, लौकिकस्याऽऽनन्दजातस्याऽऽधार इत्यर्थः । सर्वा-धारत्वात् प्रतिष्ठापदसमभिव्याहारादाधारलक्षणायुक्तेति । इतश्च पुच्छशब्देनाऽऽधारो लक्ष्यत इत्याह ॥ तद्धेतुव्यपदेशाच्च ॥ तस्य ब्रह्मणो विकारजातं प्रति हेतुत्वेन, इदं सर्वमसृजतेति वाक्य-व्यपदेशादित्यर्थः । न हि स्वविकारमानन्दमयं प्रति ब्रह्मणो-ऽवयवत्वं संभवति मुख्यत इति, स्वप्रधानं ब्रह्मपुच्छं, ज्ञेयत्वेन विवक्षितमिति॥ मान्त्रवर्णिकमेव च गीयते ॥ यत् सत्यं ज्ञानमि-त्यादिमन्त्रवर्णप्रकाशितं ब्रह्म तद् ब्रह्मपुच्छं प्रतिष्ठेति ब्राह्मण-वाक्ये स्वप्राधान्येन गीयते । मन्त्रब्राह्मणयोरैक्यार्थ्यादित्यर्थः। इतश्चानन्दमयोऽत्र न प्रतिपाद्यः । तस्य वैषयिकप्रियाद्यवयव-योगेन स्रष्टृत्वाद्यनुपपत्तेरित्याह ॥ नेतरोऽनुपपत्तेः ॥ ब्रह्मपुच्छं प्रतिष्ठेत्यत्र ब्रह्म स्वप्रधानं, नेतरः। कुतः । अनुपपत्तेः। ब्रह्मणो-ऽवयवत्वेऽवयव्यानन्दमयोऽत्र प्रतिपाद्य इति वक्तव्यम् । न हि तत् संभवति। सावयवस्याग्रिमवाक्योक्तस्रष्टृत्वाद्यनुपपत्तेरि-त्यर्थः । अतो ब्रह्म स्वप्रधानम् ॥ इतश्चात्र पुच्छवाक्ये ब्रह्म स्वप्रधानमित्याह॥ भेदव्यपदेशाच्च॥ रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति।अयमानन्दमयो जीवो, रसशब्दितं ब्रह्मानन्दं प्रतिबिम्बितं लब्ध्वाऽऽनन्दी भवतीति लब्धृलब्धव्यरूपेण भेदव्यपदेशा-दित्यर्थः । [illegible] ब्रह्मपुच्छक आनन्दमयोऽत्र न प्रतिपाद्य इत्याह ॥ कामाच्च नानुमानापेक्षा ॥ काम्यते इति काम-आनन्दस्तस्य ब्रह्मत्वदृष्टेर्नानुमानेनाऽऽनन्दमयस्याऽपि ब्रह्म-त्वमपेक्षितव्यम् । विकारार्थकमयड्विरोधादित्यर्थः । अनुमान-

प्रकारस्तु— आनन्दमयशब्दो ब्रह्मपरः । आनन्दशब्दत्वात् । आनन्दो ब्रह्मेत्यत्रत्यानन्दशब्दवदिति । इतोऽपि ब्रह्मपुच्छवाक्ये ब्रह्म स्वप्रधानमित्याह॥अस्मिन्नस्य च तद्योगं शास्ति ॥ अस्मिन् पुच्छवाक्योक्ते ब्रह्मणि प्रवृद्धस्यानन्दमयस्य जीवस्य,यदा ह्येवैष एतस्मिन्नित्यादिशास्त्रं,तद्योगं मुक्तिं शास्तीत्यर्थः । तस्मादानन्दमयस्याऽत्राऽप्रतिपाद्यत्वात् पुच्छं ब्रह्मैव स्वप्रधानं निर्विशेषं ज्ञेयमिति सिद्धम् ॥ १९ ॥

( ७ । परमेश्वरस्यैव हिरण्मयपदवाच्यताऽधिकरणम् । सूत्रे २ )

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

पूर्वत्र ब्रह्मपदमानन्दमयपदमानन्दपदाभ्यासश्चेति मुख्यत्रितयात्मकबहुप्रमाणवशान्निर्गुणब्रह्मनिर्णयो,यथा,तद्वद्रूपवत्त्वादिबहुप्रमाणात् संसारी हिरण्मयः पुरुषोऽस्त्विति पूर्वसिद्धान्तयुक्त्या पूर्वपक्षोत्थानाद्, दृष्टान्तरूपाऽवान्तरसङ्गत्या पूर्वसिद्धनिर्गुणब्रह्मसमन्वयाऽपवादकमिदमारभ्यते । फलं च पूर्वोत्तरपक्षयोरुपास्तिरेव पादसमाप्तिपर्यन्तम् । छान्दोग्ये श्रूयते । अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी, तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेत्यधिदैवतमथाध्यात्ममप्यथ एषोऽन्तरक्षिणि पुरुषो दृश्यत इत्यादि । उपास्तिप्रस्तावायाथशब्दः । य एष शास्त्रप्रसिद्धः । आदित्यमण्डलमध्यवर्त्तिस्थानाद्यवयवकथनं, परमात्मन उपास्त्यर्थं द्रष्टव्यम् । हिरण्मयो ज्योतिर्मयः । तत्राऽवहितधियामनुभवं प्रमाणयति।दृश्यत इति। हिरण्यपदं ज्योतिःपरं, सुवर्णपदमपि । प्रणखो नखाग्रं । चक्षुषो-

विशेषमाह । तस्येति । कपेर्मर्कटस्य आसः पृष्ठभागोऽत्यन्तं तेजस्वी तत्तुल्यं, पुण्डरीकं, यथात्यन्तं तेजस्वि, तथाऽस्य देवस्याऽक्षिणी नेत्रे । ध्यानार्थमेव नाम करोति । तस्येति । नाम निर्वक्ति । स इति।उदितः उद्गतः सकार्यसर्वपापाऽस्पृष्ट इत्यर्थः । ध्यानफलमाह । उदेतीति। अधिदैवतं देवतामधिकृत्य उपास्तिवाक्यमित्यर्थः । अधिदैवतध्यानोक्त्यनन्तरमात्मानं देहमधिकृत्य अपि, तदुक्तिरित्याह । अथेति। एतादृशं स्थानद्वयस्थं, पुरुषमधिकृत्य रूपवत्त्वश्रुत्या सर्वपापाऽस्पर्शश्रुत्या च संशयः । किमयं पुरुषो विद्याकर्मातिशयवशात् प्राप्तोत्कर्षः कश्चित् संसारी, उत नित्यसिद्धपरमेश्वर इति । किं तावत् प्राप्तम् ? ।

संसारीति । कुतः ? । हिरण्यश्मश्रुरित्यादिरूपवत्त्वश्रवणात् । अक्षिपुरुषस्यापि तस्यैतस्य तदेव रूपं, यदमुष्य रूपमिति श्रुत्या रूपवत्त्वश्रवणात्।ये चाऽमुष्मात् पराञ्चो लोकास्तेषां,चेष्टे देवकामानां चेत्याऽऽदित्यपुरुषस्य, स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां, चेष्टे मनुष्यकामानां चेत्यक्षिपुरुषस्य,चैश्वर्यमर्यादाश्रवणात्। न हि परमात्मनो मर्यादावदैश्वर्यं युक्तम् । स एष सर्वेश्वर इति श्रुतेः । स आदित्यपुरुषः, अमुष्मादादित्यादूर्ध्वगानां लोकानामीशिता, देवकामानां देवभोगानां चेत्यर्थः । एतस्माच्चक्षुषोऽर्वाग्गतानां लोकानामीशिताऽक्षिपुरुषः, मनुष्यभोगानां चेत्यर्थः । तस्मान्नाक्ष्यादित्ययोरन्तःपुरुषः परमेश्वर इति प्राप्ते, उच्यते॥ अन्तस्तद्धर्मोपदेशात्॥य एषोऽन्तरादित्ये य एषोऽन्तरक्षिणीति च श्रूयमाणः परमेश्वर एव, न संसारी । कुतः ? । तद्धर्मोपदेशात् । तस्य परमेश्वरस्य ये धर्मास्तेषामस्मिन् वाक्ये उपदेशादित्यर्थः । तद्यथा तस्योदिति नामेत्यादिना सर्वपाप्मविरहेणाऽऽदित्यपुरुषस्य,नामोक्त्वा तदेव नामाक्षिपुरुषस्याऽप्य-

ऽतिदिशति । यन्नाम तन्नामेति । तत्सर्वपाप्मराहित्यं, ब्रह्मधर्मः । एवं सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद् ब्रह्मेति ऋगाद्यात्मत्वं, निर्द्धारयति श्रुतिः । तच्च सर्वात्मकब्रह्मण एवोपपद्यते । सैव ऋगित्यादेरयमर्थः । तच्छब्देन पुरुषपरामर्शः । विधेयाऽपेक्षया-ऽन्यलिङ्गव्यपदेशः । उक्थं शस्त्रविशेषः । तत्साहचर्यात् साम स्तोत्रमुक्थादन्यच्छस्त्रम् ऋक् ब्रह्म त्रयो वेदा इति । एवं सर्व-गानगीयमानत्वं श्रुतौ निर्दिष्टं, तद्य इमे वीणायां गायन्त्येतमेव ते गायन्तीत्यादौ । हिरण्यश्मश्रुकेशादिकं मायिकं परमेश्वरस्य, लोकानुग्रहार्थमुपपद्यते इति, न तेन विरोधः । तस्मादक्ष्यादित्य-योरन्तः परमात्मा ॥ २० ॥

किञ्च,

भेदव्यपदेशाच्चान्यः ॥ २१ ॥

आदित्याक्ष्णोरन्तः श्रूयमाणः पुरुषः, आदित्यशरीराऽभि-मानिनो जीवादन्यः । कुतः । भेदव्यपदेशात् । आदित्यशरीरा-ऽभिमानिनो जीवादन्यस्य परमात्मनोऽन्तर्यामितयाऽन्तर्यामि-ब्राह्मणे भेदेन व्यपदेशादित्यर्थः।य आदित्ये तिष्ठन्नादित्यादन्तरो यमयति यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यम-न्तरो यमयत्येष ते आत्माऽन्तर्याम्यऽमृत इत्यादिश्रुत्यन्तरे तयो-र्भेदव्यपदेशादत्राप्यान्तरशब्दश्रुत्या प्रत्यभिज्ञानात् परमेश्वर एवाक्ष्यादित्ययोरुपास्य इति सिद्धम् ॥ २१ ॥

( ८ । ब्रह्मण एवाकाशशब्दवाच्यताऽधिकरणम् । सूत्रम् १ )

आकाशस्तल्लिङ्गात् ॥ २२ ॥

पूर्वमव्यभिचारिब्रह्मलिङ्गेनाऽपहतपाप्मत्वादिना रूपवत्त्वादि-कमन्यथा नीतम् । इह तु लिङ्गादाकाशशब्दश्रुतिरन्यथा नेतुं

न शक्यते । लिङ्गापेक्षया श्रुतेः प्रबलत्वादिति प्रत्युदाहरणसङ्गत्येदमारभ्यते—

छान्दोग्ये श्रूयते । अस्य लोकस्य का गतिरित्याऽऽकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणमिति । तत्रोभयत्राऽऽकाशशब्दस्य प्रयोगदर्शनात् संशयः । किं भूताकाशोऽत्राकाशशब्देनाऽभिधीयते, उत परं ब्रह्मेति। यदेष आकाश आनन्दो न स्यादित्यादिवेदे ब्रह्मण्याकाशशब्दप्रयोगो भूताकाशे रूढ इति । विषयवाक्यार्थस्तु— शालावत्यनामकः कश्चन ऋपिर्जैवलिं राजानं पृच्छति । अस्येति । सर्वस्य प्रपञ्चस्य, किमधिकरणमिति प्रश्नार्थः । जैवलिरुत्तरमाह । आकाश इति । कथम्भूत आकाशः सर्वजगत्प्रतिष्ठेत्याह । सर्वाणीति । भूताकाशव्यावृत्तये हेत्वन्तरमाह । आकाशो हीति । तत्रैव हेत्वन्तरमाकाश इति । अयं सिद्धान्तार्थः । तत्र रूढ्या भूताकाश इति युक्तम् । न च वाक्यशेषाऽनुपपत्तिः । आकाशाद्वायुरित्यादौ तस्यापि वाय्वादिकारणत्वश्रवणात् । तस्माद् भूताकाश इति प्राप्ते,ब्रूमः ॥ आकाशस्तल्लिङ्गात् ॥ आकाशशब्देन ब्रह्मणो ग्रहणं युक्तम् । कुतः । तल्लिङ्गात् । तस्य ब्रह्मणो यल्लिङ्गं महाभूतस्रष्टृत्वादिकं, तस्य अस्मिन् वाक्ये दृष्टत्वादित्यर्थः । नन्विदं भूताकाशस्यापि वाय्वादिकारणत्वं दर्शितमितिचेन्न।मूलकारणब्रह्मणोऽपरिग्रहे आकाशादेवेत्यवधारणं सर्वाणीति च भूतविशेषणम् आकाशं प्रत्यस्तं यन्तीति कारणे लयप्रदर्शनं चाऽननुकूलं स्यात् । ज्यायस्त्वपरायणत्वप्रदर्शनं च ब्रह्मण्येव समञ्जसम् । श्रुत्यन्तरं च स्पष्टं ब्रह्मण एव परायणत्वं दर्शयति । विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणमिति । रातेर्धनस्य दातु-

यजमानस्य, रातिरिति पाठे रातिर्बन्धुरित्यर्थः । किञ्च, स एष परोवरीयानुद्गीथः, स एषोऽनन्त इत्युद्गीथे आकाशरूपदेवताधर्मान् परत्वादीनुपसंहरति जैवलिः। तद् भूताकाशे न युज्यते । न हि तस्याऽऽनन्त्यं सम्भवति। श्रुतौ परत्वं गुणत उत्कृष्टत्वं, वरीयस्त्वं कालतो वस्तुतश्चाऽपरिच्छिन्नत्वम्। अनन्तत्वं देशतोऽपरिच्छिन्नत्वं द्रष्टव्यम्। यत्तु लिङ्गाच्छ्रुतिर्बलीयसीत्युक्तं, तन्न । त्यजेदेकं कुलस्यार्थे इतिन्यायेन बह्वीनामनवकाशलिङ्गश्रुतीनामनुग्रहायैकस्याऽऽकाशश्रुतेर्बाधस्य युक्तत्वात् । तस्मादाकाशशब्दं ब्रह्मैवाऽत्र देवतोद्गीथे उपास्येति सिद्धम् ॥ २२ ॥

( ९ । ब्रह्मण एव प्राणशब्दवाच्यताऽधिकरणम् । सूत्रम् १ )

अत एव प्राणः ॥२३ ॥

अत्र चातिदेशत्वान्न पृथक्संगत्यपेक्षा। यद्वा पूर्वत्राऽऽकाशश्रुतेरव्यभिचारिब्रह्मलिङ्गोपबृंहितत्वाद् बाधो युक्तः। इह तु श्रूयमाणसंवेशनादिलिङ्गस्य प्राणेऽपि संभवेनाऽव्यभिचारिब्रह्मलिङ्गसहचाराऽभावात् प्राणश्रुतिबाधो न युक्त इति प्रत्युदाहरणसंगतिः । तत्रैवाऽऽकाशवाक्यानन्तरं श्रूयते, उद्गीथे प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदऽविद्वान् प्रस्तोष्यसि मूर्द्धा ते व्यपतिष्यतीति। कतमा सा देवतेति । प्राण इति होवाच, सर्वाणि ह वा इमानि भूतानि प्राणमेवाऽभिसंविशन्ति प्राणमभ्युज्जिहते, सैषा देवता प्रस्तावमन्वायत्तेत्यादि। अस्यार्थः।उद्गीथाऽधिकारे प्रासङ्गिकं प्रस्तावध्यानमिनि वक्तुम्, उद्गीथ इत्युक्तम् । कश्चिद् ऋषिश्चाक्रायणनामा धनाय राज्ञो यज्ञं गत्वा ज्ञानवैभवं स्वस्य प्रकटयन् प्रस्तोतारमुवाच । हे प्रस्तोतः ! या देवता प्रस्तावं सामभक्तिविशेषमन्वायत्ता अनुगता।स स्तोता भीतः

सन् चाक्रायणं पप्रच्छ, कतमेति। तस्य प्रतिवचनं, प्राण इति। मुख्यप्राणवायुं व्यावर्त्तयति। सर्वाणीति। संविशन्ति, लीनानि भवन्ति स्वापकाले, अभ्युज्जिहते जन्मकाले प्राणमभिलक्ष्योद् गच्छन्तीति। तत्र प्राणबन्धनं हि सोम्य मनः, प्राणस्य प्राणमित्यादौ ब्रह्मणि प्राणशब्दप्रयोगात् प्राणवायौ च प्रसिद्धतरत्वात् संशयः। किमत्र प्राणशब्देन ब्रह्माऽभिधीयते, उत वायुविकार इति। मनःशब्दलक्षितं तत्साक्षिचैतन्यं प्राणे परस्मिन्नैक्येन स्थितमित्यर्थः। प्राणस्य पञ्चवृत्तेर्वायुविकारस्य प्राणं सत्तास्फूर्त्तिदमात्मानं ये विदुस्ते ब्रह्म जानन्तीत्यर्थः। तत्र प्रसिद्धिबलाद् वायुविकार इति प्राप्ते, आकाशन्यायमतिदिशति भगवान् सूत्रकारः॥ अत एव प्राण, इति॥ अत एव पूर्वसूत्रोक्ततल्लिङ्गादिति हेतोरेव प्राणशब्दं ब्रह्मेत्यर्थः। सर्वाणि ह वा इमानि भूतानि प्राणमेवाऽभिसंविशन्तीत्यादिना महाभूतसंवेशनाऽऽदिकं ब्रह्मलिङ्गं प्राणवाक्ये श्रूयते। न च, यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति, प्राणं चक्षुः, प्राणं मनः, प्राणं श्रोत्रं, स यदा प्रतिबुद्ध्यते प्राणादेवाभिपुनर्जायन्त इति श्रुत्या वायुविकारेऽपि संवेशनादि श्रूयत इति वाच्यम्। न हि तत्र महाभूतसंवेशनादि श्रूयते, किन्तु इन्द्रियसंवेशनादिकमेव। श्रुत्यर्थस्तु, तर्हि तस्यां सुषुप्त्यवस्थायाम् इत्यर्थः। वाक्पदमनुक्तकर्मेन्द्रियलक्षकम्। चक्षुःश्रोत्रे धीन्द्रियाणामुपलक्षणम्। तस्मादनन्यथासिद्धब्रह्मलिङ्गात् प्राणशब्दवाच्यं ब्रह्मैवोपास्यं, प्रस्तावे देवतेति सिद्धम्॥ २३॥

(१० । ब्रह्मण एव ज्योतिःशब्दाभिधेयत्वाधिकरणम्। सूत्राणि ४)

ज्योतिश्चरणाभिधानात्॥ २४॥

प्राणवाक्ये ब्रह्मलिङ्गसत्त्वाद् भवतु ब्रह्मपरता। इह वाक्ये

तदभावान्न ब्रह्मपरतेति । प्रत्युदाहरणसंगत्या, इदम् आरभ्यते। छान्दोग्ये श्रूयते । अथ यदतः परो दिवो ज्योतिर्दीप्यते, विश्वतः पृष्ठेषु, सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वा व तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिरिति । अस्यार्थः। गायत्र्युपाधि-ब्रह्मोपास्त्यनन्तरमुपास्त्यन्तरोक्त्यर्थोऽप्यथशब्दः । अतो दिवो द्युलोकात् परः, परस्ताद् यज्ज्योतिर्दीप्यते, तदिदमित्यौदर-ज्योतिष्यऽध्यस्यते । कुत्र तद् दीप्यते । तत्राह । विश्वत इति । विश्वस्मात् प्राणिवर्गादुपरीत्यर्थः । विश्वशब्दस्य कतिपयार्थक-त्वं व्यावर्त्तयति । सर्वत इति । सर्वस्माद् भूरादिलोकात् सर्व-संसारमण्डलादुपरीत्यर्थः । उत्तमा न विद्यन्ते येभ्यस्तेऽनुत्तमा-स्तेषु । इदं-शब्दार्थं स्फुटयति । यदिति । लोकवेदयोर्भौतिक-तेजसि ब्रह्मणि च प्रयोगात् संशयः । किमिह ज्योतिःशब्देना-ऽऽदित्यादिकं तेजोऽभिधीयते, उत ब्रह्मेति । किं तावदत्र युक्त-म् । भौतिकमिति । कुतः ? । प्रसिद्धत्वाद्,अतो दिव इत्यादिना, मर्यादादिश्रवणाच्च । न हि सर्वव्यापिनो ब्रह्मणो मर्यादादिकं युक्तम् । तस्माद्भौतिकं ज्योतिरिति प्राप्ते ब्रूमः । ज्योतिश्चरणा-भिधानादिति। अत्र ज्योतिशब्दग्राह्यं ब्रह्मैव।कुतः । चरणाऽभि-धानात् पादाभिधानादित्यर्थः। तथा हि। ज्योतिर्वाक्यात् पूर्ववाक्ये, चतुष्पाद् ब्रह्म निर्दिश्यते । एतावानस्य महिमा अतो ज्यायाँश्च पूरुषः ।पादोऽस्य सर्वा भूतानि त्रिपादस्याऽमृतं दिवीति । एत-दर्थस्तु– गायत्री वा इदं सर्वमित्यत्र, भूतपृथिवी–शरीर–हृदय-वाक्प्राणैः, षड्विधा चतुष्पदा गायत्रीति यदुक्तं, तद्गायत्र्यु-पाधिब्रह्मणो महिमा विभूतिः । तावान् एवाऽयं प्रपञ्चः । स्वयं पुरुषस्ततो ज्यायान् । तदेवाह । पाद इति । सर्वाणि भूतान्य-स्यैकपादः, एकदेशः । त्रिपाद् अमृतं दिवि द्योतनवति स्वात्म-

नि स्थितमिति। एवञ्च, यदतः पर इत्यत्र यच्छब्दस्य सर्वनामत्वेन प्रसिद्धार्थवाचकत्वात् पूर्ववाक्येद्युसम्बान्धित्वेन प्रसिद्धं ब्रह्माऽत्रापि द्युसम्बन्धाद् यच्छब्देन प्रत्यऽभिज्ञायते,नाऽप्रकृतं भौतिकं तेजः। अतः परं इत्यादिना श्रुतं ब्रह्मणो मर्यादादिकमुपासनाऽर्थमित्युक्तं,ज्योतिःशब्दो ब्रह्मण्यपि प्रसिद्धो वेदान्तेषु। तस्मादिह ज्योतिःशब्दं ब्रह्म ॥ २४ ॥

छन्दोऽभिधानान्नेतिचेन्न तथाचेतोऽर्पणनिगदा-
त्तथाहि दर्शनम ॥ २५ ॥

यदुक्तं पूर्वत्र गायत्र्याख्यछन्दउपाधिकब्रह्मण उक्तत्वात् तदत्र प्रत्यभिज्ञायते इति । तन्न । गायत्री वा इदं सर्वं भूतं यदिदं किञ्चेति गायत्र्याख्यछन्दसः प्रकृत्वात्तस्यैव, पादोऽस्य सर्वा भूतानीति भूतपादव्यपदेशो, न ब्रह्मण इति पूर्ववाक्ये, छन्द एवाऽभिधीयते, न ब्रह्मेतिचेन्न । गायत्र्याख्यछन्दोद्वारेण तदनुगतब्रह्माणि सर्वात्मकत्वं,प्रतिपाद्यते। गायत्री वा इदं सर्वमित्यादिना। न ह्यक्षरसंनिवेशमात्राया गायत्र्याः सर्वात्मकत्वं, समञ्जसम् । तस्माद् गायत्र्यां विकारे यदनुगतं ब्रह्म तदेव, गायत्री वा इदं सर्वमित्यादिना प्रतिपाद्यते इति । निष्कृष्टार्थस्तु– छन्दोऽभिधानाद् गायत्र्याख्यछन्दस एव पूर्ववाक्ये प्रकृतत्वान्न ब्रह्मणः प्रकृतत्वमितिचेन्न । कुतः । तथा छन्दोद्वारेण तद्गते ब्रह्मणि चेतोऽर्पणस्य चित्तसमाधानस्य निगदादभिधानात्। तत्र दृष्टान्तः ॥ तथा हि दर्शनम् ॥ अन्यत्रापि विकारद्वारेण ब्रह्मण उपासनं दृश्यत इति दर्शनं,दृष्टमित्यर्थः। एतं ह्येव बह्वृचे महत्युक्थे मीमांसन्ते, एतमग्नावध्वर्यव, एतं महाव्रते छन्दोगा [illegible]र्थस्त एतमेवात्मानम् ऋग्वेदिनो महत्युक्थे प्रधाने शस्त्रे

तदनुगतमुपासते,यजुर्वेदिनोऽग्नौ क्रतौ, सामवेदिनो महाव्रताख्ये क्रतौ तदनुगतं ब्रह्माऽनुसन्दधत इत्यैतरेये दृष्टमित्यर्थः । एवं गायत्रीशब्दो ब्रह्मलक्षक इति पूर्ववाक्ये ब्रह्मनिर्दिष्टम् । यद्वा गायत्रीशब्दो ब्रह्मणि गौणः । तथाच सूत्रे सिद्धान्तभागस्याऽयमर्थः । यथा गायत्री षडक्षरैः पादैश्चतुष्पदा इति, एवं ब्रह्माऽपि चतुष्पादिति, गायत्रीशब्देनाऽभिधीयते । चतुष्पात्त्वगुणयोगात् । तथा गायत्रीसादृश्येन चेतोऽर्पणस्य ध्यानस्य निगदाद्विधानादिति॥तथाहि दर्शनमिति॥छन्दोऽभिधायिशब्दस्य सादृश्यादन्यत्र प्रयोगे दृष्टान्तः। तथा हि । ते वा एते पञ्चाऽन्ये पञ्चान्ये ब्रह्मणि दश सन्तस्तत्कृतमित्युपक्रम्याऽऽह । सैषा विराडिति । अस्यार्थः । संवर्गविद्यायामधिदैवमग्निसूर्यचन्द्राम्भांसि वायौ लीयन्ते । अध्यात्मं प्राणे वाक्चक्षुःश्रोत्रमनांसीत्युक्तम् । ते वायुना सह पञ्चाधिदैविका आध्यात्मिकेभ्यः प्राणादिभ्योऽन्ये। तथा प्राणादयः पञ्च आधिदैविकेभ्योऽन्ये । एवं ते सर्वे, दश सन्तः कृतमित्युच्यन्ते। कृताऽपरपर्यायचतुरायनामकद्यूतगतचतुरङ्कवच्चत्वारः पदार्थाः प्रकृते सन्ति, त्र्यङ्कायवत् त्रयः, द्व्यङ्कायवत् द्वौ, एकाङ्कायवदेकश्च । एवं कृते दशके सर्वान्तर्भावात्तज्जये सर्वजयो भवति । यथा कृते जिते त्रेतादिसंज्ञानि त्र्यङ्कायादीनि जितानि भवन्ति तद्वत् । तत्र चतुरायकाऽपरपर्यायचतुरङ्कायनामकद्यूतस्य कृतमिति संज्ञा। स च चतुरङ्कायो दशात्मकः। चतुर्ष्वङ्केषु त्रयाणां त्रिषु द्वयोस्तयोरेकस्य चान्तर्भावात्। वाय्वाद्योऽपि दश । तथाच दशत्वसंख्यासादृश्याद्वाय्वादयः कृतमित्युच्यन्ते। एवमेव दशाक्षरा विराडिति श्रुत्या विराड्नामकछन्दसो दशात्मकत्वाद्वाय्वादौ विराट्शब्दप्रयोग इति यथा तद्वत् ब्रह्मणश्चतुष्पादत्वसाम्याद्गायत्रीशब्दप्रयोग इति दृष्टान्तार्थः । तस्मात्

पूर्ववाक्ये ब्रह्मैव निर्दिष्टं, न छन्द इति सिद्धम् ॥ २५ ॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

इतश्च गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमित्यभ्युपगन्तव्यमित्येवं—शब्दार्थः । कुतः । भूतादिपादव्यपदेशोपपत्तेः । भूतपृथिवीशरीरहृदयैश्चतुष्पदा गायत्रीति व्यपदेशस्य ब्रह्मण्येवोपपत्तेरित्यर्थः । न ह्यक्षरसंनिवेशरूपगायत्र्यां भूतादिपादव्यपदेशः संभवति । किञ्च, ते वा एते पञ्च ब्रह्मपुरुषा इति श्रुतिः । पूर्वं ब्रह्मणः प्रकृतत्वे सङ्गच्छते । तथाहि—

गायत्र्याख्यब्रह्मणो हार्दस्योपास्त्यङ्गत्वेन द्वारपालादिगुणविध्यर्थं, तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषय इत्यादिवाक्यम् । तत्र ते वा एते पञ्च ब्रह्मपुरुषा इति श्रुतम् । तथाचोपास्त्यङ्गानां द्वारपालानां, हृदयच्छिद्रेषु स्थितानां प्राणादिवायूनां ब्रह्मपुरुषत्वोक्तेर्हृदयाच्छिद्रेष्वपि ब्रह्मसम्बन्धोऽवगम्यते इत्यतोऽस्ति पूर्ववाक्ये ब्रह्म प्रकृतम् । न हि गायत्रीमात्रस्यैवोपास्यत्वे, तदङ्गानां ब्रह्मपुरुषत्वं युक्तम् । अतो हृदयच्छिद्रेषु ब्रह्मसम्बन्धात्तत्रस्थवायूनां ब्रह्मपुरुषत्वमिति ब्रह्मपुरुषश्रुत्युपपत्तेरिति । श्रुत्यर्थस्तु— हृदस्य पञ्च देवाच्छिद्राणि । आदित्यादिनामकैः प्राणादिवायुभिर्देवैः परिपाल्यत्वाद्देवसुषित्वं छिद्राणाम् उपचर्यते । तानि हृदयस्य छिद्राणि, हृदयस्य प्राङ्मुखदक्षिणमुखप्रत्यङ्मुखोदङ्मुखोर्ध्वमुखरूपाणि । तत्स्थाः प्राणाऽपानव्यानसमानोदानात्मका वायवः, क्रमेणाऽऽदित्यचन्द्राऽग्निपर्जन्याऽऽकाशनामकाः, पञ्च ब्रह्मपुरुषा इति । तस्माद्गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमिति । ज्योतिर्वाक्ये तत्सम्बन्धात्तदेव प्रत्यभिज्ञायते इति सिद्धम् ॥ २६ ॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

ननु पूर्वस्मिन् वाक्ये त्रिपादस्याऽमृतं दिवीति सप्तम्या द्यौराधारत्वेन निर्दिश्यते। अथ यदतः परो दिवो ज्योतिरिति। अत्र पञ्चम्या अवधित्वेन द्यौर्निर्दिश्यते। तथाच विभक्तिभेदेन उपदेशभेदाज्ज्योतिर्वाक्ये प्रत्यभिज्ञा, न सम्भवतीतिचेन्न। कुतः। उभयस्मिन्नप्यविरोधात्। विभक्तिभेदेनोपदेशद्वयेऽपि प्रत्यभिज्ञाया अविरोधादित्यर्थः। प्रधानप्रातिपदिकार्थेन प्रत्यभिज्ञायां गुणभूतविभक्त्यर्थो, न प्रतिबन्धक इति भावः। तस्मात् परं ब्रह्मैव कौक्षेयकाऽग्नौ उपास्यं ज्योतिःशब्दं, नान्यद् भौतिकं तेज इति सिद्धम्॥ २७॥

(११। ब्रह्मण एव प्राणशब्दव्युत्पाद्यत्वाधिकरणम्। सूत्राणि ४)

प्राणस्तथानुगमात्॥ २८॥

पूर्वस्मिन्नधिकरणे, यदतः पर इत्यत्र, यच्छब्दस्य प्रसिद्धार्थवाचकस्य बलवत्त्वात् तत्सहकृतं ब्रह्मलिङ्गं, तेजोलिङ्गापेक्षया बलवदित्युक्तम्। न तथेह किञ्चिद् बलवत्त्वसम्पादकमस्तीति प्रत्युदाहरणसङ्गतिरस्याऽधिकरणस्य। यद्वा पूर्वं, दिवि दिव इत्यत्र प्रधानप्रकृत्यर्थोऽनुरोधाद् गुणभूतप्रत्ययार्थोऽन्यथा नीतो यथा, तद्वदिहापि स्वतन्त्रप्राणादिपदार्थभेदप्रतीतौ तत्सापेक्षब्रह्मरूपैक्यवाक्यार्थाऽप्रतीतेर्गुणभूताया अपलापो युक्त इति दृष्टान्तसङ्गतिः। पदार्थप्रतीतेः स्वातन्त्र्यं जनकत्वेन, वाक्यार्थप्रतीतेर्गुणत्वं तज्जन्यत्वेनेति बोध्यम्। अस्ति कौषीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिका। प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण चेत्यारभ्याऽऽम्नानात्। तस्यां श्रूयते। स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वेति। तथोत्तरत्रापि। अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति। तथा न वाचं विजिज्ञासीत वक्तारं वि-

द्यादित्यादि । अन्ते च स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत इत्यादि । अस्यार्थः । दिवोदासस्याऽपत्यं पुमान् दैवोदासिः, प्रियं प्रेमास्पदं, धाम गृहम् । तद्गतौ हेतुः— युद्धेनेति । तत्कारणेन पुरुषकारप्रदर्शनेन च प्रतर्दनो राजा इन्द्रस्य गृहं जगामेत्यन्वयः । तं दृष्ट्वा इन्द्र उवाच,प्रतर्दन वरं ते ददानि । स होवाच प्रतर्दनः । हे इन्द्र ! त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति । तत इन्द्र उवाच । प्राणोऽस्मीत्यादि । मुख्यं प्राणं व्यावर्तयति । प्रज्ञात्मेति । निर्विशेषचिन्मात्रं व्यावर्त्तयति । तं मामिति । इदं च प्राणस्य इन्द्ररूपदेवतात्वे लिङ्गम् । प्राणस्य मुख्यप्राणरूपत्वे लिङ्गमथ खल्वित्यादि।वागादीनां देहधारणशक्त्यभावनिश्चयानन्तर्यमथशब्दार्थः । प्राणवायोर्देहधारणं, तदुत्थानं च कार्यमिति प्रसिद्धमिति, खल्वित्युक्तम् । प्राणस्य जीवत्वे लिङ्गं, न वाचमिति । प्राणस्य परमात्मत्वे लिङ्गं, स एष इत्यादि । एवञ्च प्राणशब्दस्य इन्द्रप्राणवायुजीवपरमात्मपरत्वे लिङ्गानां विद्यमानत्वात् संशयः, किम्परः प्राणशब्दः ? इति । तत्र प्रसिद्धत्वात् प्राणवायुपर इति प्राप्ते, उच्यते ॥ प्राणस्तथानुगमात् ॥ तत्र प्राणो ब्रह्मैव । कुतः । तथानुगमात् । तथा ब्रह्मपरत्वेनाऽनुगमात् । अवगमादित्यर्थः। तथाहि । प्रतर्दनः खलु हिततमं पुरुषार्थं पृष्टवान् । तस्य परमपुरुषार्थकामस्य प्राण उपास्यत्वेनोपदिश्यते,प्राणोऽस्मीत्यादिना । एवञ्च परमपुरुषार्थत्वेन उपदिश्यमानः प्राणः कथं प्राणवायुः स्यात् । तथा, स यो ह मां वेद न ह वै तस्य केनचन कर्मणा लोको मीयते, न स्तेयेन, न भ्रूणहत्ययेत्यादि ब्रह्मपरिग्रहे घटते । क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे इत्यादिना ब्रह्मज्ञानिनः कर्मक्षयश्रवणात् । तदर्थस्तु, योऽधिकारी मां ब्रह्मरूपं साक्षादनुभवति तस्य विदुषो

लोको मोक्षो न मीयते, नहिंस्यते महताऽपि पापेन । ज्ञानमाहात्म्येन सर्वस्यापि पापस्य दग्धत्वादिति भावः । एवं प्रज्ञात्मत्वं च ब्रह्मण एव युक्तम् । एवमुपसंहारः । आनन्दोऽजर इत्यपि ब्रह्मपरत्वे घटते । तथा, स न साधुना कर्मणा भूयान् भवति नो एवाऽसाधुना कनीयान् । एष ह्येव साधु कर्म कारयति, एष उ एवाऽसाधु कर्म कारयति एष लोकाऽधिपतिरेष लोकपाल एष लोकेश इति च ब्रह्मण्येव समञ्जसम् । अत्र हि धर्माद्यसंस्पृष्टत्वं, तत्कारयितृत्वं, तदीशितृत्वं च ब्रह्मणोऽसाधारणं लिङ्गमस्तीति । तस्मात् पूर्वापरपर्यालोचनया ब्रह्मपरमेव प्राणपदमिति ॥ २८ ॥

न वक्तुरात्मोपदेशादितिचेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २९ ॥

ननु यदुक्तं, प्राणो ब्रह्मेति तदयुक्तमिति, नञर्थः । कुतः । वक्तुरात्मोपदेशात् । वक्तुरिन्द्रस्याऽऽत्मत्वेनोपदेशादित्यर्थः । तथाहि । वक्ता हीन्द्रो नाम कश्चिद्विग्रहवान् देवताविशेषः स्वमात्मानं प्रतर्दनायोपदिशति । मामेव विजानीहिइत्युपक्रम्य,प्राणोऽस्मि प्रज्ञात्मेत्यहङ्कारवादेन । किञ्च, देवतायाः प्राणत्वे लिङ्गान्तरमस्ति । अरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छमिति । रुत् वेदान्तवाक्यं, तद् येषां मुखे न वर्तते ते अरुन्मुखाः । शालावृकेभ्यः अरण्यश्वभ्यः । नहीदं ब्रह्मणो युक्तम् । एवमिन्द्रपरत्वे,इतरद् यथासंभवं योजनीयमिति । अत्रोच्यते । अध्यात्मसंबन्धभूमा ह्यस्मिन्निति । हि यस्मादस्मिन्नध्याये, अध्यात्मसंबन्धस्य, परमात्मसंबन्धस्य भूमा बाहुल्यमुपलभ्यते इत्यर्थः । तद्यथा, यावद्ध्यस्मिञ्छरीरे प्राणो वसति,तावदायुरिति । प्राणस्यैव प्रज्ञात्मनः परमात्मभूतस्याऽऽयुःप्रदानोपसंहारयोः स्वात-

न्त्र्यं दर्शयति, न पराचीनस्य इन्द्रस्य । एवमस्तित्वे च प्राणानां निःश्रेयसमिति श्रुतिरात्मानमिन्द्रियाश्रयं प्राणं दर्शयति । प्राणस्यास्तित्वे स्थितौ प्राणानामिन्द्रियाणां निःश्रेयसं स्थितिरिति श्रुत्यर्थः । एवमेव,न वाचं विजिज्ञासीत वक्तारं विद्यादिति, परमात्मानं वक्तारमुपक्रम्य, तद् यथा रथस्याऽरेषु नेमिरर्पिता नाभावरा अर्पिता,एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः । स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत इति वाक्यं विषयेन्द्रियव्यवहारानभिभूतं प्रत्यगात्मानमेवोपसंहरति । श्रुत्यर्थस्तु—

तत् तत्र भूतमात्रादीनां नानात्वं नेत्यर्थे दृष्टान्तः । यथा लोके प्रसिद्धस्य रथस्य अरेषु मध्यवर्त्तिशलाकासु चक्रोपान्ते नेमिरर्पिता, नाभौ चक्रपिण्डिकायामरा अर्पितास्तद्वद् भूतानि पृथिव्यादीनि मात्राः शब्दादयो विषया मीयन्ते इति मात्राः, प्रज्ञामात्रासु स्वस्वबोधकेष्विन्द्रियेषु बुद्धिद्वारा अर्पिताः । कर्मेन्द्रियेष्वपि तद्विषया अर्पितास्तदधीनत्वात्तद्व्यवहारस्य । ताश्च प्रज्ञामात्राः प्राणे परस्मिन्नर्पिताः । प्राणस्य ब्रह्मत्वे लिङ्गं, स एष इति । तस्मादध्यात्मसम्बन्धबाहुल्यात् प्राणात्मकब्रह्मोपदेश एवाऽयं, न देवतात्मोपदेश इति सिद्धम् ॥ २९ ॥

कथं तर्हि वक्तुरात्मोपदेश इत्याशङ्क्याह—

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

इन्द्रस्य वक्तुर्मामेव विजानीहीत्युपदेशः शास्त्रदृष्ट्या ज्ञातव्यः । अहमेव परं ब्रह्मेति शास्त्रदृष्ट्या पश्यन्नेवमुक्तवानित्यर्थः । तत्र दृष्टान्तः । वामदेववदिति । यथा वामदेवः शास्त्रदृष्ट्याऽहं मनुरभवं सूर्यश्चेत्याह तद्वदित्यर्थः । यदुक्तमिन्द्रो यतीनित्यादि

देवतापरत्वे लिङ्गमिति। तन्न। यद्वेदान्तवाक्योत्थज्ञानप्रभावादह-मेवम्भूतोऽस्मीतीदृशवेदान्तवाक्यान्यध्येयानि, नोचेदरण्यश्वभ्यः प्रायच्छमित्येतदर्थकत्वेनाऽविरोधात्। तस्मात् प्राणात्मकब्रह्म-परमेतद्वाक्यमिति सिद्धम्॥ ३०॥

जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वा-दिह तद्योगात्॥ ३१॥

ननु यदुक्तमध्यात्मसंबन्धबाहुल्यान्न देवतात्मा प्राण इति, तत् सत्यं, तथापि न ब्रह्मपरमेवेदं वाक्यं,किन्तु जीवमुख्यप्राण-वायुपरमपि। कुतः?। जीवलिङ्गात्। मुख्यप्राणलिङ्गाच्च। न वाचं विजिज्ञासीत वक्तारं विद्यादिति जीवलिङ्गं वागादिकरणै-र्वेष्टितस्य(१) वक्तुर्जीवस्य विज्ञेयत्वमुपलभ्यते। एवं प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति प्राणलिङ्गं देहधारणस्य प्राणलिङ्गत्वात्। तथाहि। प्राणसंवादे श्रूयते, वागादयः सर्वे प्राणाः प्रत्येकं श्रेष्ठतामात्मनो मन्यमानास्तान्निर्दिधारयिषया प्रजापतिमुपजग्मुः। स च तानुवाच। यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव भवति स युष्माकं मध्ये श्रेष्ठ इति। त-स्मिन् प्रजापतावेवमुक्तवति, वागादिषूत्क्रान्तेष्वपि मूकादिभावेन शरीरं स्वस्थमस्थात्। मुख्यप्राणस्योच्चिक्रमिषायां तु वागादीनां व्याकुलत्वात्। तान् प्रति प्राण उवाच। मा मोहमापद्यथा, यतो-ऽहमेवैतत् करोमि। किं तत्। पञ्चधा प्राणाऽपानादिभेदेना-ऽऽत्मानं विभज्य, एतद्वाणं, शरीरम्। वाति गच्छतीति वानं, वानमेव वाणमस्थिरं, शरीरमिति यावत्। तदवष्टभ्य विधारयामी-ति श्रवणाद्देहधारणं प्राणलिङ्गमेव। अथतोऽनुक्रान्ता श्रुतिस्तु,

(१) व्यापृतस्येति वा पाठः।

मामोहमापद्यथा, अहमेवैतत् पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामीति प्राणवायोः प्रज्ञात्मत्वं कथमिति चेद् ज्ञानेन्द्रियाश्रयत्वादिति ब्रूमः । तस्मादुपक्रमादिपर्यालोचनया ब्रह्मरूपैकवाक्यार्थप्रतीतावपि तस्या जीवमुख्यप्राणरूपपदार्थप्रतीतिजन्यत्वेन गुणत्वात् पदार्थप्रतीतेश्च तज्जनकतया प्रधानत्वादेकवाक्याऽर्थप्रतीतिमपोह्य वाक्यभेद एव न्याय्य इति । जीवमुख्यप्राणब्रह्मणां त्रयाणामुपास्यानां प्रत्येकं स्वातन्त्र्येण वाक्यार्थत्वमिति त्रीणि वाक्यानि, नैकं ब्रह्मवाक्यमितिचेन्न । उपासात्रैविध्यात् । त्रीण्युपासनानि प्रसज्ज्येरन्नित्यर्थः । उपक्रमोपसंहाराभ्यां ब्रह्मपरत्वेनैकवाक्यत्वे संभवति, वाक्यभेदो न युक्तः । न च पदार्थप्रतीतेर्मुख्यत्वम् । तस्या वाक्यार्थप्रतीतिशेषत्वेन तस्या एव प्रधानत्वात् । न हि जनकत्वमात्रेणैव प्राधान्यं युक्तम् । सन्निपत्योपकारकाणामपि प्रधानत्वापत्तेः । अत एव प्राण इत्यत्र, अन्यत्र ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मणि प्रवृत्तेराश्रितत्वादिहापि हिततमोपन्यासादिब्रह्मलिङ्गयोगाद् ब्रह्मण एवायमुपदेश इति । यत्तु जीवादिलिङ्गमस्तीति तत्परत्वमिति । तन्न । प्राणव्यापारस्यापि परमेश्वरायत्तत्वेन देहधारणस्यापि ब्रह्मण्युपचरितुं शक्यत्वेनाऽनन्यथासिद्धप्राणवायुलिङ्गाऽभावात् । तथाच श्रुतिः, न प्राणेन नाऽपानेन मर्त्यो जीवति कश्चन * इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रिताविति प्राणादिव्यापारस्येश्वरायत्तत्वमाह । नापि, न वाचं विजिज्ञासीतेत्यादिजीवलिङ्गविरोधः । जीवस्य ब्रह्माऽनन्यत्वेन सर्वोपाधिपरित्यागेन जीवस्य स्वरूपं ब्रह्म दर्शयितुं, न वाचं विजिज्ञासीतेत्यादिप्रत्यगात्माभिमुखीकरणार्थ उपदेशो. न विरुध्यते । यद् वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि इति श्रुत्यन्तरं, वागादिव्यापृत-

स्य वक्तुर्ब्रह्मत्वं दर्शयति । तस्माद् ब्रह्मपरमेवेदं वाक्यं, न प्राणादित्रितयपरम् ॥

एकदेशिनस्तु, नोपासात्रैविध्यादाश्रितत्वादिह तद्योगादित्यस्यार्थान्तरमाचक्षते । तथाहि—

न ब्रह्मवाक्ये जीवमुख्यप्राणलिङ्गयोर्विरोधः । कुतः । उपासात्रैविध्याज्जीवधर्मेण प्राणधर्मेण ब्रह्मधर्मेण च सहितस्य त्रिविधस्योपासनस्यैकस्य विवक्षितत्वादित्यर्थः । अतो न वाक्यभेद इति । तत्राऽऽयुरमृतमित्युपास्वाऽऽयुः प्राण इति, इदं शरीरं परिगृह्योत्थापयतीति । तस्मादेतमेव उक्थमुपासीतेति प्राणधर्मः । अथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्याम इत्युपक्रम्य, वागेवाऽस्या एकमङ्गमदूदुहत्तस्यै नाम परस्तात् प्रतिविहिता भूतमात्रा प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोतीत्यादिर्जीवधर्मः । ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युः, यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युर्न ह्यन्यतरतो रूपं किञ्चन सिद्ध्येन्नो एतन्नाना, तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः, स एष प्राण एव प्रज्ञात्मेत्यादिर्ब्रह्मधर्मः । एतदर्थस्तु प्राणो हि भूतानामायुरिति श्रुत्यन्तरेण प्राणस्यायुष्ट्वं सिद्धम् । जीवनस्य तदधीनत्वात् । तस्मात् प्राणस्यैव देहाद्युत्थापकत्वाद्देहादिकमुत्थापयतीत्युक्थं प्राणः । एवमायुष्ट्वाऽमृतत्वोक्थत्वं प्राणधर्म इत्यर्थः । सहवासः सहोत्क्रान्तिश्चेत्युक्त्याऽऽनन्तर्यमथशब्दार्थः । अस्या जीवाख्यप्रज्ञायाः संबन्धीनि भूत्वा सर्वाणि भूतानि तद्दृश्यत्वेन कल्पितानि वस्तुतो यथैकं भवन्ति तथा तद् वस्तु व्याख्यास्याम इत्युपक्रम्योक्तम् । वागेवेति । बुद्धेः साभासायाः

स्वरूपतोऽजातत्वेऽपि विषयित्वरूपपूर्णशरीरमिन्द्रियसाध्यम् । तत्र नामप्रपञ्चविषयित्वमर्द्धशरीरं बुद्धेरहङ्कारलक्षणायाः । तथा रूपप्रपञ्चविषयित्वमर्द्धशरीरम् । तथाच कर्मेन्द्रियेषु मध्ये वागेवाऽस्याः प्रज्ञाया देहार्द्धमेकमङ्गमदूदुहत् उद्रेचितवती पूरयामासेत्यर्थः। नामात्मकप्रपञ्चे वाग्द्वारा प्रविष्टा बुद्धिर्नामप्रपञ्चविषयित्वलक्षणमर्द्धशरीरमाप्नोतीति यावत् । तस्याः प्रज्ञायाः पुनर्नाम किल परस्तादपरभागे रूपप्रपञ्चविषयित्वलक्षणेऽर्द्धशरीरे चक्षुरादिना प्रतिविहिता समुत्थापिता भूतमात्रा नामशब्दरूपाद्यर्थरूपा कारणं भवतीत्यर्थः । चक्षुरादिना प्रकाशितार्थप्रपञ्चो बुद्धेरितरभागं रूपप्रपञ्चविषयित्वलक्षणं पूरयामासेति यावत् । एवं वागिन्द्रियेणाऽर्थप्रपञ्चेन च जीवाख्यप्रज्ञापूरणं विषयित्वलक्षणं शरीरं प्राप्य द्रष्ट्री भवतीति सिद्धम् । तदुपहितचैतन्यद्वारा स्वरूपे द्रष्टृत्वाध्यासमाह । प्रज्ञयेति । तया द्वारा वाचं करणं प्रति चिदात्माऽहं वक्तेत्यध्यासमनुभूय वाचा करणेन सर्वाणि नामानि वक्तव्यत्वेनाऽऽप्नोति चक्षुषा सर्वाणि रूपाणि पश्यतीत्येवं द्रष्टृत्वमनुभवतीत्यर्थः। सर्वभूतविषयकत्वमात्मनि द्रष्टृत्वादिसम्पादकत्वं च बुद्धेर्धर्म इति फलितम्।चक्षुरेवाऽस्या इत्यादिपर्यायान्तरार्थोऽपि संगृहीतः । सर्वाधारत्वाऽऽनन्दत्वादिब्रह्मधर्म इत्याह । ता वा इति । भूतानि पृथिव्यादीनि पञ्च, मात्राश्च शब्दादयः पञ्च । एता दश भूतमात्राः, अधिप्रज्ञं प्रज्ञा इन्द्रियाणि, तदुत्थज्ञानानि वा अधिकृत्य प्रवर्त्तन्ते । दश प्रज्ञामात्राः, पञ्चेन्द्रियाणि, तदुत्थबुद्धयश्चाधिभूतं, भूतानि पृथिव्यादीनि शब्दादीनि चाधिकृत्य प्रवर्त्तन्ते । एवं भूतमात्राणां दशानां ग्राह्यत्वेन प्रज्ञामात्रात्मकग्राहकापेक्षत्वमुक्तम् । प्रज्ञामात्राणां दशानां ग्राहकाणां ग्राह्यभूतमात्रापेक्षत्वं चोक्तम् । इदमेव मिथः,

सापेक्षत्वं ग्राह्यग्राहकयोः साधयति। यद्धीति। तदेव स्पष्टयति। न हीति। ग्राह्याद्ग्राह्यं न सिद्ध्यति, किन्तु ग्राहकादेव। एवं ग्राह्यं विना ग्राहकं न निर्वहतीत्यन्योन्यसापेक्षत्वमित्यर्थः। इदं ग्राह्यग्राहकद्वयं वस्तुतो न भिन्नमित्याह। नो इति। किन्त्वेकस्मिन्नात्मन्यारोपितमिति शेषः। तद्यथेत्यादि कृतव्याख्यानम्। तस्माद् ब्रह्मण एव धर्मत्रयेणोपासनमेकं विवक्षितम्। अन्यत्राऽपि,मनोमयप्राणशरीर इत्यादावुपाधिधर्मेण ब्रह्मोपासनस्याश्रितत्वादिहापि तद्युज्यते। तस्माद् ब्रह्मवाक्यमिति॥

इदमेकदेशिमतमयुक्तम्। तथाहि। किमत्रोपासात्रयविशिष्टं ब्रह्म विधेयम्,उत ब्रह्मविशिष्टोपासात्रयं, किं वा ब्रह्माऽनुवादेन तदाश्रित्योपासात्रयम्। नाद्यः।ब्रह्मणः सिद्धत्वे विध्ययोगात्। नापि द्वितीयः। वाक्यान्तरेण ब्रह्मणो ज्ञातत्वात्। नाऽपि तृतीयः। ब्रह्माऽनुवादेनोपास्तिविधावेकविशेष्यावशीकारादुपास्तीनां मिथोऽसम्बन्धात् प्रत्युपास्ति विध्यावृत्त्या वाक्यभेदस्य दुरपह्नवत्वात्। तस्माद्यथाव्याख्यातमेव रमणीयमिति ज्ञेयब्रह्मपरमेवेदं प्रतर्दनवाक्यमिति सिद्धम्॥ ३१॥

इति श्रीमद्ब्रह्मसूत्रवृत्तौ ब्रह्माऽमृतवर्षिण्यां प्रथमाध्यायस्य प्रथमः स्पष्टब्रह्मलिङ्गपादः॥ १॥ १॥

एकादशन्याया अस्मिन् पादे॥११॥ सूत्राण्येकत्रिंशत्॥३१॥

---

[ १ ] नन्वनेकप्राणजीवब्रह्मगुणविशिष्ट ब्रह्मविषयकं ब्रह्मोपासनं विधीयते। यथा आरुण्याद्यनेकगुणाविशिष्टः क्रयो विधीयते इति न दोष इतिचेत्तत्र वक्तव्यम्। आरुण्यादीनां क्रयेणान्वये पश्चादन्वयो विज्ञायते गवि, तद्वदत्र कुत्र भवतीति [illegible] प्राणादावितिचेन्न। तेषां प्रकृतेऽसत्त्वात्। ननु वयं प्राणादिगुणानां प्राणैः [illegible]मुक्त्वा पश्चादुपासनाविषये सम्बन्ध इति ब्रूम इति [illegible]पि वक्तव्यम्। प्राणा-

अथ वेदान्तदर्शने प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

एवं प्रथमे पादे स्पष्टब्रह्मलिङ्गानि वाक्यानि सर्वज्ञसर्वशक्ति-जगदुत्पत्तिस्थितिलयकारणब्रह्मपरतया नीतानि । कानिचिद् वाक्यान्यस्पष्टब्रह्मलिङ्गानि सन्दिह्यमानानि द्वितीयतृतीयपादाभ्यां ब्रह्मपरतया नीयन्ते । तत्र द्वितीयपादे प्रायश उपास्यब्रह्मपराणि विचार्यन्ते, तृतीये ज्ञेयपराणीति विभागः ॥

( १ । ब्रह्मण एव मनोमयत्वाधिकरणम् । सूत्राणि ८ )

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

पूर्वस्मिन् पादे सर्वज्ञत्वादिगुणस्य ब्रह्मणः सिद्धत्वात्तदुप-जीव्योत्तरस्योत्थानाद्धेतुहेतुमद्भावः सङ्गतिः । पूर्वोत्तरयोः, पूर्वो-ऽधिकरणेनाऽस्याधिकरणस्यावाऽन्तरसङ्गतिः । यथापूर्वं जीवादि-लिङ्गबाधया ब्रह्मपरत्वमुक्तम् । ब्रह्मलिङ्गवशात् । न तथेह ब्रह्म-लिङ्गमस्ति, किन्तु ब्रह्मणः प्राकरणिकत्वमेव । तथाच प्रकरणापेक्ष-या लिङ्गस्य बलवत्त्वाज्जीवस्य मनोमयत्वादिलिङ्गमस्तीति, त-त्परमेवास्त्विति प्रत्युदाहरणसङ्गतिः । यद्वा पादान्तरत्वाद्भावा-न्तरसङ्गत्यपेक्षेति सर्वत्राधिकरणे सविशेषवाक्यविचाररूपे पूर्वो-त्तरपक्षयोरुपास्तिरेव फलम् । यत्र तु निर्विशेषवाक्यविचारस्तत्र पूर्वपक्षे तदुपास्तिः । सिद्धान्ते प्रमितिरिति भेदः । छान्दोग्ये श्रूयते । सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीत, अथ

---

दिगुणविशिष्टत्वेन साध्यत्वं प्राणादीनाम् । तद्विशिष्टत्वेन चोपास-नायाः साध्यत्वम् । तत्र भावनाभेदे वाक्यभेदः । प्राणादिकर्मिका उपासनाकर्मिका चैकैव भावनेतिचेत्तर्हि वैरूप्यप्रसङ्गः । एकैव भा-वना गुणकरणकप्राणकर्मिका गुणविशिष्टप्राणकरणिका ब्रह्मविषयको-पासनाकर्मिका [illegible] [illegible]व्यम् ॥

खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत, मनोमयः, प्राणशरीर इत्यादि । अस्यार्थः । सर्वं जगद् ब्रह्मैव इत्यत्र हेतुमाह । तज्जेति । तस्माज्जायतेइति तज्जं, तस्मिंल्लीयतेइति तल्लं, तस्मिन्नानिति चेष्टते इति तदनम् । तज्जं च तल्लं च तदनं च तज्जलान् । अवयवलोपश्छान्दसः । इतिशब्दो हेतौ । यस्मादेवं तस्मात् सर्वं जगद् ब्रह्मैवेत्यर्थः। स क्रतुं कुर्वीतेत्यत्र विहितमुपासनमनूद्य शान्तिरूपगुणं विदधाति, शान्त इति । यतो ब्रह्माऽतिरिक्तं किञ्चिन्नास्ति । अतो द्वेष्यादीनामभावात्, शान्तः सन्नुपासीतेत्यर्थः । गुणं विधाय गुणिविधित्सया पुंप्रयत्नसाध्योपासनायाः फलमाह । अथेति । पुरुषाऽधिकृत उपासकः, क्रतुमयः संकल्पमयः । तत्र हेतुः, यथेति । ज्ञानं कर्म वा यथाऽस्मिन् देहे स्थितः संकल्पयति, तथा तदनुसारेण फलं परत्र लभते । तेन सोऽधिकृतः क्रतुं ध्यानं कुर्वीत । किं ध्यायेदित्याकाङ्क्षायामाह । मनोमय इति । विभक्तिव्यत्ययेन, मनोमयं प्राणशरीरं परमात्मानं ध्यायेदित्यर्थः । अत्र मनोमयत्वादेः प्रकृतब्रह्मसापेक्षत्वनिरपेक्षत्वाभ्यां संशयः । किमत्र मनोमयत्वादिगुणकः शारीर उपास्यत्वेन गृह्यते, किं वा परमात्मेति । किमत्र युक्तम् । शारीर इति । कुतः । अप्राणो ह्यमनाः शुभ्र इत्यादिना ब्रह्मणो मनआदिसंबन्धनिरासाज्जीवस्य मनआदिसंबन्धस्य सर्वत्र सिद्धत्वात् । तस्मान्मनोमयत्वादेः, प्रकृतब्रह्मनिरपेक्षत्वात्तद्गुणकः शारीर एवोपास्य इति प्राप्ते, ब्रूमः ॥ सर्वत्र प्रसिद्धोपदेशात् ॥ अत्र परमेव ब्रह्म उपास्यत्वेन गृह्यते । कुतः । सर्वत्र प्रसिद्धोपदेशात । सर्वेषु वेदान्तेषु यत् प्रसिद्धं ब्रह्म जगत्कारणं, तस्यैवाऽत्र, सर्वं खल्विदं ब्रह्मेत्यादिना उपदेशादित्यर्थः । यदुक्तं, मनोमयत्वादि प्रकृतब्रह्माऽसंबन्धीति ।

तन्न । मनोमयत्वादेर्विशेष्याकाङ्क्षायां यत् सर्वं खल्विदं ब्रह्मेति प्रकृतं तदेवान्वेति, नाऽप्रकृतो जीवः । अन्यथा प्रकृतहानप्रसङ्गात् । नच तदसम्भवः। सर्वात्मकत्वेन सर्वस्याप्युपपत्तेरिति ॥ १ ॥

विवक्षितगुणोपपत्तेश्च ॥ २ ॥

किञ्च, विवक्षिता उपासनायामुपादेयत्वेनोपादिष्टा ये गुणाः सत्यसंकल्पत्वादयस्तेषां ब्रह्मण्येवोपपत्तेरित्यर्थः। मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकाम इत्यादिना उपादिष्टाः । यद्यपि मनोमयत्वादि जीवस्याऽसाधारणं, तथापि सत्यसंकल्पत्वाद्यनुरोधेन, सर्वात्मके ब्रह्मणि मनोमयत्वाद्युपपत्तिः। जीवधर्मान् ब्रह्मणि दर्शयति च श्रुतिः। त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी * त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतो मुख इति । जीर्णः स्थविरो भूत्वा यो दण्डेन वञ्चति गच्छति सोऽपि त्वमेवेत्यर्थः । अप्राण इत्यादिश्रुतिस्तु निर्गुण ब्रह्मविषयेत्यविरोधः ॥ २ ॥

एवं सत्यसंकल्पत्वादीनां ब्रह्मण्युपपत्तिमुक्त्वा जीवे तेषामनुपपत्तिमाह—

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

तुशब्दोऽवधारणार्थः । अत्र मनोमयत्वादिगुणकं ब्रह्मैवोपास्यं, न तु शारीरः । कुतः । अनुपपत्तेः । सत्यसंकल्पत्वादीनां जीवे आञ्जस्येनाऽनुपपत्तेरित्यर्थः ॥ ३ ॥

शारीरस्य मनोमयत्वादिगुणकत्वाऽभावे हेत्वन्तरमाह—

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

न शारीर इत्यनुषङ्गः । न शारीरो मनोमयत्वादिगुणक इहोपास्यः । कुतः । कर्मकर्तृव्यपदेशात् । एतमितः प्रेत्याऽभिसं-

भवितास्मीति । एतमिति प्रकृतं मनोमयत्वादिगुणकमुपास्यं कर्मत्वेन व्यपदिशति । अभिसम्भवितास्मि प्राप्तास्मीति शारीरमुपासकं कर्तृत्वेन व्यपदिशति । नच सत्यां गतौ, एकस्मिन् शारीरे कर्मकर्तृभाव आञ्जस्येनोपपद्यते । तस्मान्न शारीर उपास्यः ॥ ४ ॥

किञ्च,

शब्दविशेषात् ॥ ५ ॥

मनोमयत्वादिगुणः परमात्मैव, न शारीरः । कुतः । शब्दविशेषात् । मनोमयत्वादिविशिष्टपरमात्माभिधायकस्य प्रथमान्तशब्दस्य सत्त्वादित्यर्थः । तथाहि । समानप्रकरणे, व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतन्दुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मय इत्यादौ, पुरुषो हिरण्मय इति प्रथमान्तशब्देन परमाऽऽत्माऽभिधानम् । अन्तरात्मन्निति सप्तम्यन्तेन शारीराभिधानं दृष्टमितीहाऽपि प्रथमान्तत्वेन श्रुतो मनोमय इत्यादिशब्दः परमात्मपर एवेति ॥ ५ ॥

ननु कर्मकर्तृव्यपदेशो न सम्भवति, जीवब्रह्मणोरभेदादित्याशङ्क्याह—

स्मृतेश्च ॥ ६ ॥

स्मृतिवशाज्जीवपरमात्मनोर्भेद इत्यर्थः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति * भ्रामयन् सर्वभूतानि यन्त्रारूढानि माययेत्याद्या स्मृतिः कल्पितभेदं दर्शयति । अतः कर्मकर्तृव्यपदेश उपपद्यत इत्यर्थः ॥ ६ ॥

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

ननु नाऽत्र परमात्मोपास्यः । कुतः । अर्भकौकस्त्वात् ।

अर्भकम् अल्पम् ओकः स्थानं यस्य स अर्भकौकस्तस्य भावस्तत्त्वं, तस्मादित्यर्थः । एष त आत्मान्तर्हृदय इति हृदयरूपपरिच्छिन्नायतनत्वादित्यर्थः । किञ्च, तद्व्यपदेशाच्च । स्वशब्देनैव एष अणीयान् व्रीहेर्वा यवाद्वेत्यणीयस्त्वस्य व्यपदेशादाराग्रमात्रो जीव इहोपास्यो, न सर्वगतः परमात्मेतिचेन्न । निचाय्यत्वादेवम् । एवमर्भकौकस्त्वाणीयस्त्वादिविशिष्टत्वेन रूपेण परमात्मन इह निचाय्यत्वादुपास्यत्वादित्यर्थः । सर्वगतस्य ह्यल्पदेशगतत्वं कयाचिद्व्यपेक्षया सङ्गच्छते । यथा सर्वलोकाऽधीशः परमात्मा श्रीरामचन्द्रः, अयोध्याधीश इति व्यपदिश्यते । एवं शालिग्रामे विष्णुबुद्धिवद् हृदयपुण्डरीके परमात्मा, अर्भकौकस्त्वादिगुणक उपासनापेक्षया व्यपदिश्यते । नैतावता सर्वगतत्वहानिः । तत्र दृष्टान्तः । व्योमवदिति । यथा सर्वगतमपि व्योम, सूचीपाशाद्यवच्छेदेन, अर्भकौकोऽपि अणीयोऽपि व्यपदिश्यते, तद्वद् ब्रह्मापीत्यर्थः ॥ ७ ॥

सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् ॥ ८ ॥

नन्वीश्वरस्य व्योमवत् सर्वगतत्वे, चेतनत्वाद्यविशेषाज्जीववत् सुखदुःखानुभवरूपसम्भोगप्राप्तिरितिचेन्न । वैशेष्यात् । जीवपरमात्मनोरत्यन्तं विशेषादित्यर्थः । जीवः कर्त्ता भोक्ता धर्मादिमाँश्चेति तस्य सुखदुःखसम्बन्धो युक्तः । परमात्मा तु तद्विलक्षण इति न तस्य सम्भोगप्राप्तिरिति । विशेष एव वैशेष्यं, स्वार्थे ष्यञ्,विशेषाऽतिशयद्योतनार्थो वा । नच जीवपरमात्मनोरभेदात् संभोक्तृत्वादिवैलक्षण्यमपि न स्यादिति वाच्यम् । बिम्बप्रतिबिम्बयोः परस्परधर्माऽसाङ्कर्यस्याऽऽबालं सिद्धत्वादिति । तस्मान्मनोमयत्वादिगुणकः परमात्मैवोपास्यो, न शारीर इति सिद्धम् ॥ ८ ॥

( २ । ईश्वरस्यैवात्तृत्वाधिकरणम् । सूत्रे २ )

## अत्ता चराचरग्रहणात् ॥ ९ ॥

पूर्वं ब्रह्मणो भोक्तृत्वाऽभावे उक्ते । तर्हि तद्वदत्तृत्वमपि जीवस्यैव,न ब्रह्मण इति दृष्टान्तसङ्गत्या इदमारभ्यते। अत्र पूर्वपक्षे उपास्तिः फलं,सिद्धान्ते निर्विशेषब्रह्मप्रमितिरिति विवेकः । कठवल्लीषु श्रूयते । यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः, मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इति । अस्यार्थः । यस्य परमात्मनो ब्रह्म च क्षत्रं चोभे जात्या प्रसिद्धे अन्नवदोदनः, यस्य च मृत्युः सर्वमारक उपसेचनमोदनामिश्रघृतं भवति, तत्सर्वस्याऽत्ता स परमात्मा कारणात्मा यत्र वर्त्तते तं निर्विशेषमात्मानं, नाविरतो दुश्चरितादितिमन्त्रोक्तोपायवान् यथा वेद इत्थमन्य उपायरहितो न वेदेति काक्वर्थः । अत्रौदनोपसेचनेन सूचितः कश्चिदत्ता प्रतीयते । तत्र किमग्निरत्ता, उत जीवः, आहोस्वित् परमात्मेति संशयः । त्रयाणामप्यस्मिन् ग्रन्थे प्रश्नोपन्यासः, संशयबीजम् । किं तावत् प्राप्तम् । अग्निरिति । कुतः । अग्निरन्नाद इति श्रुतिप्रसिद्धिभ्यां, जीवो वा स्यात् । तयोरन्यः पिप्पलं स्वाद्वत्तीति श्रुतेः, न परमात्मेति प्राप्ते, ब्रूमः ॥ अत्ता चराचरग्रहणात् ॥ अत्ता ईश्वरो भवितुमर्हति । कुतः । चराचरग्रहणात् । चराचरयोः स्थावरजङ्गमयोरद्यत्वेन ग्रहणात् । श्रवणादित्यर्थः । मृत्यूपसेचनत्वेन सर्वप्राणिमात्रस्याऽद्यत्वेन प्रतीयमानत्वात् । ब्रह्मक्षत्रग्रहणमुपलक्षणार्थम् । न हि सर्वसंहर्तुः परमात्मनोऽन्यस्य जीवादेश्चराचराऽत्तृत्वं युक्तम् । तस्मादत्ता ईश्वर एव ॥ ९ ॥

## प्रकरणाच्च ॥ १० ॥

इतश्चेश्वर एवात्ता । कुतः । प्रकरणात् । परमात्मनः प्रकृतत्वादित्यर्थः । न जायते म्रियते वा विपश्चिदित्यादिना परमाऽऽत्मनः प्रकृतत्वात् । क इत्था वेद यत्र स इति च दुर्विज्ञेयत्वं ब्रह्मणोऽसाधारणं लिङ्गं द्रष्टव्यम् ॥ १० ॥

( ३ । जीवब्रह्मणोरेव गुहाप्रवेशाधिकरणम् । सूत्राणि ३ )

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

पूर्वं ब्रह्मक्षत्रशब्दस्य मृत्युपदसान्निध्यादनित्यवस्तुपरत्ववदिहापि पिबच्छब्दस्य सन्निहितगुहाप्रवेशादिना बुद्धिक्षेत्रज्ञपरत्वमस्त्विवति दृष्टान्तसङ्गत्याऽस्यारम्भः । पूर्वपक्षे बुद्धिभिन्नजीवज्ञानं फलं, सिद्धान्ते तु निर्गुणब्रह्मज्ञानमितिविभागः । अत्तृत्ववाक्यानन्तरं, कठवल्लीषु पठ्यते । ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये * छायातपौ ब्रह्मविदो वदन्ति पञ्चाऽग्नयो ये च त्रिणाचिकेता, इति । अस्यार्थः । ऋतम् । आवश्यकं कर्मफलं पिबन्तौ भुञ्जानौ जीवपरमात्मानौ । छत्रिणो गच्छन्तीतिवदेकस्य जीवस्य भोक्तृत्वेन ब्रह्मणोऽपि भोक्तृत्वेन व्यपदेशः । सुकृतस्य धर्मस्य कार्ये देहरूपे लोके वर्तमानौ, परार्ध्ये परस्य ब्रह्मणोऽर्द्धं स्थानमर्हतीति परार्ध्यं हृदयं तस्मिन् परमे श्रेष्ठे या गुहा नभोलक्षणा तां प्रविश्य स्थितौ, छायातपवन्मिथोविरुद्धौ कर्तृत्वादितद्वैलक्षण्याभ्यां तौ, ब्रह्मविदः, पञ्चाऽग्नयः कर्मिणश्च वदन्ति । त्रिणाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेतास्तेऽपि वदन्तीत्यर्थः । तत्र संशयः । किमिह बुद्धिजीवौ निर्दिष्टौ, उत जीवपरमात्मानाविति । तत्र बुद्धिजीवाविति प्राप्तम् । कुतः ? । जीवस्य बुद्धिभिन्नत्वेन ज्ञानार्थं प्रश्नदर्शनात् । येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके *

एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीय इति। मनुष्ये प्रेते मृते सति, येयं विचिकित्सा संशयः, परलोकगामी भोक्ता जीवोऽस्तीत्येके, नास्तीति चाऽन्ये। अतस्त्वयोपादिष्टोऽहमेतन्निर्विचिकित्सं तत्त्वं ज्ञातुमिच्छामीति, मृत्युं प्रति नचिकेतसो वचनमिति। वराणां, नचिकेता मृत्युं प्रति वरत्रयं पृष्टवान्— स्वपितुः सौमनस्यमग्निविद्याऽऽत्मविद्या चेति। तेषां वराणां मध्ये एष तृतीयवर इत्यर्थः। एवञ्च बुद्धिजीवयोः पृष्टत्वात्तावेवाऽत्र निर्दिश्येते। किञ्च, गुहाप्रवेशस्य ब्रह्मणोऽसम्भवादृतपानाऽसम्भवाच्च बुद्धिजीवाविति प्राप्ते, भ्रमः॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्॥ गुहां प्रविष्टाविह जीवपरात्मानावेव। कुतः। आत्मानौ हि। हि यस्मादात्मानौ तस्मादित्यर्थः। ऋतं पिबन्ताविति कर्मफलभोगश्रवणेनैकस्तावदात्मेति, द्वितीयोऽप्यात्मैवेति न्याय्यः। तत्र हेतुमाह। तद्दर्शनादिति। संख्याश्रवणे द्विसंख्यावतोरेकरूपत्वस्य लोके दर्शनादित्यर्थः। तद्यथाऽस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते, गौरेव द्वितीयोऽन्वेष्टव्यो, नाऽश्वो न वा मनुष्यः। एवमिहापि चेतनत्वसामान्याज्जीवपरमात्मानावेव। बुद्धिविलक्षणजीवप्रश्नस्याऽन्यदेवोत्तरम्। नैतद्वाक्यं, नाऽपि गुहाप्रवेशानुपपत्तिर्ब्रह्मणः। यो वेद निहितं गुहायामित्यादौ बहुलं गुहाप्रवेशश्रवणात्। न चर्तपानानुपपत्तिः। छत्रिन्यायस्य दर्शितत्वादिति। तस्माज्जीवपरमात्मानावेव गुहां प्रविष्टौ॥११॥

किञ्च,

विशेषणाच्च॥ १२॥

जीवपरमात्मनोरेवास्मिन् ग्रन्थे गन्तृगन्तव्यभावेन, मन्तृमन्तव्यभावेन विशेषितत्वादित्यर्थः। आत्मानं रथिनं विद्धि शरीरं रथमेव चेत्यादिनाऽनन्तरेण ग्रन्थेन रथादिकल्पनया

विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति । परमात्मानं गन्तव्यं कल्पयति । तथा, तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् * अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीति, पूर्वस्मिन् ग्रन्थे मन्तृमन्तव्यत्वेन, तावेव विशेषितौ । स जीवोऽध्वनः संसारमार्गस्य पारमेव विशिनष्टि । तदिति । व्यापनशीलस्य ब्रह्मणः स्वरूपं परमं कार्यकारणाऽतीतं पदं, तदेव पारं ज्ञेयं, नान्यदित्यर्थः। दुर्दर्शं सूक्ष्मत्वाद् दुर्ज्ञानम् । अत एव गूढम् अनुप्रविष्टमाच्छादितरूपेण, विद्यमानम् । कुत्रेत्यत आह । गुहेति । गुहायां बुद्धावाहितं निक्षिप्तं, गह्वरे बहुविधाऽनर्थसंकटे देहे स्थितं पुराणं चिरन्तनं, तमीश्वरम् । अध्यात्मयोगः प्रत्यगात्मन्येवं चित्तसमाधानम् । तत्सहकृताद्वाक्यादधिगमः साक्षात्कारः । तेन, सोऽहमेवेति निश्चित्य, धीरो विद्वान्, हर्षाद्युपलक्षितं संसारं जहातीत्यर्थः । तथा, समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः*जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति मन्त्रान्तरेऽपि, जीवपरमात्मानावेव विशिनष्टि । मन्तृमन्तव्यभावेनात्मेश्वरयोःसमानस्तुल्यो वृक्षो देहः, पुरुषो जीवो, निमग्नः मनुष्योऽहमित्यभिनिवेशवान्, अनीशया अविद्यया, मुह्यमानः तत्त्वमजानन्, अनिशं शोचति संसारमनुभवति । जुष्टं ध्यानादिना सेवितं, यदा तत्प्रकर्षदशायामन्यं बिम्बभूतमीश्वरं प्रत्यक्त्वेन पश्यति, तदाऽस्यैवात्मत्वेन दृष्टस्य, महिमानं स्वरूपं प्राप्नोति । ततश्च वीतशोको भवति । तत्र हेतुरितिशब्देनोक्तः । बन्धहेतोरविद्याया दग्धत्वादित्यर्थः । न ह्यविद्याध्वंसानन्तरं बन्धकल्पनं युक्तम् । न ह वा एवंविदि किञ्चन रज आध्वंसते इतिश्रुतेः । रजः अविद्या निर्दग्धापि, किञ्चन, ईषदपि स्वकल्पितं, नाध्वंसते

न सम्पादयति । स्वस्या एवाऽभावादित्यर्थः । तस्मात् पूर्वस्मिन परस्मिंश्च ग्रन्थे जीवपरयोरेव विशेषितत्वात् तावेव गुहां प्रविष्टाविति जीवत्वादिधर्मविनिर्मुक्तः परमात्मा ज्ञेय इति सिद्धम् ॥१२॥

( ४ । ब्रह्मण एवाक्षिगतत्वाधिकरणम् । सूत्राणि ५ )

अन्तर उपपत्तेः ॥ १३ ॥

पूर्वं पिबन्ताविति प्राथमिकद्वित्वश्रुत्या चेतनत्वेन तुल्यजीवपरदृष्ट्यनुसाराच्चरमश्रुता गुहाप्रवेशादयो नीताः।तर्हि तद्वदेव दृश्यते इति प्राथमिकप्रत्यक्षत्वोक्त्या अक्षिप्रतिबिम्बात्माऽवगत्यनुरोधाच्चरमश्रुता अमृतत्वादयः, स्तुत्यर्थत्वेन कथञ्चिन्नेया इति दृष्टान्तसङ्गत्याऽस्यारम्भः । पूर्वपक्षे प्रतिबिम्बोपास्तिः फलं, सिद्धान्ते ब्रह्मोपास्तिरिति । उपकोशलविद्यायां छान्दोग्ये श्रूयते एषोऽन्तराक्षिणि पुरुषो दृश्यते,एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति, तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छतीत्यादि । अस्यार्थः । पुरुषः परमात्मा दृश्यते शास्त्रतः । एष आत्मेति उपकोशलं प्रति, आचार्य उवाच । प्रतिबिम्बात्मकच्छायाव्यावृत्त्यर्थमाह । एतदिति । इत्युवाचेत्यन्वयः। अक्षिरूपस्थानस्य ब्रह्मसारूप्यमाह । तदिति । वर्त्मनी पक्ष्मस्थान इति द्वितीयाद्विवचनम् । ब्रह्मणो निर्लेपत्वाच्चक्षुषोऽपि निर्लेपत्वात् सारूप्यमित्यर्थः। तत्राक्षिण्यन्तर उपादिश्यमानः परमात्मा,उत प्रतिबिम्बादिरिति संशये,दृश्यते इति वचनात् सर्वगतस्याऽक्षिस्थानत्वानुपपत्तेश्च न परमात्मा,किन्तु प्रतिबिम्बादिरिति प्राप्ते,ब्रूमः ॥अन्तर उपपत्तेः॥ अन्तरः अक्षिमध्यगतः परमात्मैव । कुतः । उपपत्तेः । आत्मत्वाऽमृतत्वाभयत्वादीनामिहोक्तानां परमात्मन्येवोपपत्तेरित्यर्थः । न च दृश्यते इत्यनेन विरोधः ।

दर्शनस्य शास्त्रीयत्वेनाऽविरोधात् । किञ्च, एतं संयद्वाम इत्याचक्षते, एतं हि सर्वाणि वामान्यभिसंयन्ति एष उ एव वामनीरेष हि सर्वाणि वामानि नयति, एष उ एव भामनीरेष हि सर्वेषु लोकेषु भातीत्यत्र, निर्दिष्टसंयद्वामत्वादिगुणानां, परमात्मन्येवोपपत्तेरन्तरः परमात्मैव । तदर्थस्तु, संयद्वामशब्दार्थमाह । एतं हीति । वामानि कर्मफलानि एतमक्षिपुरुषं हेतुमाश्रित्याऽभिसंयन्ति उत्पद्यन्ते । संयन्ति वामान्यस्मादिति संयद्वामः । सर्वफलोदयहेतुरित्यर्थः । वामनीरप्ययमेवेत्याह । एष इति । वामनीशब्दार्थमाह । एष हीति । वामानि शोभनानि जनं प्रापयति । जनस्य सर्वशुभप्रापकोऽप्ययमेवेत्यर्थः । भामनीरप्ययमेवेत्याह । एष इति । भामनीपदार्थमाह । एष हीति । भामानि भानानि नयतीति भामनीः । अयमेव सर्वप्रकाशक इत्यर्थः।न हि प्रतिबिम्बस्यान्यस्य वा एतादृशा गुणाः संभवन्ति । तस्मादक्ष्यन्तरपुरुषः परमात्मा ॥ १३ ॥

कथं पुनः सर्वगतस्याल्पमक्षिस्थानं व्यपदिश्यते इत्यत्रोत्तरं पठति—

स्थानादिव्यपदेशाच्च ॥ १४ ॥

ईश्वरस्याऽल्पस्थानादिव्यपदेशो, नानुपपन्नः ।कुतः। स्थानाऽऽदिव्यपदेशात् । यश्चक्षुषि तिष्ठन्नित्यादौ ईश्वरस्य चक्षुःस्थानव्यपदेशस्य दृष्टत्वादित्यर्थः । आदिपदेन रूपवत्त्वपरिग्रहो दृष्टान्तत्वेनोक्तः । हिरण्यश्मश्रुरित्यादौ रूपवत्त्वस्योपासनार्थत्वेनोपादानादिहाप्युपासनार्थमल्पस्थानव्यपदेशो, न विरुद्ध्यत इति भावः ॥ १४ ॥

अपिच,

सुखविशिष्टाऽभिधानादेव च ॥ १५ ॥

आक्षिपुरुषः परमात्मैवोपदिश्यते । कुतः । सुखविशिष्टाभिधानात् । एवकारेण, नाऽत्र संशयः कार्य इति सूच्यते । सुखविशिष्टं ब्रह्म वाक्योपक्रमे श्रूयते । तस्यैवेहाऽभिधानादित्यर्थः । तथाहि । गुरुगृहे आचार्याज्ञया चिरकालं वर्तमानमुपकोसलं, गार्हपत्याद्यग्नय ऊचुः— प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्मेति । तत्र कंशब्दो वैषयिकसुखे रूढः, खंशब्दश्चाऽकाशे रूढ इति परस्परभेदे प्राप्ते, श्रुतिराह । यद्वाव कं तदेव खं, यदेव खं तदेव कमिति । एवं परस्परवैशिष्ट्यप्रतिपादनात् सुखविशिष्टं ब्रह्म वाक्योपक्रमे श्रुतमिति, तस्यैवाऽत्र ग्रहणं युक्तमिति, नाऽप्रकृतच्छायादेरिति अक्ष्यन्तरः परमात्मा ॥ १५ ॥

किञ्च,

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इतश्चाक्ष्यन्तरः परमात्मा । कुतः ? ॥ श्रुतोपनिषत्कगत्यऽभिधानात् ॥ श्रुताऽभ्यस्ता उपनिषद् ब्रह्मविद्या येन स श्रुतोपनिषत्कः । तस्य या गतिः अर्चिरादिरूपा तस्याः प्रकृते अभिधानादित्यर्थः । अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते, एतद्वै प्राणानामायतनमेतदमृतभयमेतत् परायणमेतस्मान्न पुनरावर्त्तन्ते इति । स्मृतावपि, अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् * तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना इति या गतिर्ब्रह्मविदो दर्शिता, सैवाऽक्षिपुरुषविदः श्रूयते । अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति, यदुच नाऽर्चिषमेवाऽभि सम्भवन्त्युपक्रम्य आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्पुरुषोऽमानव एतान् ब्रह्म गमयतीत्येष देवपथो ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्त इति । तदर्थस्तु । अथ देहपातानन्तरं ब्रह्मचर्यादितपसा हेतुना-

ऽऽत्मानमनुसंधाय, तद्विद्यया ध्यानाख्यया उत्तरमार्गमर्चिराद्यु-पलक्षितं प्राप्य तेनाऽऽदित्यादिद्वारा, कार्यं ब्रह्म प्राप्नुवन्तीत्यर्थः। कार्यं ब्रह्म विशिनष्टि। एतदिति। व्यष्टिसमस्तेन्द्रियाणां समष्ट्यभि-मानी हिरण्यगर्भः । स्थानमित्यर्थः । तस्य वास्तवं स्वरूप-माह । एतदिति । एतद्विशेषणसिद्ध्यर्थं, हेतुमाह । एतस्मादिति । स्मृतावग्न्यादिशब्दैरातिवाहिक्यस्तदभिमानिन्यो देवता गृह्यन्ते । अथेत्युक्तार्थम् । अस्मिन्नुपासके मृते यदि पुत्रादयः, शव्यं शव-संबन्धिसंस्कारादिकर्म कुर्वन्ति, यदि वा न कुर्वन्ति उभयथा-ऽप्यप्रतिहतोपास्तिफलास्ते उपासका, अर्चिराद्यभिमानिनीं देवतां प्राप्नुवन्ति, अर्चिषोऽहर्देवतां, ततः शुक्लपक्षदेवतां, ततः षण्मासोप-लक्षितोत्तरायणदेवतां, ततः संवत्सरदेवतां, ततश्चाऽऽदित्यं, तत-श्चन्द्रमसं, ततो विद्युतम् आप्नुवन्ति । तत् तत्र स्थितान् उपा-सकान् ब्रह्मलोकादागत्याऽमानवः मनुसृष्टावनुत्पन्नो ब्रह्मलोक-भव इति यावत् स पुरुषो गन्तव्यं कार्यब्रह्म गमयति प्रापयती-ति । अर्चिरादिदेवैर्नेतृभिरुपलक्षितत्वाद्देवपथः । गन्तव्यत्वेन ब्रह्मणोपलक्षितत्वाद्, ब्रह्मपथः । एतेन यथाकार्यं ब्रह्म प्रतिपद्य-मानाः, पुनरिमं मानवं मनोःसर्गं जन्ममरणाद्यावृत्तियुक्तत्वादावर्त-रूपं, नावर्त्तन्ते नप्रविशन्ति । तस्मादक्षिपुरुषः, परमात्मा ॥ १६ ॥

इतश्चाक्षिपुरुषः परमात्मा, न प्रतिबिम्बात्मेत्याह—

अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

इतरश्छायापुरुषादिरक्षिगत इति न युक्तम् । कुतः । अन-वस्थितेः । उपासकस्य, सर्वत्राक्षिणि छायासंपादकबिम्बभूत-पुरुषान्तरस्याऽनवस्थानादित्यर्थः ॥ असम्भवाच्च ॥ अमृतत्वादि-गुणानां छायापुरुषेऽसम्भवादित्यर्थः । तथाहि । यदा कश्चित् पुरुषं

नेत्रनिकटे तिष्ठति तदानीमेव तस्य च्छाया नेत्रे दृश्यते, न सर्वदा इति छायाया अनवस्थितत्वम् । तथा जीवेऽपि गन्धरसादिग्रहणसमये घ्राणादिषु संनिहितत्वेन, नेत्रे संनिधानाभावादनवस्थितत्वम् । अमृतत्वादीनां गुणानां छायाजीवयोः सुतरामसम्भवः । तस्मात् परमात्मैव अक्षिस्थाने उपास्य इति सिद्धम् ॥ १७ ॥

( ५ परमेश्वरस्यैवान्तर्यामिताधिकरणम् । सूत्राणि ३ )

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

पूर्वं, स्थानादिव्यपदेशाच्चेति सूत्रे, यः पृथिव्यां तिष्ठन्नित्याद्यन्तर्यामिब्राह्मणस्थं, यश्चक्षुषि तिष्ठन्नित्यादि वाक्यमन्तर्यामिणो ब्रह्मत्वं सिद्धवत्कृत्य उदाहृतम् । तदाक्षिप्य समाधीयते, इत्याक्षेपसंगत्या इदमारभ्यते । पूर्वपक्षे यत्परतया वाक्यं नीयते, तदुपास्तिः फलं सर्वत्र सविशेषविचारे द्रष्टव्यम् । सिद्धान्ते ब्रह्मोपास्तिरेवेतीहाऽपि तथा फलं द्रष्टव्यम् । अन्तर्यामिब्राह्मणे श्रूयते । य इमं च लोकं परं च लोकं सर्वाणि च भूतानि, योऽन्तरो यमयतीत्युपक्रम्य, यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यादि । अत्र पृथिव्यां तिष्ठन्नन्तर्यामीत्युक्तेः, स्थावरादिरिति शङ्कां वारयति । पृथिव्या इति । तदभिमानिदेवतां प्रत्याह, यमिति । अशरीरस्य कथं नियन्तृत्वमित्याह । यस्येति । नियम्यकार्यकारणसंघातेनैव नियन्तृत्वमिति । फलितमाह । य इति । तस्य भिन्नत्वभ्रमं वारयति । एष इति । ते मम चेत्यर्थः । एवं, यः पृथिव्यां तिष्ठन्नित्याद्यधिदैवतानन्तरं, यः, सर्वेषु लोकेष्वित्यधिलोकं, यः सर्वेषु वेदेषु इत्यधिवेदं, यः सर्वेषु

यज्ञेष्वित्यधियज्ञं, यः सर्वेषु भूतेष्वित्यधिभूतं, यः प्राणेष्वित्यादि, य आत्मनीत्यन्तमध्यात्मं च कश्चिदन्तरऽवस्थितो यमयिताऽन्तर्यामी श्रूयते । स किमाधिदैवाद्यभिमानी देवतात्मा, किं वा प्राप्ताऽणिमाद्यैश्वर्यः कश्चिद्योगी, किं वा परमात्मेति संशयः । किं तावत् प्राप्तम् । देवतात्मेति । कुतः । पृथिव्येव यस्यायतनम् अग्निर्लोको, मनो ज्योतिरित्यादिना कार्यकारणसङ्घातस्य देवतायां श्रुतत्वेन, तस्या नियन्तृत्वोपपत्तेः । यस्य देवस्य पृथिवी आयतनं शरीरम् । अग्निर्लोकः, लोक्यते अनेन रूपादिरिति लोकश्चक्षुर्ज्योतिरेव मन इत्यर्थः । न ह्यशरीरस्येश्वरस्य नियन्तृत्वं युक्तम् । तस्माद् देवतात्मा योगी वेति प्राप्ते, ब्रूमः ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ अधिदैवादिषु श्रूयमाणोऽन्तर्यामी परमात्मैव। कुतः। तद्धर्मव्यपदेशात् । तस्य परमात्मनो धर्माणामिह व्यपदेशादित्यर्थः । सर्वान्तर्यामित्वमात्मत्वममृतत्वमदृष्टत्वं चेह परमात्मनोऽसाधारणधर्मा उदाहृतवाक्ये द्रष्टव्याः । नचाऽशरीरस्य कथं नियन्तृतेति वाच्यम् । नियम्यशरीरेणैव तस्य नियन्तृत्वोपपत्तेरिति ॥ १८ ॥

ननु प्रधानमन्तर्याम्यस्त्वित्याशङ्क्याह—

न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्मार्तं सांख्यस्मृतिकल्पितं प्रधानं, नान्तर्यामिशब्दवाच्यम् । कुतः । अतद्धर्माभिलापात् । तच्छब्देन प्रधानमुच्यते । न तत् अतत्, प्रधानभिन्नः परमात्मेत्यर्थः । तस्यैव चेतनस्य ये धर्मा द्रष्टृत्वादयस्तेषामिहाऽभिलापाद् अभिधानादित्यर्थः । अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञातेति, वाक्यशेषे द्रष्टृत्वादयश्चेतनधर्मा श्रूयन्ते इति नाऽचेतनं प्रधानमन्तर्यामीत्यर्थः ॥ १९ ॥

तर्हि चेतनो जीवो योगी भवत्वन्तर्यामीत्यत आह—

**शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥**

शारीरो नाऽन्तर्यामीति, नकारस्य पूर्वसूत्रादनुषङ्गः । कस्मात् । उभयेऽपि हि काण्वा माध्यन्दिनाश्चान्तर्यामिणो भेदेन एनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाऽधीयते । यो विज्ञाने तिष्ठन्निति काण्वाः । विज्ञानपदं जीवपरम् । य आत्मनि तिष्ठन्निति माध्यन्दिनाः । तस्मात् पृथिव्यादिवन्नियम्यत्वमेव जीवस्य, न नियन्तृत्वम् । भेदेनैवमधीयते इति पाठे, एवं यो विज्ञाने तिष्ठन्नित्यादिना प्रकारेणेत्यर्थो बोध्यः । तस्मादधिदैवादिष्वन्तर्यामी परमात्मेति सिद्धम् ॥ २० ॥

( ६ । परमेश्वरस्यैव भूतयोनित्वाधिकरणम् । सूत्राणि ३ )

**अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥**

पूर्वं प्रधानाविरोधिद्रष्टृत्वादिधर्मवशाद् न प्रधानमन्तर्यामीत्युक्तम् । तर्हि तद्विरोधिधर्माणामत्राऽश्रवणात् प्रधानमेवाऽदृश्यत्वादिगुणको भूतयोनिः स्यादिति प्रत्युदाहरणसङ्गत्याऽस्याऽऽरम्भः । आथर्वणं वाक्यमाम्नायते । अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीरा इत्यादि । अस्यार्थः । पूर्वमपरा ऋग्वेदादिलक्षणा विद्योक्ता । तदानन्तर्यमथशब्दार्थः । यया तदक्षरमधिगम्यते सा परा उत्कृष्टफलका विद्येत्यर्थः । अक्षरस्य वर्णसमुदायत्वं वारयति । यदिति । अद्रेश्यम् अदृश्यं ज्ञानेन्द्रियाऽगम्यम् । अग्राह्यं कर्मेन्द्रियाऽविषयम्, अगोत्रं वंशशून्यम्, अवर्णं जातिहीनम् । न केवलमिन्द्रियाऽविषयः, किन्तु तद्रहितं चेत्याह । अचक्षु-

रिति । न विद्येते चक्षुःश्रोत्रे यस्य, तत्तथा । इदं च ज्ञानेन्द्रियोपलक्षणम् । कर्मेन्द्रियाऽभावमाह । तदिति । पाणिश्च पादश्च पाणिपादम् । तद्यस्य नास्ति, तत्तथा । उपलक्षणमेतत्कर्मेन्द्रियाणां नित्यमनाशोपलक्षितं, विभुं प्रभुं, सर्वगतं सर्वकल्पनाऽधिष्ठानं, सुसूक्ष्मं दुर्ज्ञानत्वात्, तदव्ययं नाशाऽभावात् । यद् यथोक्तमक्षरं, भूतयोनिं यया परिपश्यन्ति धीराः सा परा विद्येत्यन्वयः । तत्र संशयः । किमदृश्यत्वादिगुणको, भूतयोनिः, प्रधानं, वा शारीरो वा परमात्मा वेति । अदृश्यत्वादीनां प्रधाने संभवात्, प्रधानमिति प्राप्ते ब्रूमः ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ अदृश्यत्वादिगुणको भूतयोनिः परमात्मैव । कुतः । धर्मोक्तेः । यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपस्तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते इतीश्वरधर्मस्य सर्वज्ञत्वादेर्भूतयोनौ निर्देशादित्यर्थः । सामान्यतः सर्वज्ञत्वं, विशेषतः सर्वविच्त्वम् । यस्य ज्ञानमेव तपस्तस्माद् ईश्वरादेतत् कार्यरूपं ब्रह्म हिरण्यगर्भः, सूक्ष्मभूतात्मकं नाम, स्थूलभूतात्मकं रूपं च, व्रीहियवादि सर्वं भौतिकमन्नं च जायत इत्यर्थः । नन्वक्षरात् परतः पर इत्यक्षराद् भूतयोनेः परस्येश्वरस्य सर्वज्ञत्वं श्रूयते, न भूतयोनेरितिचेन्न । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति । येन ज्ञानेनाऽक्षरं प्रकृतं भूतयोनिं सर्वज्ञं पुरुषं सत्यं वेद तां ब्रह्मविद्यामुपसन्नाय शान्ताय प्रोवाचाऽऽचार्यः । प्रब्रूयादित्युपक्रम्याक्षरात् परतः पर इत्युच्यमानः परो न भूतयोनेरतिरिच्यते, किन्त्वक्षरादित्यविद्यानिर्देशस्ततः पर इति न विरोधः । किञ्च विषयवाक्येऽक्षरात्मकभूतयोनिविद्यायाः परत्वं श्रूयमाणं, भूतयोनेर्ब्रह्मत्वं गमयति । न हि ब्रह्मविद्यातोऽन्या विद्या परा भवितुं युक्ता, मोक्षफलकत्वात् । तदात्मकत्वस्य ब्रह्मविद्याया एव सम्भवाद् । ब्रह्मविद्यो-

पक्रमे श्रूयमाणामपराविद्याम् ऋग्वेदादिलक्षणां कर्मविद्यामनित्यफलकत्वेन निन्दाति च, नित्यफलकब्रह्मविद्याप्रशंसायै ॥

तस्मात् परविद्याविषयभूतमक्षरं भूतयोनिर्ब्रह्मैव । निन्दा हि श्रूयते । प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म * एतच्छ्रेयो येऽभिनन्दान्ति मूढा जरामृत्युं ते पुनरेवापियन्तीति । निन्दित्वा च कर्मविद्यां, ततो विरक्तस्य ब्रह्मविद्याऽधिकारं दर्शयाति । परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत् समित्पाणिः, श्रोत्रियं ब्रह्मनिष्ठमिति । अस्यार्थः । प्लवन्ते गच्छन्तीति प्लवा विनाशिनः । तत्प्रसिद्धौ हिशब्दः । अत एवाऽदृढाः । के ते ? । यज्ञरूपाः । यज्ञो रूपमुपाधिर्येषां ते तथा ऋत्विगादयोऽष्टाद.श । ऋतुषु याजयन्तीति ऋत्विजः षोडश यज्ञोपाधिकाः, तद्वत्पत्नी यजमानश्च यज्ञोपाधिकौ । एवम् अष्टादश यज्ञरूपाः । क्षयिफलकत्वादवरं जघन्यं कर्म येषु । श्रुत्या विहितम् एतदेव कर्म श्रेयोहेतुर्न ब्रह्मधीरिति ये मूढा हृष्यन्ति, ते पुनर्जरापूर्वकं मरणमेवाप्नुवन्तीत्यर्थः । कर्मजन्यान् लोकान् प्रत्यक्षादिनाऽनित्यतया परीक्ष्य ज्ञात्वा निर्वेदं वैराग्यम् आयाद् गच्छेत् । कथम् ? । नाऽस्त्यकृतो मोक्षः कृतेन कर्मणा । अहं तु नित्यफलार्थी तस्मात् किं कर्मणेति विरक्तः सन् तस्य ब्रह्मणो ज्ञानार्थं गुरुपादोपसर्पणं कुर्यात् । तत् कृत्वा मुक्तिसाधनज्ञानाय श्रवणादि कुर्यादित्यर्थः । रिक्तहस्तस्तु नोपेयाद्राजानं देवतां गुरुमित्यादिना रिक्तहस्तगमनस्य निषिद्धत्वात्, समित्पाणिरित्युक्तम् । श्रोत्रियमित्यादिनाऽध्ययनहीनस्य कर्मिणो वा गुरुत्वं वार्यते कर्मनिन्दया । ततो विरक्तस्याधिकारोक्तेरक्षरविद्या ब्रह्मविद्येति फलितम् । तस्माददृश्यत्वादिगुणकः परमात्मा ॥ २१ ॥

अपिच,

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

अदृश्यत्वादिगुणकः परमात्मैव, नेतरौ प्रधानजीवौ । कुतः। विशेषणात् । दिव्यो ह्यऽमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः, अप्राणो ह्यमनाः शुभ्र इत्यादिना दिव्यत्वादिविशेषणश्रवणादित्यर्थः । प्रधाननिरासे हेत्वन्तरमाह । भेद--इति । अक्षरात् परतः पर इति प्रपञ्चोपादानस्याऽव्याकृतस्येश्वरशक्तिभूतस्य श्रुत्यविरुद्धस्य जडस्य परमात्मनश्च, भेदेन व्यपदिष्टत्वादित्यर्थः । अव्याकृतस्याऽक्षरत्वं स्वकार्यव्यापित्वेन, परत्वं स्वविकाराऽपेक्षयेति द्रष्टव्यम् । दिव्य इत्यादेरयमर्थः । दिव्यः स्वयञ्ज्योतिः, अमूर्त्तः निरवयवः, पुरुषः पूर्णः, बाह्यङ्कार्यम् आभ्यन्तरं कारणं, ताभ्यां कल्पिताभ्यां सहाऽधिष्ठानत्वेन तिष्ठतीति सबाह्याभ्यन्तरः, सर्वकल्पनाऽधिष्ठानमिति यावत् । अजः कूटस्थः। न ह्येतादृशविशेषणानि, अव्यक्ते जीवे वा सम्भवन्ति । तस्मात् परमात्मैव भूतयोनिः ॥ २२ ॥

रूपोपन्यासाच्च ॥ २३ ॥

किञ्च, भूतयोनिःपरमात्मैव, नेतरावित्यनुषङ्गः।कुतः।रूपोपन्यासात् ॥ रूपं सर्वविकारात्मकं शरीरं तस्योपन्यासादित्यर्थः । अक्षरात् परतः पर इत्यस्यानन्तरम्, एतस्माज्जायते प्राण इत्यादिना प्राणादिपृथिव्यन्तानां सृष्टिमुक्त्वा तस्यैव भूतयोनेः सर्वकार्यात्मकं रूपमुपन्यस्यति । अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः॥ वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मेति । अग्निर्द्युलोकः । असौ वाव द्युलोको गौतमाग्निरिति श्रुतेः । विवृता वेदाः वागित्यन्वयः ।

पञ्चम्यामिति । प्रथमार्थे । पादौ पृथिवी । यस्यैतादृशं शरीरं स एष सर्वभूतानामन्तरश्चात्मा चेत्यर्थः । न ह्येतादृशरूपोपन्यासो जीवाऽव्यक्तयोः परिग्रहे घटते । परमात्मनस्तु सर्वात्मकत्वात् स युज्यते । अस्य सूत्रस्य वृत्तिकारमतरीत्याऽयमर्थः प्रदर्शितः ॥

शङ्करभगवत्पादास्तु, अग्निर्मूर्द्धेति वाक्यस्य जायमानमध्यपाताज्जायमानहिरण्यगर्भरूपसूत्रात्मपरत्वं,न परमात्मपरत्वमिति वदन्ति । तथाहि । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च * खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीति । पूर्वं प्राणादीनां सृष्टिरुक्ता । तथोत्तरत्रापि, तस्मादग्निः समिधो यस्य सूर्यइति । यस्य द्युलोकादेः सूर्यः समिधोऽग्निरिव भासकः । यद्वा, अग्निर्द्युलोकः, यस्य सूर्य एव समिधः । तस्याऽऽदित्य एव समिदिति श्रुतेः । सोऽपि तस्मादेव जायत इत्यर्थः । एवं पूर्वमुत्तरत्र च जायमानानां निर्दिष्टत्वाद् अग्निमूर्द्धा इति वाक्यं जायमानहिरण्यगर्भपरमेव । जायमानहिरण्यगर्भस्याऽऽत्मन उत्पत्तिः, श्रुत्यन्तरे श्रूयते । हिरण्यगर्भः समवर्तताऽग्रे भूतस्य जातः पतिरेक आसीत् * स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेमेति । समवर्त्तत अजायत । जातः सन्नीश्वराज्ञया पतिर्बभूव भूतग्रामस्य । कस्मै हिरण्यगर्भाय । विधेम परिचरेम । सूत्रार्थस्तु, भूतयोनिः परमात्मैव । कुतः । पुरुष एवेदं विश्वं कर्मेत्यादिना सर्वात्मकरूपोपन्यासादिति । सर्वकर्मसु, साध्यं तपो ज्ञानं च पुरुष एवेत्यर्थः । तस्माददृश्यत्वादिगुणको भूतयोनिः परमात्मा निर्विशेषो ज्ञेय इति सिद्धम् ॥ २३ ॥

( ७ । परमेश्वरस्यैव वैश्वानरत्वाधिकरणम् । सूत्राणि ९ )

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

अत्र रूपोपन्यासप्रसङ्गात्त्रैलोक्यदेहो वैश्वानरः स्मृतो वि-

चार्यते इति प्रासङ्गिकसङ्गतिः । यद्वा पूर्वं वाक्योपक्रमस्थाऽदृश्यत्वादिसाधारणधर्मस्य वाक्यशेषस्थसर्वज्ञत्वाद्युक्त्या ब्रह्मविषयत्वमुक्तम् । तर्हि तद्वदेवेहाप्युपक्रमस्थसाधारणशब्दस्य वाक्यशेषस्थहोमाधारत्वोक्त्या प्रसिद्ध्यनुगृहीतया जाठरार्थकत्वमस्त्विति दृष्टान्तसङ्गतिः । को न आत्मा, किं ब्रह्मेत्यात्मानमेवेमं वैश्वानरं संप्रत्यऽध्येषि, तमेव नो ब्रूहि इत्युपक्रम्याऽऽम्नायते । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति, तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो वास्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय इत्यादि । अस्यार्थः । आत्मनोऽसंसारित्वार्थं ब्रह्मपदं, ब्रह्मणोऽपरोक्षत्वार्थमात्मपदम् । प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलाः समेत्येत्थं मीमांसां चक्रुः । को न आत्मा, किं ब्रह्मेति । ते च निश्चयार्थमुद्दालकमाजग्मुः । सोऽपि सम्यङ् न वेदेति तेनोद्दालकेन सह, वैश्वानरोऽयमिति निश्चयार्थं कैकयराजानमश्वपतिमागत्योचुः । आत्मानमित्यादि । संप्रत्यध्येषि सर्वदाऽध्यापयसि । स च कैकयराजो द्युलोकसूर्यवाय्वाऽऽकाशवारिपृथिवीनां, मध्ये द्युलोकादिरेकैक एव वैश्वानर इति मीमांसाकाले विवदमानाः प्राचीनशालादयः षड् ऋषयो मत्समीपमागता इति ज्ञात्वा तादृशविपरीतबुद्धिनिरासेन सम्यग्वैश्वानरबुद्धिजिग्राहयिषया, तानेव पप्रच्छ । औपमन्यव ! कं त्वमात्मानमुपास्स इत्यादिना । पृष्टाश्च सन्तस्तत्रैक ऋषिर्द्युलोक एव वैश्वानर इति उवाच । अन्यस्तु सूर्यो वैश्वानर इत्येवंक्रमेण पृथिवीपर्यन्तम् एकैकस्य वैश्वानरत्वं [illegible] तेषां द्युसूर्यादीनां क्रमेण सुतेजस्त्वविश्वरूप-

त्वपृथग्वर्त्मात्मत्वबहुलत्वरयित्वपादत्वगुणयोगं विधाय प्रत्येकं वैश्वानरपक्षं मूर्द्धपाताऽन्धत्वप्राणोत्क्रमणदेहशीर्णतावस्तिभेद-पादशोषणैर्दोषैर्निन्दित्वा तेषामेव द्युसूर्यादीनां वैश्वानरपुरुषं प्रति मूर्द्धादिभावमुक्त्वा कृत्स्नं वैश्वानरोपासनमुपादिशति । यस्त्वेतमित्यादिना । आभिमुख्येन विश्वं मिमीते जानातीत्य-ऽभिविमानः । तं प्रादेशपरिमाणमुपास्ते यस्तस्य सर्वलोका-द्याश्रयं फलमित्यर्थः । लोका भोगभूमयः, भूतानि तदुपा-धयः, भोक्तारः स्वयमात्मान इति भेदः । तत्तत्सम्बन्धि-फलमन्नशब्दार्थः । ध्यानफलमुक्त्वा ध्येयमाह । तस्येति । सुतेजस्त्वगुणा द्यौर्वैश्वानरस्य मूर्द्धा, विश्वरूपत्वगुणकः सूर्य-श्चक्षुः एष शुक्ल एष नील इत्यादिश्रुतेर्विश्वरूपत्वं बोध्यम् । पृथङ् नानावर्त्मगमनमात्मा स्वभावो यस्य वायोः स तथा नाना-गतित्वगुणो वायुः प्राणः । बहुलत्वगुण आकाशोऽस्य संदेहः, देहमध्यमित्यर्थः । रयिर्धनं, तद्गुणा आपोऽस्य वस्तिः मूत्रस्थान-म् । वैश्वानरस्य होमाधारत्वसंपादनार्थमुर एवेत्यादि । एवं सति वैश्वानरशब्दस्य, अयमग्निर्वैश्वानरो योऽयमन्तः पुरुष इत्यादौ जाठरे विश्वस्मा अग्निं भुवनाय देवा, वैश्वानरं केतु-मह्नामकृण्वन्नित्यादावग्निसामान्ये, वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीरित्यादावग्निशरीरायां देवतायां च प्रयोग-दर्शनाद्, उपक्रमे च, को न आत्मेत्युपक्रमाच्चेति संशयः । कि-मत्र वैश्वानरो जाठर, उताग्निसामान्यम्, उताऽग्निशरीरा देवता, आहोस्विच्छारीरः, अथवा परमात्मेति । श्रुत्यर्थस्तु, पुरुषे पुरुषाऽऽकारे देहे विश्वस्मै भुवनाय वैश्वानरमग्निमन्ह्नां केतुं चिह्नं सूर्यमकृण्वन् कृतवन्तो देवाः । तदुदये दिनव्यवहारा-दित्यर्थः । वैश्वानरस्याग्न्याधिष्ठानस्य देवस्य सुमतौ शोभनबुद्धौ

वयं स्याम भवेम, तस्यास्मद्विषया सुमतिर्भवत्वित्यर्थः । अत्र हेतुः, राजा हीति । हि यस्माद् भुवनानामयं राजा कं सुखहेतुरभिमुखा श्रीरस्येत्यभिश्रीरीश्वरः । तस्मात् तस्य सुमतौ स्यामेतिस्तुतिवाक्यार्थः । तत्र जाठरादौ वैश्वानरशब्दस्य प्रसिद्धत्वाज्जाठरादिरेव, वैश्वानरइतिप्राप्ते,ब्रूमः । वैश्वानरः साधारणशब्दविशेषात् ॥ वैश्वानरः परमात्मैव । कुतः । साधारणशब्दविशेषात् । साधारणशब्दयोरपि विशेषः साधारणशब्दविशेषस्तस्मादित्यर्थः । जाठराग्निसामान्यतद्देवतासु साधारणो वैश्वानरशब्दः, जीवपरयोः साधारण आत्मशब्दः । तयोर्वैश्वानरात्मशब्दयोर्जाठरादौ जीवादौ च साधारणयोरपि सतोः,परमात्मपरत्व एव विशेषोऽवगम्यते। तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा इत्यादावुक्तद्युमूर्द्धत्वादेः सर्वात्मकपरमात्मपरिग्रहे एवोपपन्नतरत्वात् । तस्माद्वैश्वानरः परमात्मा ॥ २४ ॥

स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

किञ्च, वैश्वानरपदस्य परमात्मपरत्वे स्मर्यमाणं स्मृत्युक्तं रूपम् अनुमानं स्यादिति । अनुमापकं लिङ्गं स्यादित्यर्थः । यस्याऽग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः ॥ सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नम इत्यस्याः स्मृतेस्त्रैलोक्यशरीराऽऽत्मकरूपप्रतिपादनपरायाउदाहृतश्रुतिरेवमूलं, मूलान्तरकल्पने मानाभावात्।तथाच स्मृतौ परमेश्वरस्यैवोक्तत्वात्तन्मूलश्रुतौ, विद्यमानवैश्वानरशब्दः परमात्मपर एवेति तात्पर्यम् ।सूत्रे इतिशब्दो हेतौ । यस्मादेवं लिङ्गमस्ति तस्माद्वैश्वानरः परमात्मैवेति ॥२५॥

शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशाऽदसंभवात् पुरुषमपि चैनमधीयते ॥ २६ ॥

ननु वैश्वानरो न परमात्मा । कुतः । शब्दादिभ्योऽन्तः-प्रतिष्ठानाच्च । शब्दस्तावद् वैश्वानरशब्दो न परमात्मपरः । जाठरादौ रूढत्वात् । आदिशब्दाद् हृदयं गार्हपत्य इत्यग्नित्रेता-कल्पनम् । तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयमित्यादिना प्राणा-ऽऽहुत्याधारतासङ्कीर्तनं च गृह्यते । एतेभ्यो हेतुभ्यो जाठर एव वैश्वानरशब्दः । किञ्च, अन्तःप्रतिष्ठानात् । पुरुषेऽन्तःप्रतिष्ठितं वेदेतिवैश्वानरस्यान्तःप्रतिष्ठानश्रवणात् । इदं च जाठरे संभवति । न च द्युमूर्द्धत्वाद्यनुपपत्तिः अग्निसामान्यात्मकभूताग्निपरिग्रहे तस्योपपत्तेः । द्युलोकादिसंबन्धस्य तस्मिन् मन्त्रेणाऽवगतत्वा-त् । यो भानुना पृथिवीं द्यामुतेमामाततान रोदसीमन्तरिक्षमिति मन्त्रः । इमां पृथिवीमुत द्यामपि, द्यावापृथिव्यावेव रोदसी, यो भानुना रूपेणाततान व्याप्तवान् अन्तरिक्षं, तयोर्मध्यं चाततान स देवोऽग्निर्द्युलोकाद्यवयवो ध्येय इति मन्त्रार्थः । तस्मान्न वैश्वानरः परमात्मेति चेन्नायं दोषः । कुतः । तथा दृष्ट्युपदेशात् । तथा जाठररूपेण परमेश्वरस्य दृष्टेरुपासनाया उपदेशादित्यर्थः । ननु जाठर एव मुख्यो वैश्वानरोऽस्तु, तत्राह । असंभवादिति । मूर्द्धैव सुतजा इत्यादेर्जाठरे असंभवादित्यर्थः । नच भूताऽग्नौ तत्संभव इत्युत्तरसूत्रे वक्ष्यते । अपिच ! पुरुषमपिचैनं वैश्वानरं वाजसने-यिनोऽधीयते । स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेव-मग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति परमेश्वरस्य सर्वात्मत्वात् पुरुषेऽन्तःप्रतिष्ठितत्वं च सर्वमप्युपपद्यते । पुरुषविध-मपिचैनमधीयते इति सूत्रपाठे अयमेवार्थः । न हि जाठरस्य पुरुषविधत्वं सम्भवति । परमात्मवस्तूपास्त्यर्थं सर्वात्मकत्वाद-ऽविरुद्धम् । यथा चैतत्तथा स्पष्टयिष्यामः, सम्पत्तेरितिसूत्रे ॥२६॥

ननु द्युमूर्द्धत्वादिकं प्रदर्शितमन्त्रवर्णाद् भूताग्नौ सम्भवति,

तच्छरीराया देवताया वा ऐश्वर्ययोगादित्यत आह—

अत एव न देवताभूतं च ॥ २७ ॥

देवता च भूतं च देवताभूतम् । एकवद्भावाद् । उभयमपि, न वैश्वानरः । कुतः । अत एव । उक्तेभ्यो हेतुभ्यः । न हि विकारस्याऽग्नेर्विकारान्तरद्युलोकाद्यात्मकत्वं सम्भवति । अग्निशरीराया देवताया अपि न सम्भवति । ईश्वराधीनैश्वर्यत्वात् । तस्मात् सर्वात्मकः परमात्मैव वैश्वानरः ॥ २७ ॥

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

पूर्वं जाठरार्थकत्वमग्न्यादिशब्दस्याभ्युपेत्य जाठरोपाधिकं वा जाठरप्रतीकं वा ब्रह्मोपास्यमित्युक्तम् । इदानीं विनैवोपाध्यादिकल्पनां साक्षादेव परमेश्वरोपासनपरिग्रहे विरोधाऽभावं जैमिनिराचार्यो मन्यते । एवं पूर्वापरपर्यालोचनया, वैश्वानरस्य ब्रह्मत्वे निर्णिते, वैश्वानरशब्दोऽग्निशब्दश्च केनाचिद्योगेन ब्रह्मपरतया नेतव्य इति तात्पर्यम् । विश्वश्चासौ नरश्चेति विश्वानरः सर्वात्मकत्वात् । विश्वेषां नरः कर्तेति वा । सर्वकारणत्वात् । विश्वे नरा नियम्या अस्येति वा सर्वेश्वरत्वात् । विश्वानर एव वैश्वानरः । राक्षसवायसादिवत् स्वार्थे तद्धितः । एवमग्निः परमात्मा । अगिधातोर्गत्यर्थकस्य निप्रत्ययान्तस्याऽग्निरिति रूपम् । तत्राऽङ्गयति गमयति जगतोऽग्रं जन्म प्रापयतीत्यग्निरग्रणीरुक्तः । एवञ्च परमात्मनोऽग्रणीत्वादग्नित्वमिति । तस्माद् वैश्वानरः परमात्मैवोपास्य इति सिद्धम् ॥ २८ ॥

ननु परमात्मनः परिग्रहे कथं प्रादेशमात्रश्रुतिरित्याशङ्क्य, तां व्याख्यामारभते—

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अनवच्छिन्नस्यापि, परमात्मनः प्रादेशमात्रत्वमुपपद्यते । कथम् । अभिव्यक्तेः । उपासकानामनुग्रहाय परमेश्वरो हृदयाद्युपासनास्थानेषु प्रादेशपरिमाणोऽभिव्यज्यते किलेत्याश्मरथ्य आचार्यो मन्यते ॥ २९ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥

प्रादेशमात्रहृत्पुण्डरीकस्थेन मनसा, अनुस्मृतेर्ध्यानात्, प्रादेशमात्र इत्युच्यते इति बादरिराचार्यो मन्यते । यथा प्रस्थपरिमितास्तण्डुलाः प्रस्था इत्युच्यन्ते, तद्वत् ॥ ३० ॥

संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥

मूर्द्धप्रभृतिचिबुकान्ते प्रादेशमात्रे वैश्वानरस्योपास्यत्वप्रतिपादनात् परमेश्वरस्य प्रादेशमात्रत्वं संपन्नम् । ततः प्रादेशमात्रत्वसंपत्तेः प्रादेशमात्रश्रुतिरुपपद्यते इति जैमिनिराचार्यो मन्यते । अस्मिन्नर्थे श्रुत्यन्तरसंवादमाह सूत्रकारः । तथाहि दर्शयति । वैश्वानरस्य प्रादेशमात्रत्वसंपत्तिद्वारा श्रुत्यन्तरमपि दर्शयतीत्यर्थः । तथाहि समानप्रकरणं वाजसनेयिब्राह्मणं द्युप्रभृतीन् पृथिवीपर्यन्तान् त्रैलोक्यात्मनो वैश्वानरस्याऽवयवान् अध्यात्ममूर्द्धादिषु चिबुकपर्यन्तेषु प्रसिद्धपुरुषाऽवयवेषु संपादयत् परमात्मनो वैश्वानरस्य प्रादेशमात्रत्वसंपत्तिं दर्शयति । एवञ्च पुरुषाऽवयवेषु वैश्वानरस्य संपादनात् पुरुषविधत्वं पुरुषाऽवयवेषु संपादितस्य वैश्वानरस्य स्थितेः पुरुषेऽन्तःप्रतिष्ठितत्वं च । यद्यपि कार्यकारणसंघातरूपपुरुषस्य यावदवयवसमुदायरूपत्वान्मूर्द्धादिचिबुकान्तेषु कतिपयावयवेषु स्थितस्य वैश्वानरस्य न पुरुषेऽन्तःस्थत्वं, तथापि यावदवयवसमुदायात्मके पुरुषे समुदायिनो मूर्द्धादिचिबुकान्तस्याऽवयवस्य, शाखाया इव वृक्षे विद्यमानत्वात् तन्निष्ठस्य वैश्वानरस्य पुरुषान्तःस्थत्वं व्यपदिश्यते ।

शाखास्थपक्षिणो वृक्षनिष्ठत्वव्यपदेशवदिति, रहस्यं ब्राह्मणं पठ्यते। प्रादेशमात्रमिह वै देवाः सुविदिता अभिसंपन्नास्तथा तु व एतान् वक्ष्यामि यथाप्रादेशमात्रमेवाऽभिसंपादयिष्यामीति । स होवाच । मूर्द्धानमुपदिशन्नुवाचैष वा अतिष्ठा वैश्वानर इति। चक्षुषी उपदिशन्नुवाचैष वै सुतेजा वैश्वानर इति । नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्मात्मा वैश्वानर इति।मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाचैष वै रयिवैंश्वानर इति। चिबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति अस्यार्थः । परमेश्वरमप्रादेशमात्रमपि सम्पदा प्रादेशमात्रमिव सम्यग्विदितवन्तो देवास्तमेवेश्वरं पूर्वमभिसम्पन्नास्ततो वो युष्मभ्यं तथा द्युप्रभृतीनवयवान् वक्ष्यामि, यथाप्रादेशपरिमाणं वैश्वानरं सम्पादयिष्यामीति प्राचीनशालादीन् प्रति अश्वपतिः कैकेयो राजोवाच । किं कुर्वन्नित्युक्ते स्वस्य मूर्द्धानमुपादिशन् कराग्रेणोपदर्शयन् । एष वै भूर्लोकादीनतीत्य तिष्ठतीति अतिष्ठा द्यौर्वैश्वानरस्याऽवयव इति प्रसिद्धम् । मनुष्यमूर्ध्नि अधिदैवम् यो मूर्द्धा द्युलोकस्तद् दृष्टिः कर्तव्या इत्युवाच । एवमेव स्वस्य चक्षुषी दर्शयन् सुतेजाः सूर्यो वैश्वानरस्य चक्षुरिति प्रसिद्धचक्षुषोर्वैश्वानरस्य अधिदैवं यदाऽऽदित्याख्यं चक्षुस्तद्दृष्टिः कर्तव्येत्युवाच । एवमग्रेऽपि स्वावयवेषु वैश्वानरावयवदृष्टिरिति द्रष्टव्यम् । पृथग्वर्त्मात्मा वायुर्वैश्वानरस्य प्राणः। मुख्यं, स्वमुखावच्छिन्नं यन्नभस्तस्मिन्नध्यात्मनभसि योऽधिदैवं बहुल आकाशो वैश्वानरस्य देहमध्यात्मकाऽवयवस्तद्दृष्टिरित्युवाचेत्यर्थः।मुख्याः स्वमुखसम्भवास्तास्वप्सु वैश्वानरस्य वस्तिभूता रैपदवाच्या या आपस्तद्दृष्टिरित्युवाचेत्यर्थः।एवं स्वचिबुके अधरमुखफलके-प्रतिष्ठापदवाच्या, वैश्वानरस्य पादभूता पृथिवी द्रष्टव्येति ॥ ३१॥

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

अस्मिन् प्रादेशपरिमाणे मूर्द्धचिबुकान्तराले एनं परमेश्वरं, जाबाला आमनन्ति।अतोऽपि प्रादेशमात्रश्रुतिरुपपन्नेत्यर्थः। एवमामनन्ति, य एषोऽनन्तोऽव्यक्त आत्मा योऽविमुक्ते प्रतिष्ठित इति। सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति वरणायां नाश्यां मध्ये प्रतिष्ठित इति। का वै वरणा, का च नाशीति। सर्वाणीन्द्रियकृतानि पापानि वारयति नाशयतीति वरणा, नाशीति। कतमच्चाऽस्य स्थानं भवतीति। भ्रुवोर्घ्राणस्य च यः सन्धिः स एव द्युलोकस्य परस्य च सन्धिर्भवतीति। अस्यार्थः। य एष प्रसिद्धः, परमात्माऽनन्तः अव्यक्तः, स्वरूपेणाऽनभिव्यक्तो दुर्विज्ञेय इतियावत्। तं कथं विजानीयामित्यत्रिप्रश्ने, याज्ञवल्क्यस्य उत्तरम्। स इति। स हि परमात्मा जीवात्मन्यऽविमुक्ते व्यवहारतः संसारिणि प्रतिष्ठितः। परस्यैव प्रत्यक्त्वादित्यर्थः। पुनरत्रिरपृच्छत्। स इति। याज्ञवल्क्यो ब्रूते। वरणायामिति। वरणादिपदार्थं वदन् पदे निर्वक्ति। सर्वाणीति।सर्वाणीन्द्रियवृत्तिकृतान् दोषान् वारयति तेन वरणा भ्रुवावित्यर्थः। तान् दोषान्नाशयतीति नाशीति। तथाच नियम्यजीवद्वारा नियन्तुरीश्वरस्याऽधिष्ठानत्वान्नासाभ्रुवोः पाप्मनाशकत्वमिति सिद्धम्। तत्रापि स्थानविशेषजिज्ञासया पृच्छति। कतमच्चेति। पूर्वोक्तमध्यशब्दार्थं स्पष्टयति। भ्रुवोरिति। तदेव स्थानमित्यर्थः। स सन्धिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य सन्धित्वेन ध्येय इत्याह। स इति। तस्मात् परमेश्वरोपास्तिपरं वैश्वानरवाक्यमिति सिद्धम्॥ ३२ ॥

इति श्रीमद्ब्रह्मसूत्रवृत्तौ ब्रह्माऽमृतवर्षिण्यां प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

वेदान्तदर्शने प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥

( १ । ब्रह्मण एव द्युभ्वाद्यायतनत्वाधिकरणम् । सूत्राणि ७ )

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

पूर्वं त्रैलोक्यात्मा वैश्वानरः परमात्मेत्युक्तं, तर्हि त्रैलोक्याऽऽयतनमन्यदित्याशङ्क्य, समाधानादाक्षेपसङ्गतिः । यद्वा उपक्रमस्थसाधारणशब्दस्य वाक्यशेषस्थलिङ्गेन द्युमूर्द्धत्वादिना, ब्रह्मपरत्ववदिहाप्युपक्रमस्थसाधारणाऽऽयतनत्वस्य, वाक्यशेषस्थसेतुश्रुत्या परिच्छिन्ने प्रधानादौ, सेतुशब्दाऽर्हे व्यवस्थास्त्विति दृष्टान्तसङ्गतिः । प्रायशो निर्विशेषे ब्रह्मणि, अस्मिन् पादे वाक्यानां समन्वयप्रतिपादनाच्छ्रुत्यध्यायपादसङ्गतयो बोध्याः। अत्र पूर्वपक्षे प्रधानाद्युपास्तिः फलं, सिद्धान्ते ब्रह्म प्रमितिरिति विवेकः। आथर्वणे श्रूयते,यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः * तमेवैकं विजानथ आत्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतुरिति ।'अस्यार्थः । लोकत्रयाधिष्ठानत्वोक्त्या, पञ्चीकृतभूताधिष्ठानत्वमाह । यस्मिन्निति। कार्यब्रह्माख्यसमष्ट्यन्तःकरणस्याऽऽत्मन्येव कल्पितत्वमाह । मन इति । इन्द्रियसमष्टिदेवतानां तत्रैव कल्पितत्वं सूचयति । सहेति । प्राणैरिन्द्रियाधिष्ठानदेवैः, चकारेण भूतसूक्ष्माऽविद्याजीवान्तर्यामिणामध्यस्तत्वं ध्वनितम् । सविलासां प्रकृतिं मायाऽऽख्यां श्रुत्युक्ततर्काग्निना विलाप्य तमेवाधिष्ठानभूतमद्वयमात्मानं विजानथेति मुमुक्षून् प्रत्याह माता श्रुतिः।तमेवेति। वाच्यवाचककल्पनानामैक्यसाक्षात्काराद्बाधमाह।अन्या इति।एष साक्षात्कारः सविलासाऽविद्यानिवृत्तिलक्षणाऽमृतत्वस्य सेतुर्व्यवस्थापक इत्याह । अमृतस्येति । विजानथ इत्युक्तः साक्षात्कारः, एष इत्युच्यते । अमृतस्य अमृतत्वस्य । अत्र द्युभ्वादीनामोतत्वश्रवणात्

किञ्चिदायतनं प्रतीयते । तत् किं प्रधानमुत जीव, आहो स्विद् ब्रह्मेति संशयः । तत्र प्रधानादिरिति प्राप्ते ब्रूमः ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ द्युभ्वाद्यायतनं, द्यौश्च भूश्च द्युभुवौ । द्युभुवादी यस्य, द्यौःपृथिवीचान्तरिक्षमित्येवमात्मकस्य, तद् द्युभ्वादि तदायतनं ब्रह्मैव।कुतः। स्वशब्दात् । स्वस्य परब्रह्मणो वाचको य आत्मशब्दस्तस्मादित्यर्थः । तमेवैकं विजानथ आत्मानमित्यात्मशब्दश्रवणादिति ॥ १ ॥

मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

किञ्च, द्युभ्वाद्यायतनं ब्रह्मैव।कुतः । मुक्तैरुपसृप्यं मुक्तोपसृप्यम्।भावप्रधानो निर्देशः।मुक्तोपसृप्यत्वस्य व्यपदेशादिति । यद्वा मुक्तैरुपसृप्यं प्राप्यं यत्तस्यैवात्र निर्देशादित्यर्थः।मुक्तोपसृप्यत्वव्यपदेशादिति पाठे, न कश्चित् प्रयासः । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः * क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे । यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय *तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति । इदं च मुक्तोपसृप्यत्वं ब्रह्मण एव श्रुत्यन्तरे प्रसिद्धम् । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः * अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति । अपि च, तमेवैकं विजानथ आत्मानमन्या वाचो विमुञ्चथेति,वाग्विमोकपूर्वकं विज्ञेयत्वं ब्रह्मलिङ्गं, श्रुत्यन्तरे तथा दृष्टत्वात्, तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः,नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तादिति । हृदयग्रन्थिः मिथ्याज्ञानं रागद्वेषादि, तद्रहितो भूत्वा छिन्नसंशयः सन् क्षीणकल्मषो यस्तस्य हृदये परमात्मा प्रकाशत इत्यर्थः। दृष्टे इति निमित्तसप्तमी । तद्दर्शनार्थमित्यर्थः । यद्वा यथाश्रुत एवार्थः । यथा नद्यः स्वनामरूपाभ्यां विनिर्मुक्ताः समुद्रं प्राप्य

तदात्मना तिष्ठन्ति तथा विद्वान् अपि साक्षात्कृतब्रह्मात्मा नाम-रूपकारणादविद्यातो विमुक्तः परादव्याकृताख्यादज्ञानात् परम् अस्पृष्टानर्थं पुरुषं पूर्णं दिव्यमखण्डचिद्धातुमात्मत्वेनाप्नोतीति मुक्तोपसृप्यत्ववाक्यार्थः । यदा ज्ञानावस्थायामस्य विदुषो हृदि स्थिताः कामादयस्तन्मूलाऽविद्या च निवर्त्तन्ते । पुनर्जन्मसम्पादककर्माभावावस्थां वक्तुम्, अथेति । धीरो विवेकज्ञानी । विवेकज्ञानमत्र पदार्थज्ञानम् । प्रज्ञामभेदलक्षणवाक्यार्थज्ञानम् । वाक्यार्थज्ञानार्थत्वेन कर्मकाण्डवैमुख्यं मुमुक्षुणा कार्यमित्याह । नानुध्यायादिति । अनात्मार्थशब्दाध्ययनफलमाह । वाच इति । वाच इत्येतत्कण्ठताल्वादीनामष्टस्थानानामुपलक्षणम् । वागादिशोषणमेव बहुशब्दचिन्तनफलमित्यर्थः । तस्माद्, द्युभ्वाद्यायतनं परं ब्रह्म ॥ २ ॥

नानुमानमतच्छब्दात् ॥ ३ ॥

अनुमीयत इत्यनुमानं सांख्यपरिकल्पितं प्रधानं, न द्युभ्वाद्यायतनम् । कस्मात् । अतच्छब्दात् । तस्य प्रधानस्याऽनुमानस्य शब्दस्तच्छब्दः । न सः, अतच्छब्दः । तस्मात् प्रधानप्रतिपादकशब्दस्याऽश्रवणादित्यर्थः । प्रत्युततद्विरोधिशब्दा एव, यः सर्वज्ञः सर्वविदित्यादयो वर्तन्त इति भावः ॥ ३ ॥

प्राणभृच्च ॥ ४ ॥

प्राणभृज्जीवोऽपि, न द्युभ्वाद्यायतनम् । कुतः । अतच्छब्दादेव । यद्यप्यात्मशब्दः साधारणः, तथाऽपि जीवस्य सर्वज्ञत्वं, द्युभ्वाद्यायतनत्वं चाञ्जसा न सम्भवतीत्यात्मशब्दस्याऽतच्छब्दत्वमेव ॥ ४ ॥

जीवनिरासे हेत्वन्तरमाह—

भेदव्यपदेशात् ॥ ५ ॥

न प्राणभृद् द्युभ्वाद्यायतनम् । कुतः । भेदव्यपदेशात् । तमेवैकं विजानथेति, ज्ञातृज्ञेयभावेन भेदव्यपदेशादित्यर्थः । जीवस्य मुमुक्षुत्वेन ज्ञातृत्वात् परिशेषाज्ज्ञेयं द्युभ्वाद्यायतनं परं ब्रह्मेति ॥ ५ ॥

तत्रैव हेत्वन्तरमाह—

प्रकरणाच्च ॥ ६ ॥

कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम् इत्युपक्रमात्, परमात्मन एवेदं प्रकरणम् । न हि जीवज्ञानात् सर्वज्ञानं सम्भवति । तस्मात् प्रकरणादपि न प्राणाभृदित्यर्थः ॥ ६ ॥

स्थित्यदनाभ्यां च ॥ ७ ॥

अपि च, न प्राणभृद् द्युभ्वाद्यायतनम् । कुतः । स्थित्यदनाभ्याम् । स्थितिश्च अदनं च ताभ्यामिति पञ्चमीद्विवचनम् । द्युभ्वाद्यायतनं प्रकृत्य, द्वा सुपर्णेतिमन्त्रे जीवस्यादनं परमात्मनः स्थितिरिति द्वे निर्दिश्येते । तयोरन्यः पिप्पलं स्वाद्वत्तीत्यदनम्, अनश्नन्नन्यो अभिचाकशीतीत्यौदासीन्येन स्थितिर्निर्दिश्यते । इदञ्च द्युभ्वाद्यायतनस्य ब्रह्मत्वे घटते, नान्यथेति । तस्माद् द्युभ्वाद्यायतनं परं ब्रह्म ज्ञेयमिति सिद्धम् ॥ ७ ॥

( २ । परमात्मन एव भूमत्वाधिकरणम् । सूत्रे २ )

भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

पूर्वमात्मशब्दाद् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम् । तदयुक्तम् । तरति शोकमात्मविदित्यत्राऽब्रह्मण्यप्यात्मशब्दप्रयोगादित्याक्षेपसङ्गत्याऽस्यारम्भः । पूर्वपक्षे प्राणोपास्तिः फलं, सिद्धान्ते ब्रह्मप्रमितिरिति । एवमेव निर्विशेषवाक्यविचारे पूर्वपक्षे यस्य कस्य-

चिदुपास्तिः, सिद्धान्ते ब्रह्मज्ञानमेवेति बोध्यम् । छान्दोग्ये श्रूयते, श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि, तं मां भगवान् शोकस्य परं पारं तारयत्विति, नारदेन पृष्टः सनत्कुमारो, नाम ब्रह्मेत्युपदिदेश । पुनर्नारदः, अस्ति भगवो ! नाम्नो भूय ? इति पप्रच्छ । तस्योत्तरं, वाग्वा च नाम्नो भूयसी इति । तथाऽस्ति भगवो वाचो भूयः ? इति प्रश्ने, मनो वा व वाचो भूय इत्युत्तरम् । एवं प्राणपर्यन्तं भूयः प्रश्नोत्तरे दृश्येते । प्राणोपदेशानन्तरं, प्रश्नं विनैवेदं श्रूयते । एष तु वा अतिवदति यः सत्येनाऽतिवदतीति । भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति । यत्र नाऽन्यत् पश्यति, नान्यच्छृणोति, नान्यद्विजानाति, स भूमा, अथ यत्राऽन्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पमित्यादि । अस्यार्थः । नाऽल्पे सुखमस्तीति, भूमैव सुखम् । तस्मान्निरतिशयं सुखमिच्छता भूमैव विजिज्ञासितव्यः विशेषेण ज्ञातुमेष्टव्य इति सनत्कुमारेणोक्ते मुमुक्षुर्नारदस्तदुपश्रुत्य भगवन् भूमानमेव विशेषेण ज्ञातुमिच्छामीत्याह । भूमानं भगव इति । भूम्नो लक्षणमाह । यत्रेति । व्यवहाराऽतीतं पूर्णं वस्त्वेव भूमेत्यर्थः । लक्षणं व्यतिरेकमुखेन स्पष्टयितुं परिच्छिन्नलक्षणमाह । अथेति । एवं स्थिते संशयः । किं प्राणो भूमा, उत परमात्मेति । प्राणो वा आशाया भूयानिति पूर्वं प्राणस्य सन्निधानात् प्राणो भूमेति युक्तम् । नच तरति शोकमात्मविदिति प्रश्नवाक्ये आत्मोपक्रमेण आत्मप्रकरणात् सन्निधेर्बलवत्त्वमिति वाच्यम् । नाम ब्रह्मेत्युपास्वेति समाधानवाक्ये नामादेरब्रह्मण एवोपदेशेन प्रश्नस्थात्मशब्दस्यापि नामादिपरत्वेनाऽनात्मपरत्वादात्मप्रकरणाऽसिद्धेः । प्रश्नोत्तरयोरेकार्थत्वनियमात् । तस्मात् प्राणो भूमेति

प्राप्ते, ब्रूमः । भूमा परमात्मैव । कुतः । सम्प्रसादादध्युपदेशात् । सम्यक् प्रसीदति अस्मिञ्जीवस्वरूपमिति सम्प्रसादः सुषुप्त्यवस्था । तस्यां चाऽवस्थायां प्राणो जागर्ति इति सम्प्रसादशब्देन प्राण उच्यते । प्राणादूर्ध्वं भूम्न उपदेशादित्यर्थः । प्राणोपदेशानन्तरम्, एष तु वा अतिवदति यः सत्येनाऽतिवदति इति तु-शब्देन, प्राणवादस्यानतिवादत्वमुक्त्वा सत्यशब्दवाच्यपरमात्मवादस्याऽतिवादत्वं ब्रुवन्, भूमानमुपादिदेश । अतो भूम्नः प्राणादूर्ध्वमुपदेश इति गम्यते । किञ्च तरति शोकमात्मविदित्यात्मप्रकरणाद् भूमा परमात्मा । नच प्रकरणासिद्धिः । आत्मोपदेशार्थं, नामाद्युपदेशेन, नामब्रह्मेत्युपास्वेत्यादेस्तरति शोकमात्मविदिति प्रश्नोत्तरत्वसिद्धेः । अतो भूमा परमात्मा, नामादिप्राणान्तमतीत्य सत्यशब्दवाच्यात्मोत्कृष्ट इति यो वदति स एषोऽतिवादीति श्रुत्यर्थः ॥ ८ ॥

धर्मोपपत्तेश्च ॥ ९ ॥

किञ्च, यत्र नान्यत् पश्यतीत्यादिनोक्तानां सर्वव्यवहाराऽभावादिधर्माणां परमात्मन्येवोपपत्तेश्च परमात्मैव भूमा । यत्र त्वस्य सर्वमात्मैवाऽभूत्तत् केन कं पश्येदित्यादिश्रुत्यन्तरे सर्वव्यवहाराभावस्य परमात्मधर्मत्वेनाऽवगतत्वात् । यो वै भूमा तत्सुखं, नाऽल्पे सुखमस्तीति भूमैव सुखमिति दुःखसहितसुखनिराकरणेन भूम्नः सुखत्वं दर्शितं ब्रह्मधर्मः । एवं यो वै भूमा तदमृतमिति श्रूयमाणममृतत्वं ब्रह्मधर्मः । अतोऽन्यदार्त्तमिति श्रुतेः । आर्तम् आर्त्तिमद्विनाशीति यावत् । एवं स्वमहिम्नि प्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मकत्वं चैते धर्मा ब्रह्मण्येवोपपद्यन्ते।तस्मात् प्राणो नोपास्यः, किन्तु भूमा परमात्मा ज्ञेय इति सिद्धम् ॥९॥

( ३ ब्रह्मण एवाक्षरताधिकरणम् । सूत्राणि ३ )

अक्षरमम्बरान्तधृतेः ॥ १० ॥

पूर्वं, सत्यशब्दस्य ब्रह्मणि रूढत्वाद् भूमा ब्रह्मेत्युक्तम् । तद्वदत्राप्यक्षरशब्दस्य वर्णेषु रूढत्वाद् वर्ण एवाऽक्षरमस्त्विति दृष्टान्तसंगतिः । ओँङ्काररूपोपास्तिः, ब्रह्मज्ञानमित्युभयत्र फलम् । बृहदारण्यके श्रूयते। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । स होवाचैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वित्यादि । अस्यार्थः । यदूर्ध्वं दिवो यदऽधस्तात् पृथिव्याः ये चोभे द्यावापृथिव्यौ यदन्तरिक्षं यद्भूतं यच्च भवद् भविष्यच्च तत्सर्वं कस्मिन्नोतं प्रोतं चेति गार्ग्या प्रश्ने कृते, याज्ञवल्क्येनाऽऽकाशे तत् सर्वमोतं प्रोतं चेति निरस्ते, गार्गी पुनरपृच्छत् । आकाशोऽव्याकृताख्यः कस्मिन्नोतप्रोतत्वेन तिष्ठतीति । याज्ञवल्क्यस्त्वाह हे गार्गि,त्वया यत् पृष्टमाकाशस्याऽधिकरणं, तदेतदक्षरमस्थूलादिविशेषणकं ब्रह्मविदो वदन्तीति । तत्र संशयः । किमऽक्षरशब्देन वर्ण उच्यते, उत ब्रह्मेति । अक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वाद् वर्ण एवाऽक्षरशब्दवाच्य इति प्राप्ते, ब्रूमः । अक्षरं ब्रह्मैव । कुतः । अम्बरान्तधृतेः । पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणादित्यर्थः । विषयवाक्याऽर्थकथनसमये अम्बरान्तधारणं प्रतिपादितम् ॥ १० ॥

नन्वम्बरान्तधृतिः प्रधानेऽपि संभवतीत्यत आह—

सा च प्रशासनात् ॥ ११ ॥

सा च धृतिः परमेश्वरस्यैव कर्म, नान्यस्याऽचेतनस्य । कुतः । प्रशासनात् । एतस्य वाऽक्षरस्य प्रशासने, गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिना प्रशासनश्रवणादित्यर्थः ।

प्रशासनं नाम आज्ञा । सा च चेतनस्यैव, नाऽचेतनस्य प्रधान-स्येति । तस्मादक्षरं ब्रह्म ॥ ११ ॥

अन्यभावव्यावृत्तेश्च ॥ १२ ॥

इतश्च परमात्मैवाऽक्षरशब्दवाच्यः । तस्यैवेश्वरस्य प्रशासनं कर्म । कुतः ॥ अन्यभावव्यावृत्तेश्च ॥ अन्यस्य प्रधानादेर्भावो धर्मोऽन्यभावः । तद्व्यावृत्तेः । तद्विपरीतधर्मश्रवणादित्यर्थः । तद्वा एतदक्षरं गार्ग्यऽदृष्टं द्रष्टृऽश्रुतं श्रोत्रऽमतं मन्त्रऽविज्ञातं विज्ञातृ इति द्रष्टृत्वादयो नाऽचेतने संभवन्ति। तस्माद् द्रष्टृत्वादिसमानाधि-करणप्रशासनवान् परमात्मैवाऽक्षरमिति । नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ इति द्रष्ट्रन्तरनिषेधाच्च, न जीवोऽप्यक्षरमिति । तस्मा-दक्षरं ब्रह्म ज्ञेयमिति सिद्धम् ॥ १२ ॥

( ४ परब्रह्मण ईक्षतिकर्मताधिकरणम् । सूत्रम् १ )

ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥

पूर्वमोङ्कारस्य पूर्वपक्षत्वेन बुद्धौ सान्निध्यात् तस्मिन्नोङ्कारे ध्यातव्यमिह निरूप्यते इति बुद्धिसान्निध्यसङ्गतिः । यद्वा पूर्व-मक्षरशब्दस्य वर्णे रूढस्यापि जगद्धृतिलक्षणलिङ्गेन ब्रह्मणि, न क्षरतीति व्युत्पत्त्या अचलत्वादनादित्वाद् व्यापित्वाद्वा,योग-वृत्तिराश्रिता । तद्वदिहापि देशपरिच्छिन्नफलश्रुतिलिङ्गेन पर-शब्दस्याऽऽपेक्षिकपरत्वविशिष्टे, हिरण्यगर्भे वृत्तिरास्त्विति दृष्टान्त-सङ्गतिः। कार्यब्रह्मण उपास्तिः पूर्वपक्षे फलम्।सिद्धान्ते परब्रह्मो-पास्तिरिति भेदः । आथर्वणे श्रूयते,एतद्वै सत्यकाम परं चाऽपरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेतीति प्रकृत्य, यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाऽक्षरेण परं पुरुषमभि-

ध्यायीतेत्यादिः । अस्यार्थः । पिप्पलादो नाम आचार्यः सत्य-कामेन पृष्टो व्याचष्टे । हे सत्यकाम, परं निर्विशेषम्, अपरं च कार्यं ब्रह्म यत्तदेतदेव योऽयमोङ्कारः, स हि प्रतिमेव विष्णोस्तस्य प्रतीकः । तस्मात् प्रणवं ब्रह्माऽऽत्मना विद्वानेतेनोङ्कारध्यानेन आयतनेन,प्राप्तिसाधनेन, पराऽपरयोरेकतरमन्वेति । यथाध्यान-म् एकमात्रे द्विमात्रे वा हिरण्यगर्भोपास्तिं कुर्यादिति दर्शयित्वा ब्रवीति । यः पुनरोमित्येतद् अक्षरं त्रिमात्रेणेति तृतीया द्वितीयात्वेन नेया । ब्रह्मोङ्काराऽभेदोपक्रमात् । तथाविधमक्षरं सूर्यान्तस्थं परं ध्यायीतेति स उपासकः सूर्यं प्राप्तः सामभिर्ब्रह्म-लोकं प्रति नीयते इत्यत्र संशयः । किमपरं ब्रह्म ध्यातव्यमु-पदिश्यते, किं वा परं ब्रह्मेति । अपरमिति प्राप्ते, ब्रूमः । स-ध्यातव्यः परमात्मात्मैव । कुतः ।ईक्षतिकर्मव्यपदेशात् । वाक्य-शेषे ध्यातव्यस्येक्षतिकर्मत्वेन व्यपदेशादित्यर्थः । स एतस्मा-ज्जीवघनात् परात् पुरिशयं पुरुषमीक्षते इति स ध्याता जीव-घनशब्देन ब्रह्मलोक उच्यते । सकलजीवाऽभिमानी हिरण्य-गर्भाधारत्वात् । तथाच ब्रह्मलोकाल्लोकान्तराऽपेक्षया परात् परं पुरुषं परमात्मानमीक्षते, साक्षात्करोतीत्यर्थः । ईक्षति–पदार्थस्य दर्शनस्य लोके यथार्थविषयकत्वाद्यथार्थस्वरूपपरमात्मैवेक्षतिकर्मेति तत्समानविषयकध्यानस्यापि परमात्मैवविषयः । ध्यानेक्षण-योरेकविषयकत्वनियमात् । यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुच्यतेइति पाप्मविषयनिर्मोकफलवचनं परमात्मानं ध्येयं सूचयति। पादोदरः सर्पः । तस्मात् क्रममुक्त्यर्थ-मोङ्कारे ध्यातव्यः परमात्मेति सिद्धम् ॥ १३ ॥

( ५ । [illegible] दहराकाशाधिकरणम् । सूत्राणि ५ )

दहर उत्तरेभ्यः ॥ १४ ॥

पूर्वं परमपुरुषशब्दस्य ब्रह्मणि रूढत्वाद् ब्रह्मोपास्यमित्युक्तं भवति तद्वदिहापि आकाशशब्दस्य भूताकाशे रूढत्वात् तस्यैवोपास्यत्वमस्त्विति दृष्टान्तसङ्गतिः। पूर्वपक्षे आकाशाद्युपास्तिः फलं, सिद्धान्ते परोपास्तिद्वारा प्रमितिरिति । छान्दोग्ये भूमविद्याऽनन्तरं श्रूयते । अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमित्यादिः । अस्यार्थः । विद्यान्तरारम्भणार्थोऽथशब्दः । यदिदमिति प्रसिद्धं हृदयं परामृष्टम् । अस्मिन्निति प्रत्यक्षत्वोक्तेः । ब्रह्मपुरं शरीरं, तस्मिन् दहरं सूक्ष्मं हृत्पुण्डरीकं तदाकारत्वात् । हृदयस्य वेश्मत्वं संपादयति । दहरेति । दहरः सूक्ष्मः, अस्मिन् हृदये अन्तराकाशः परमात्मा सदा तिष्ठतीत्यर्थः । तस्मिन् हृदये, व्यवहितत्वेऽपि, योग्यत्वात्तच्छब्देन हृदयपरामर्शः । तत् आकाशाख्यं ब्रह्माऽन्वेष्टव्यं विचार्यं विजिज्ञासितव्यं ज्ञेयमिति । अत्र दहरे पुण्डरीके, यो दहराकाशः श्रुतः, स किं भूताकाश आहोस्वित् परमात्मेति संशये, प्रसिद्धिबलाद् भूताकाश इति प्राप्तम् । यद्वा ब्रह्मपुरशब्देन शारीरमभिदधता, तत्स्वामिजीवोपस्थितेर्जीवो दहर इति प्राप्ते ब्रूमः । दहराकाशः परमात्मैव । कस्मात् । उत्तरेभ्यः । वाक्यशेषगतेभ्यो हेतुभ्यः। तथाहि । विजिज्ञासितत्वेन अभिहितस्य दहरस्याऽऽकाशस्य, तं चेद् ब्रूयुरित्युपक्रम्य किं तदत्र विद्यते यदन्वेष्टव्यं, यद्वा व विजिज्ञासितव्यमित्याक्षेपपूर्वकं समाधानवाक्यम् । स ब्रूयाद् यावान् वाऽयमाकाशस्तावनेषोऽन्तर्हृदय आकाशः, उभे ह्यस्मिन् द्यावापृथिवी अन्तरेव समाहिते इत्यादिकमाऽऽकाशोपमानत्वं द्यावापृथिव्याधिष्ठानत्वे दर्शयति । श्रुत्यर्थस्तु । तमाचार्यं शिष्या ब्रूयुः । किमिति ब्रूयुः । किं तदिति । हृत्पुण्डरीकमेव तावदल्पम् । तस्मिन् विद्यमानाऽऽकाशो-

ऽल्पतर इत्यल्पे पुण्डरीके किमस्ति यच्छ्रुतियुक्तिभ्यामन्वेष्टव्यम्। यद्वा व साक्षात्कर्त्तव्यमिति स्वल्पतादोषेण दहरस्य हेयत्वमाक्षिप्तं शिष्यैः। तत्र समाधानं स ब्रूयादिति। स आचार्यो ब्रूयात् किमिति। यावानिति। अस्मिन्निति,दहराकाशोक्तिः। अल्पत्व-दोषश्चाकाशोपमानेन, निराकृतः। तथाच द्यावापृथिव्याद्यधि-ष्ठानमाकाशोपमितं, दहराकाशाख्यं ब्रह्मैव। एवमेष आत्मा-ऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः। सत्यकामः सत्यसङ्कल्प इति च। आत्मत्वापहतपाप्मत्वादयो गुणा न भूताकाशे जीवे च सम्भवन्ति जीवे आत्मत्वसम्भवेऽप्यु-त्तरगुणानामसम्भवो बोध्यः। विमृत्युर्मरणरहितः, विजिघत्सः, विगता जिघत्सा अत्तुमिच्छा यस्य स इति विजिघत्सः। तथा तद्यथेह कर्मचितो लोकः क्षीयते। एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते इति कर्मणामन्तवत्फलत्वमुक्त्वा, अथ य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवतीति प्रकृतदहराकाशविज्ञानस्य अनन्तफलत्वं, वदन् परमात्मत्वमस्य सूचयति। सत्यान् कामांश्चेति च-कारेण तेषामप्युपास्यत्वमुक्तम्। तथाच सत्यकामादिगुणकमा-त्मानम् अनुविद्याऽनुभूय ये परलोकं व्रजन्ति तेषां सर्वेषु लोकेषु कामचारः स्वेच्छया सञ्चरणमप्रतिहतमनन्तमैश्वर्यं भव-तीत्यर्थः। तस्मादेतेभ्य उत्तरेभ्यो हेतुभ्यो दहराकाशः पर-मात्मा ॥ १४ ॥

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

उत्तरेभ्य इत्यस्य प्रपञ्चोऽयम्। किञ्चेमाः प्रजा अहरह-र्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति दहरवाक्ये प्रकृतं परमेश्वरं ब्रह्मलोकशब्देनाभिधाय प्रजाशब्दवाच्यानां जीवानां प्रत्यहं तद्-

विषया गतिरुच्यमाना गन्तव्यस्य दहराकाशस्य ब्रह्मतां गमयति। गतिं, ब्रह्मलोकशब्दं चाऽभिप्रेत्य, गतिशब्दाभ्यामित्युक्तं सूत्रकारैः । प्रत्यहं सुषुप्त्यवस्थायां, जीवस्य ब्रह्मगमनम् । तथाहि दृष्टं श्रुत्यन्तरे, सता सोम्य तदा सम्पन्नो भवतीत्यादौ । तथाच दहराकाशगमनं ब्रह्मगमनमेवेति दृढीकृतम् । तथाहि दृष्टमित्यनेन प्रत्यहं हिरण्यगर्भब्रह्मलोकगमनाऽसम्भवात्, ब्रह्मैव लोक इति कर्मधारयसमास एव ग्राह्य इत्यस्मिन्नर्थे अहरहर्गमनमेव लिङ्गमित्यनेनोक्तम् । च-शब्देन निषादस्थपतिन्यायोऽपि, कर्मधारयसमासग्रहणेन सूचितः ॥ १५ ॥

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

धृतेरपि हेतोः परमेश्वर एव दहराकाशः । अनतिक्रान्तप्रकरणं दहराकाशं निर्दिशति। अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदायेति । विधृतिरिति क्तिन्नन्तत्वाद्विधारक इत्युच्यते । सेतुशब्देन वर्णाश्रमाद्यसङ्करहेतुत्वमुच्यते । न हि सर्वलोकविधारकत्वं ब्रह्मणोऽन्यस्य सम्भवति। अस्य च विधारणलक्षणस्य महिम्नोऽस्मिन परमात्मन्यन्यत्रापि श्रुत्यन्तरे उपलब्धेः परमात्मलिङ्गत्वमेव । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इति । तथा, एष सर्वेश्वर एष लोकाऽधिपतिरेष सेतुर्विधारण एषां लोकानामसम्भेदायेति॥ १६ ॥

प्रसिद्धेश्च ॥ १७ ॥

दहराकाशशब्दोऽपि परमात्मन्येव प्रसिद्धो, न जीवे । आकाशो ह वै नाम नामरूपयोर्निर्वहिता, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते इत्यादिदर्शनात् । यद्यप्याकाशशब्दस्य भूताकाशेऽपि प्रसिद्धिरस्ति, तथापि यावान् वा अय-

माकाशस्तावानेषोऽन्तर्हृदय आकाश इति तस्योपमानत्वेन ग्रहणा-न्नोपमेयदहराकाशत्वं सम्भवतीति,दहराकाशः परमेश्वरएव॥१७॥

इतरपरामर्शात् स इतिचेन्नाऽसम्भवात् ॥ १८ ॥

ननु य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यत, एष आत्मेति होवाचेति सम्प्रसादशब्देनेतरस्य जीवस्याप्यस्मिन् प्रकरणे परामर्शात् स जीवो दहराकाशोऽस्त्वितिचेन्नाऽसम्भवात्। जीवे आकाशोपमेयत्वाऽपहतपाप्मत्वादीनामसम्भवादित्यर्थः। श्रुत्यर्थस्तु,य एष इति सर्वनामभ्यां विद्वानुक्तस्तमेव सुप्तं सर्वकालुष्यनिर्मुक्तं वक्ति। सम्प्रसाद इति।सम्प्रसादशब्देन सुषुप्त्यवस्थावाचकेनावस्थावानुच्यते। अस्मादभिमानद्वयविषयाच्छरीरात् स्थूलसूक्ष्मशरीरद्वयात् समुत्थाय विविक्तमात्मानं ज्ञात्वा विवेकज्ञानं चाऽत्र श्रवणमनननिदिध्यासनानि।तत्फलमाह।अभिनिष्पद्यत इति । अभिनिष्पत्तिः साक्षात्कारः । अस्य फलमाह । परमिति । उपसंपद्य निष्पद्यत इत्येतद्,मुखं व्यादाय स्वपितीतिवद् द्रष्टव्यम् । ज्योतिःशब्दस्य सूर्यादिपरत्वभ्रमं वारयति । एष इति । गुरुरिति शेषः ॥ १८॥

( ६ ईश्वरस्यैवाक्षिपुरुषत्वाधिकरणम् । सूत्राणि ३ )

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

नन्वपहतपाप्मत्वादीनामसम्भवान्न जीवो दहराकाश इत्यऽसङ्गतम् । श्रुतिबलेन जीवस्याप्यपहतपाप्मत्वादिसंभवात् तथाहि । दहरविद्याया उपरि प्रजापतिविद्यायां, य एषोऽक्षिणि पुरुषो दृश्यत, एष आत्मेति होवाचेति जाग्रदवस्थापन्नं द्रष्टारं जीवमुपक्रम्य, एतं त्वेव ते भूयोऽनुव्याख्यास्यामीति जीवं परामृश्य, एष स्वप्ने महीयमानश्चरत्येष आत्मेति । तद्यत्रैतत्सुप्तः सम-

स्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेत्यवस्थात्रयविशिष्टं जीवमेव प्रतिपाद्य तस्यैव जीवस्याऽपहतपाप्मत्वादि दर्शयति । एतदमृतमभयमेतद् ब्रह्मेति । नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति, नो एवेमानि भूतानीति सुषुप्त्यवस्थायामिन्द्रेणोक्तं दोषमुपलभ्य पुनः प्रजापतिरेतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवाऽन्यत्र एतस्मादित्युपक्रम्य शरीरनिन्दापूर्वकमेष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते स उत्तमः पुरुष इति जीवमेव शरीरात् समुत्थितं पुरुषं दर्शयति । तस्मादपहतपाप्मत्वादीनां श्रुतिबलाज्जीवे सम्भवाज्जीवो दहराकाश इत्युत्तराच्चेदिति सूत्रावयवार्थः । उत्तराद् य एषोऽक्षिणीत्यादिवाक्यात् । श्रुत्यर्थस्तु । इन्द्रविरोचनौ खलु सुराऽसुरराजानौ आत्मानं विविदिषन्तौ समित्पाणी प्रजापतिं जग्मतुः । आगत्य द्वात्रिंशद्वर्षाणि ब्रह्मचर्यमूषतुः । अथैतौ प्रजापतिरुवाच । किङ्कामाविह स्थो युवामिति । तावूचतुः । य आत्मा अपहतपाप्मा तमावां विविदिषाव इति । ततः प्रजापतिरुवाच । प्रथमं य एषोऽक्षिणीति । जाग्रदवस्थायामाक्षिस्थानः सन् यो दृश्यते शास्त्रतः स आत्माऽपहतपाप्मेत्युवाच । य एनाऽपहतपाप्मत्वादिगुण एतदमृतभयमेतद् ब्रह्मेति । एतच्छ्रुत्वा तौ अप्रक्षीणकल्मषतया अक्षिनिष्ठच्छायापुरुषमात्मत्वेन गृहीत्वा, पुनः प्रजापतिं पप्रच्छतुः। अथ योऽयं भगवोऽप्स्वादर्शे खड्गादौ च दृश्यते कतम एतेष्वसौ, अथवा सर्वेष्वेक एवेति । तमेतं प्रश्नं श्रुत्वा प्रजापतिरेतौ भ्रान्ताविति ज्ञात्वा, यदि वयं युवां भ्रान्तौ स्थ इति ब्रूमः तदा दौर्मनस्येन तत्त्वं न गृह्णीयातामित्यनयोराशयमनुरुद्ध्य प्रत्युवाच । उदशरावे आत्मानमीक्षेथां तत्र यद् दृश्यते तन्मां

प्रति ब्रूतमिति । तौ हृष्टा सन्तुष्टहृदयौ नाब्रूताम् । अथ प्रजापतिरेतौ विपरीतग्राहिणौ मा भूतामित्याशयवान् पप्रच्छ । किमत्राऽपश्यतामिति । तौ होचतुः । नखलोमादिमन्तं प्रतिबिम्बं पुरुषमुदशरावे अपश्यावेति । उत्पत्तिनाश–वत्त्वाद्यथाशरीरमात्मा न भवति एवं छायापुरुषोऽपि नात्मेत्येवं तौ जानीयातामित्याशयवान् प्रजापतिरुवाच । साध्वलङ्कृतौ सुवसनौ पारिष्कृतौ भूत्वा पुनरुदशरावे पश्यतं तमात्मानामिति । तौ साध्वलङ्कृतौ सुवसनौ छिन्ननखलोमानौ भूत्वा तथैव चक्रतुः । पुनः प्रजापतिना पृष्टौ तमेव च्छायात्मानमूचतुः। तदुपश्रुत्य प्रजापतिर्बताऽहो अद्यापि भ्रमो न शान्तोऽनयोरिति मत्वाऽऽत्मतत्त्वं कथयामि तावता कालेन कल्मषक्षये अस्मद्वाक्यसंदर्भपर्यालोचनयाऽऽत्मतत्त्वं प्रतिपत्स्येते स्वयमेवेत्युवाच । य आत्माऽपहतपाप्मा एतदमृतमभयमेतद् ब्रह्मेति । तयोर्मध्ये विरोचनो देहाऽनुसारित्वाच्छायाया देह एवाऽऽत्मतत्त्वमिति मत्वा स्वगृहमागत्य तथैवाऽसुरानुपादिदेश । इन्द्रस्तु खलु स्वगृहमागच्छन् मार्गे एव छायात्मनोऽनित्यत्वादिदोषं चिन्तयित्वा पुनःसमित्पाणिःसन् प्रजापतिसमीपमागत्य तेन पृष्टः सन् मार्गे चिन्तितमुवाच । प्रजापतिस्तु हे इन्द्र, त्वं कल्मषक्षयाय पुनर्द्वात्रिंशद्वर्षाणि ब्रह्मचर्यं चर, अथ प्रक्षीणकल्मषाय ते अहमेतमात्मानं भूयोऽनुव्याख्यास्यामीत्यवोचत् । स च तथाचरितब्रह्मचर्यः प्रजापतिमुपससाद । उपसन्नायेन्द्राय प्रजापतिर्व्याचष्टे । योऽक्षिणि पुरुषो दर्शितः प्रथमे पर्याये सोऽयमेव स्वप्ने वासनामयैर्वनितादिभिर्विषयैर्महीयमानः सेव्यमानोऽनेकविधान् भोगान् भुञ्जानो विहरतीतियावत् । इदं श्रुत्वा देवेन्द्रः शोकभ्रमादिविविधबाधाऽनुभवाच्च स्वप्ने किञ्चिदस्तीत्युवाच। एवमुक्तवति मघवति प्रजा-

पतिः पुनर्द्वात्रिंशतं वर्षाणि ब्रह्मचर्यं चर अद्याप्यक्षीणकल्मषोऽसीत्युवाच। चरित्वा आगतायेन्द्राय प्रजापतिर्व्याचष्टे। योऽयमाद्यद्वितीयपर्याययोरक्षिणि स्वप्ने चात्मा दर्शितः स एष सुषुप्त्यवस्थायां प्रकाशत इत्याह। तद्यत्रैतत्सुप्त इति। तदतोदिति सम्बन्धः। यत्र यस्यां सुषुप्त्यवस्थायामेतत् स्वप्नं यथा स्यात्तथा सुप्तस्तस्यामवस्थायामुपसंहृतकरणग्रामः समस्तः करणव्यापारकृतकालुष्यहीनः संप्रसन्नःस्वप्नमज्ञानमात्रतया विलापयन्मुक्ताद् व्यावृत्तः स्वप्नप्रयुक्ततैजसत्वं विहाय प्राज्ञो भूत्वा ज्ञानक्रियां विना स्वरूपचैतन्येनाऽज्ञानसाक्षी साक्ष्यस्य देहादेः स्वसत्तास्फूर्तिप्रदत्वादात्मेत्यर्थः। इदं श्रुत्वा पुनरिन्द्रो, न किञ्चित्तत्र ज्ञायते इत्याह। नाहेति। अहेतिनिपातः खेदार्थे। खिद्यमानो हीन्द्र उवाच। अयं सुप्तः पुरुषः, अयमस्म्यहमित्येवं नाऽऽत्मानमस्यामवस्थायां जानाति, इमानि भूतानि नो एव जानाति, विनाशमेव प्राप्तो भवति। नाहमत्र भोग्यं पश्यामीत्येवं दोषं दृष्ट्वा पुनः प्रजापतिमुपससाद उपसन्नं पुनरुवाच। अताऽद्यापि ते कल्मषक्षयो नाऽभवत्तदर्थं पुनः पञ्च वर्षाणि ब्रह्मचर्यं चरेति। तदेवमेकोत्तरशतं ब्रह्मचर्यं चरते सहस्राक्षाय ब्रह्मचर्यसम्पन्मृदितकषायाय प्रजापतिर्व्याचष्टे। योऽयमाद्यद्वितीयतृतीयपर्यायेषु अक्षिणि स्वप्ने सुषुप्तौ चाऽनुस्यूतोऽपहतपाप्मत्वादिगुणो दर्शितः तमेव भूयोऽनुव्याख्यास्यामि नैतस्मादन्यमित्युपक्रम्य तुरीये, मघवन् मर्त्यं वा इदं शरीरमित्यादिना शरीरं निन्दित्वा तस्मादुत्थितं जीवमेवोत्तमं पुरुषं दर्शयति प्रजापतिः। य एष सम्प्रसादोऽस्मादित्यादिना। तस्मादपहतपाप्मत्वादीनां जीवे सम्भवाज्जीव एव दहराकाश इति प्राप्ते ब्रूमः। आविर्भूतस्वरूपस्तु। तुशब्देन पूर्वपक्षव्यावृत्तिः। उत्तरात् प्रजापतिवाक्यादपि न जीवशङ्का युक्तेत्यर्थः। यत आ-

विर्भूतस्वरूपोऽत्र जीवो विवक्षितो, न तु जीवत्वेन रूपेणेति परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते इत्युपसंहारदर्शनात् यदपहतपाप्मत्वादिभिः प्रतिपाद्यं परं ब्रह्म तदेव जीवस्य पारमार्थिकं स्वरूपं, न तु जीवत्वम् । तथाचाविर्भूतस्वरूपस्य जीवस्य ब्रह्मत्वेनाऽपहतपाप्मत्वादिकमुपपद्यते । न तु जीवत्वेन रूपेणेति, नासम्भवादितिपूर्वसूत्रस्थहेतुर्नासिद्ध इतिभावः ॥१९॥

ननु दहराकाशस्येश्वरत्वेऽथ य एष सम्प्रसाद इत्यादिना जीवपरामर्शो व्यर्थः स्यादित्यत उत्तरं पठति—

अन्यार्थश्च परामर्शः ॥ २० ॥

अन्यार्थोऽयं जीवपरामर्शो न जीवप्रतिपादनाय।परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यत इत्युपसम्पत्तव्यपरमात्मपर एवाऽयं जीवपरामर्शः । जीवोपसम्पत्तव्यत्वेन हि परमात्मोपदिश्यते । स चोपदेशो जीवपरामर्शं विना न सम्भवतीति तदर्थं जीवपरामर्शो न जीवप्रतिपादनार्थमिति ॥ २० ॥

अल्पश्रुतेरितिचेत्तदुक्तम् ॥ २१ ॥

ननु दहरोऽस्मिन्नन्तराकाश इत्याकाशस्याऽल्पत्वश्रवणान्न परमात्मत्वं किन्त्वाराग्रमात्रजीवत्वं युक्तमितिचेत्, तत्र समाधानमुक्तम्, अर्भकौकस्त्वात्तद्व्यपदेशाच्चेत्यत्र । उपासनार्थमौपाधिकमल्पत्वं, परमेश्वरेऽप्यविरुद्धमित्यर्थः । तस्माद् दहराकाशः परमात्मैवोपास्य इति सिद्धम् ॥ २१ ॥

( ७ । चैतन्यस्य सर्वजगद्भासकत्वाधिकरणम् । सूत्रे २ )

अनुकृतेस्तस्य च ॥ २२ ॥

पूर्वं परं ज्योतिरुपसम्पद्येति वाक्यार्थविचारप्रसङ्गात्, तच्छुभ्रं ज्योतिषां ज्योतिरितिवाक्योक्तपरं ज्योतिष्ट्वाभ्यर्कं न

तत्रेति वाक्यं विचार्यत इति प्रसङ्गसङ्गतिरस्याधिकरणस्य । यद्वा पूर्वत्राऽऽत्मश्रुत्यऽनुरोधादाकाशशब्दस्य रूढित्यागेन ईश्वरे वृत्तिरुक्ता । तथेहापि तत्रेति सतिसप्तम्या । तत्र शब्दवाच्यस्य तेजोऽन्तराभिभावकत्वप्रतीत्यनुरोधान्न भातीत्यस्य वर्तमानार्थत्यागेन यस्मिन् सति सूर्यादिकं न भास्यति स तेजोधातुरुपास्यत्वेनोच्यते इति पूर्वपक्षोत्थानाद् दृष्टान्तसङ्गतिः । पूर्वपक्षे अलौकिकतेजउपास्तिः फलं, सिद्धान्ते निर्विशेषब्रह्मप्रमितिरिति भेदः। मुण्डकोपनिषदि श्रूयते । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः * तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति । सिद्धान्ते तत्रेति विषयसप्तमी । तथाच तत्र तस्मिन ब्रह्माणि विपये सूर्यादयो न भासकत्वेन भासन्ते । यथा घटादौ विपय आलोकादिकं भासकत्वेन भासते, तद्वत् । अल्पतेजसो वह्नेः फल्गुत्वमभिप्रेत्य कैमुतिकन्यायमाह । कुत इति। इतश्च सूर्यादेर्न ब्रह्माणि भासकत्वमित्याह तमेवेति । यथा सूर्यादिप्रकाश्यो घटादिर्न सूर्यादिप्रकाशकः, एवं ब्रह्मप्रकाश्यः सूर्यादिर्न ब्रह्मप्रकाशक इत्यर्थः । ननु यथा गुरौ गच्छति शिष्यस्याऽनुगमनं स्वनिष्ठगमनकृतम्, एवं सूर्यादेः स्वनिष्ठभानकृतमनुभानं किन्नेत्यत आह । तस्येति। यथाऽयःपिण्डस्य दाहक्रिया वह्निनिष्ठैव, तथा सूर्यादेर्भानं ब्रह्मनिष्ठमेव, न पृथग् भानामित्यर्थः । अत्र संशयः। सूर्यादिजगद्भासकतया प्रतीयमानं तेजोविशेषो वा ब्रह्म वेति। तेजस एव प्रकाशकत्वप्रसिद्धेः प्रबलेन तेजसा दुर्बलस्याऽभिभवदर्शनाच्च, तेजोविशेष एवेति प्राप्ते ब्रूमः ॥ अनुकृतेस्तस्य च ॥ अत्र तथा प्रतीयमानं ब्रह्मैव । कुतः । अनुकृतेः । अनुकृतिरनुकरणम् । यत्तमेव भान्तमनुभाति सर्वमित्यनुभानं, तदनुकृतिशब्देनोच्यते । न हि तेजस्तेजोऽन्तरे-

भासमाने भासते । तस्मात् स्वप्रकाशतया भासमानं चैतन्य-मनुसर्वं सूर्यादि भासत इति युक्तम् । सूत्रे, तस्य चेत्यनेनोदाहृत-वाक्ये चतुर्थचरणोऽभिप्रेतः । तस्य भासा सर्वमिदं विभातीति सर्वभासकत्वं, तेजोऽन्तरस्याऽप्रसिद्धं, विरुद्धं च । भासमानस्य तेजसस्तेजोऽन्तराभिभावकत्वेन भासकत्वाऽभावात् । ब्रह्मणस्तु उपपन्नम् । तद्देवा ज्योतिषां ज्योतिरित्यादौ प्रसिद्धं च । न तत्रेति तच्छब्देन च, हिरण्मये परे कोशे विरजं ब्रह्मनिष्कलम् * तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुरिति प्रकृतब्रह्म-ग्रहणमेव युक्तमिति । श्रुत्यर्थस्तु । हिरण्मये ज्योतिर्मये आनन्द-मय इत्यर्थः । तस्मिन्नन्नमयाद्यपेक्षया परे कोशे ब्रह्मपुच्छं प्रति-ष्ठेति यत्प्रतिष्ठाभूतं ब्रह्म तत्प्रतिष्ठितम् । तच्च विरजम् आगन्तुक-मलशून्यम् । निष्कलं निरवयवं शुभ्रं नैसर्गिकदोषशून्यम् । ज्योतिषां सूर्यादीनां ज्योतिरवभासकम् । तच्च विदुषामनुभव-सिद्धमिति ॥ २२ ॥

अपि च स्मर्यते ॥ २३ ॥

अपि च ब्रह्मणः सूर्याद्यप्रकाश्यत्वं तत्प्रकाशकत्वं च भगव-द्गीतासु स्मर्यते । न तद्भासयते सूर्यो न शशाङ्को न पावकः * यद्गत्वा न निवर्तन्ते तद्धाम परमं मम । यदादित्यगतं तेजो जग-द्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाऽग्नौ तत्तेजो विद्धि मामक-मिति ॥ तस्मादनन्यप्रकाश्यः सर्वजगद्भासकः परमात्मा ज्ञेय इति सिद्धम् ॥ २३ ॥

( ८ । परमेश्वरस्याङ्गुष्ठमात्रत्वाधिकरणम् । सूत्र २ )

शब्दादेव प्रमितः ॥ २४ ॥

पूर्वत्राऽनुमानादिना लिङ्गेन तत्रेति विषयसप्तमीं कृत्वा, न

भातीत्यादौ णिजऽध्याहारेण न भासयतीत्यर्थो वर्णितो भवति। भासकत्वेन न भान्ति सूर्यादय इत्यर्थकथनात् । तथेहापि, अङ्गुष्ठमात्र इति परिमाणलिङ्गाज्जीवमादायेशानोऽसीति स्मारये-दिति विध्यध्याहारेणोपास्तिपरमङ्गुष्ठवाक्यमस्त्विति दृष्टान्तसङ्ग-तिः। पूर्वपक्षेऽभेदोपास्तिः फलं, सिद्धान्ते अभेदप्रमितिः फल-म्। कठवल्लीषु पठ्यते। अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि ति-ष्ठति। तथा, अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाऽधूमकः। ईशानो भूतभव्यस्य स एवाऽद्य स उ श्वः। एतद्वै तदिति च। अस्यार्थः। स्वाभाविकं परिच्छेदं वारयति । पुरुष इति। पूर्णत्वेन सर्वत्रो-पलभ्यमान इत्यर्थः । तर्हि कथमङ्गुष्ठमात्रत्वमित्याशङ्क्याऽभि-व्यक्तिस्थानद्वारा तदाह। मध्य इति। आत्मनि देहमध्ये हृदय-पद्मनीत्यर्थः॥ जीवभावमापन्नस्य ब्रह्मण इदमङ्गुष्ठमात्रत्वसमर्थन-मिति बोध्यम् । ईशानो भूतभव्यस्येत्यादिना, त्वंपदवाच्या-ऽङ्गुष्ठमात्रजीवाऽनुवादेनाऽभेदबोधनादिति, तस्यैव परमात्मत्व-वादिवाक्यान्तरमुदाहृतम् ।तथेति ।अधूमकमिति लिङ्गव्यत्य-यः। ज्योतिःपरत्वात् । यथाऽधूमकं ज्योतिरकलुषितमेकरूपं प्रकाशमात्रं दृष्टं तथाऽयमपि। वस्तुतः कूटस्थप्रकाशधातुरित्यर्थः। शोधितत्वमर्थस्य तदर्थतामाह । ईशान इति । भूतभव्यग्रहणं भवतोऽप्युपदर्शनार्थम्। अद्वितीयत्वमाह। स एवेति। अद्य वर्त-मानकाले, स एवास्ति । श्वः भविष्यत्काले, स एव भविता। अतीतकाले स एवाऽऽसीत्। यन्नचिकेतसा पृष्टम्,अन्यत्र धर्मा-दित्यादिना तदेतदेवाऽद्वितीयं वस्त्विति । अत्र संशयः। कि-मिदमङ्गुष्ठवाक्यं जीवपरमुत ब्रह्मपरमिति। तत्राङ्गुष्ठपरिमाणस्य ब्रह्मण्यसंभवाज्जीवपरमिदं वाक्यमिति प्राप्ते ब्रूमः। प्रत्यगभिन्नः परमात्मा वाक्यप्रतिपाद्यः [illegible]। कस्मात् ? । शब्दादेव ।

ईशानो भूतभव्यस्येत्यत्रत्येशानशब्दात् । न हि जीवे ईशानशब्द आञ्जसः । न चाङ्गुष्ठपरिमाणलिङ्गाज्जीवः प्रतिपाद्य इति युक्तम् । लिङ्गश्रुत्योर्विरोधे श्रुतेः प्रबलत्वात् । एतत्सूचनार्थमेवकारः । ननु वाक्यस्य परमात्मपरत्वे कथमङ्गुष्ठमात्रत्वस्योपपत्तिरिति चेत्, काऽत्र कथन्ता । त्वम्पदवाच्याङ्गुष्ठमात्रजीवानुवादेन ब्रह्माऽभेदपरे वाक्ये अनुपपत्त्यभावादिति ॥ २४ ॥

ननु जीवस्य वस्तुतः सर्वगतस्य कथमङ्गुष्ठमात्रत्वमित्यत आह—

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

तु-शब्दः शङ्कानिरासार्थः। वस्तुतः सर्वगतस्यापि जीवभावमापन्नस्य परमात्मनोऽङ्गुष्ठपरिमाणहृदयावच्छिन्नतयाङ्गुष्ठमात्रत्वमुपपद्यत इत्यर्थः । ननु गजपुत्तिकादिशरीरेषु हृत्पुण्डरीकस्याऽनियतपरिमाणत्वात् कथं जीवस्याङ्गुष्ठमात्रत्वनियमस्तत्राह । मनुष्याधिकारत्वादिति । शास्त्रस्येतिशेषः । षष्ठे, फलार्थे कर्मणि तिर्यगादेरपि स्वर्गकामस्याऽधिकारः । स्वर्गकामश्रुतेरविशेषादित्याशङ्क्याङ्गश्रुत्यर्थवत्त्वाय समर्थविषयतया तिर्यगादेः सामर्थ्याऽभावेन स्वर्गकामपदं संकोच्य मनुष्याऽधिकारत्वे स्थिते चातुर्वर्ण्यमधिकरोति शास्त्रमिति प्राप्य, वसन्ते ब्राह्मणोऽग्नीनाऽऽदधीत, ग्रीष्मे राजन्यः, शरदि वैश्य इति, त्रयाणामेवाऽग्निसंबन्धश्रवणात्तेषामेवाऽधिकार इति राद्धान्तितम् । तथाच मनुष्याणां हृदयस्याङ्गुष्ठमात्रत्वात्तदपेक्षयाऽङ्गुष्ठमात्रत्वमित्यविरोध इति तात्पर्यम् । एवमङ्गुष्ठमात्रजीवाऽनुवादेन विरुद्धांशं परित्यज्याऽभेदो बोध्यते । अनेन वाक्येन इममर्थमुत्तरग्रन्थसंदर्भेण स्पष्टीकरिष्यति । अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात् प्रवृहेन्मुञ्जा-

द्विवेषीकां धैर्येण तं विद्याच्छुक्रममृतमिति । अस्यार्थः । योऽन्तरात्मा पुरुषत्वात् पूर्णोऽयं जनानां हृदये सदा सन्निविष्टः, अतोऽङ्गुष्ठमात्र इति त्वम्पदवाच्याऽनुवादः । तस्याऽन्वयव्यतिरेकाभ्यां तदनुसारिश्रुत्या च शोध्यत्वमाह । तं स्वादिति । शरीरं स्थूलं सूक्ष्मं च तस्मात् स्वाऽभिमानविषयात्, प्रवृहेत् पृथक् कुर्याद्धैर्येण समाधिनेति यावत् । तं विविक्तमात्मानं विशुद्धममृतं ब्रह्मैव जानीयादित्याह । तमिति । तदेवं काठकवाक्यं प्रत्यग् ब्रह्मणि ज्ञातव्ये समन्वितमिति सिद्धम् ॥ २५ ॥

( ९ । देवादीनामप्यधिकारित्वाधिकरणम् । सूत्राणि ८ )

तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥

पूर्वं मनुष्याधिकारं शास्त्रमित्युक्तम् । तर्हि क्रममुक्त्यर्थाऽभि[illegible]ासनाभिर्मनुष्याणां देवत्वं प्राप्तानामधिकारो न स्यादित्याक्षिप्य समाधीयत इत्याक्षेपसंगत्याऽस्यारम्भः, प्रसङ्गसङ्गत्या वा । अत्र चाऽधिकारनिरूपणद्वारा मन्त्रार्थवादादीनां मानान्तरप्रमिति[illegible]धयोरसतोर्देवताविग्रहादौ समन्वयोक्तेरध्यायसङ्गतिः । एवं मन्त्रादीनां स्वार्थे प्रामाण्ये न्यायसाम्याद् उपासनाऽधिकार्यादिसमर्पकाणां स्वार्थे प्रामाण्यात्तत्त्वमस्यादिवाक्यानां ब्रह्मात्मैक्ये पर्यवसानमिति श्रुतिशास्त्रपादसंगतयः । पूर्वपक्षे मन्त्राद्यप्रामाण्यादुपगमनादिवाक्यानामपि स्वार्थे तदयोगात् तत्त्वमस्यादेरपि नैक्यनिष्ठतेति फलति । सिद्धान्ते तत्सर्वसंभवादैक्यनिष्ठतेति फलम् । यद्वा देवानामनधिकारात् क्रममुक्तिसाधनेषूपासनेषु देवतादिभोगद्वारा मोक्षका[illegible]मनुष्यप्रवृत्तिर्नास्तीति पूर्वपक्षे फलम् । सिद्धान्ते ता[illegible]प्रवृत्तिरस्तीति । बृहदारण्यके श्रूयते । तद्यो यो देवानां प्रत्यबुध्यत, स एव तदभवत्तथर्षीणां

तथा मनुष्याणामिति देवादीनां मध्ये यो ब्रह्म प्रत्यक्त्वेन, साक्षादकरोत् स एव ब्रह्मात्मनाऽतिष्ठदित्यर्थः । अत्र किं देवाऽऽदीनां ब्रह्मविद्यायामधिकारोऽस्त्युत नास्तीति विशये, शास्त्रस्य मनुष्याधिकारत्वान्नास्तीति प्राप्तेऽभिधीयते ॥ तदुपर्यपि बादरायणः संभवादिति ॥ तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तेषामपि ब्रह्मविद्यायामधिकारोऽस्तीति बादरायण आचार्यो मन्यते स्म । कस्मात् । सम्भवात् । अर्थित्वसामर्थ्याद्यधिकारकारणस्य संभवादित्यर्थः । देवादीनां सदा भोगशालित्वेऽपि भोग्यवस्तुष्वऽनित्यत्वदोषदर्शनाद्वैराग्यादिकं निरतिशयानन्दमोक्षार्थित्वं च सम्भवतीति भावः ॥ २६ ॥

विरोधः कर्मणीति चेन्नाऽनेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

ननु देवादीनां विग्रहवत्त्वं विना ब्रह्मविद्यायामनधिकारात्, तदङ्गीकरणीयम्।तथाच सति कर्मण्यपि शरीरतया ऋत्विगादिवत् सान्निधानेनैवोपकारकत्वं स्यात् । तच्च न संभवति । एकस्य शरीरस्याऽनेकत्र युगपत्सान्निधानाऽसंभवात् । तस्माद्विग्रहवत्त्वाऽङ्गीकारे कर्मणि देवताया उपकारकत्वविरोधः प्रसज्ज्येतेतिचेन्नैष दोषः । कस्मात् । अनेकप्रतिपत्तेर्दर्शनात् । एकस्य देवस्याऽनेकेषां शरीराणां युगपत्प्राप्तेः श्रुतौ दर्शनादित्यर्थः । तथाहि बृहदारण्यके शाकल्यब्राह्मणम् । अथ हैनं विदग्धः शाकल्यः पप्रच्छ । कति देवा याज्ञवल्क्येत्युपक्रम्य, सहैतयैव निविदा प्रतिपेदे, यावन्तो वैश्वदेवस्य निविद्युच्यन्ते । त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्युक्त्वा कतमे त इति पृच्छायां महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति त्रिसहस्रषडधिकात्रिशतदेवानां त्रयस्त्रिंशद्देवेषु अन्तर्भावमुक्त्वा त्रयस्त्रिंशतोऽपि षट्सु षण्णां त्रिषु त्रयाणां द्वयोर्द्वयोरेकस्मिन् वाय्वात्मके देवेऽन्तर्भावं ब्रुवन् एकस्य

वायोरनेकरूपतां दर्शयति। अस्यार्थः । एनं याज्ञवल्क्यं विदग्धः शाकल्यो वैश्वदेवनामकस्य शस्त्रस्य निविदि शस्यमाना देवाः कतीति पप्रच्छ । तत्र याज्ञवल्क्योत्तरं निविदि त्रयश्चेत्यादि । शस्यमानदेवनिष्ठसंख्यावाचकं मन्त्रपदं निविदित्युच्यते । एवं षडधिकत्रिशताधिकत्रिसहस्रसंख्या।निर्णयानन्तरं कतमे त इति संख्येयस्वरूपप्रश्ने अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्याः प्रजापतिरिन्द्रश्चेति त्रयस्त्रिंशद्देवेषु पूर्वेषामन्तर्भावो दर्शितो, महिमान एवैषामित्यादिना।एषां त्रयस्त्रिंशद्देवानां महिमानो विस्तारा एव वस्तुतस्त्रयस्त्रिंशद्देवेत्यर्थः । तेऽपि त्रयस्त्रिंशद्देवाः षण्णामग्निपृथिवीवाय्वन्तरिक्षाऽऽदित्यदिवां महिमानः । तेऽपि षड्देवास्त्रयाणां लोकानां महिमानः । ते त्रयो देवा द्वयोरन्नप्राणयोस्तौ चैकस्य प्राणशब्दवाच्यस्य वायोर्महिमानाविति ॥ यद्वा अनेकप्रतिपत्तेर्दर्शनादनेकत्र कर्मणि एकस्य प्रतिपत्तिरङ्गभावः । तस्य लोके दर्शनादित्यर्थः । यथा बहुभिर्नमस्कुर्वाणैर्युगपदेको ब्राह्मणो नमस्क्रियमाणो दृश्यते। एवमेकां विग्रहवतीं देवतामुद्दिश्य युगपत् सर्वे हवींषि त्यक्ष्यन्तीति नकश्चित् कर्मणि देवताया उपकारकत्वे विरोधः ॥ २७ ॥

शब्द इतिचेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥२८॥

ननु मास्तु कर्मणि विरोधः, तथापि शब्दे वेदवाक्ये विरोधः स्यादेव । अनित्यविग्रहवद्देवतायां नित्यवेदार्थत्वाङ्गीकारे शब्दस्याऽर्थेन नित्यसंबन्धाभावेन नित्यानित्यसंयोगविरोधादितिचेद्, नायमप्यस्ति विरोधः । कुतः । अतः प्रभवात् । देवादिनिष्ठनित्याऽऽकृतिवाचकाद्वेदराशेरेव देवादिप्रपञ्चस्य प्रभवादुत्पन्नत्वश्रवणादित्यर्थः । तथाहि स्मृतिः । अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा * आदौ वेदमयी दिव्या यतः

सर्वाः प्रवृत्तयः ॥ नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वर इति ॥ श्रुतिरपि, एत इति ह वै प्रजापतिर्देवानसृज्यताऽसृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरः पवित्रमिति ग्रहानाऽऽशव इति स्तोत्रं विश्वानीति शस्त्रमऽभिसौभगेत्यन्याः प्रजा इति । तथा, स मनसा वाचं मिथुनं समभवदिति । अस्यार्थः । एते असृग्रमिन्दवास्तिरःपवित्र-माशवः विश्वान्यभिसौभगेत्येतन्मन्त्रस्थपदैर्देवादीन् स्मृत्वा ससर्ज ब्रह्मा । तत्र एतच्छब्द इन्द्रियाधिष्ठानदेवस्मारकः । असृग्र-शब्दोऽसृक्शब्दवाच्यरुधिरप्रधानदेहरमणमनुष्यस्मारकः । इन्दु-मण्डलमध्यवर्तिपितृस्मारक इन्दुशब्दः । पवित्रं सोमं खमध्ये तिरस्कुर्वतां धारयतां ग्रहाणां तिरःपवित्रशब्दः स्मारकः । ऋचोऽश्नुवतां स्तोत्राणां गानरूपाणाम् आशवशब्दः स्मारकः । विश्वेदेवशंसनशस्त्राणां विश्वशब्दः स्मारकः । अभिसौभगेति शब्दो निरतिशयसौभाग्यवाचकः प्रजानां स्मारक इति । स प्रजापतिर्मनसा सह वाचं मिथुनभावं समभवत् । समभावयत् त्रयीप्रकाशितां सृष्टिं मनसा आलोचितवानिति यावत् । सूत्रस्थ-प्रत्यक्षानुमानशब्देन सृष्टेर्वेदप्रभवत्वप्रतिपादकश्रुतिस्मृती गृह्येते । तथाच श्रुतिस्मृतिभ्यां वेदशब्दप्रभवत्वं सृष्टेरित्यर्थः । आकृत्या-लिङ्गितविग्रहानङ्गीकारे कस्य सृष्टिः स्यादिति भावः । तस्मा-द्यथा गवादिशब्दानां नित्याऽऽकृतिवाचकत्वम् एवं वैदिक-शब्दानां नित्याकृतिवाचकत्वमिति, न शब्देऽपिविरोध इति ॥२८॥

अत एव च नित्यत्वम् ॥ २९ ॥

अस्मृतकर्तृकत्वादिना सिद्धमेव वेदस्य नित्यत्वमनित्यार्थ-संयोगेनानुपपन्नमित्याशङ्क्य वेदादेवाकृतिविशेषाऽवच्छिन्नदेवा-दिसृष्टिरिति प्रतिपादनान्नित्याकृतेरेव शब्दार्थत्वान्नानुपपन्न-

मित्यभिप्रायेण परिहरति । अत एव, नित्याकृतेः। शब्दार्थत्वादेव वेदस्य नित्यत्वं नानुपपन्नमित्यर्थः। एतत्सूत्रसूचितः प्रयोगश्च– वेदः अवान्तरप्रलयाऽवस्थायी जगद्धेतुत्वादीश्वरवदिति । अवान्तरप्रलयाऽवस्थायित्वमेव हि नित्यत्वं नाम । अनुमानसिद्धार्थे श्रुतिरपि । यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टामिति । यज्ञेन पुण्यकर्मणा वाचो वेदस्य पदवीयं ग्रहणयोग्यतामायन् प्राप्तवन्तः । अतस्तामृषिषु विद्यमानां वाचं याज्ञिका अन्वविन्दन् उपलब्धिमन्तो बभूवुरित्यर्थः। पूर्वं स्थितामेव वाचं सर्वे ज्ञातवन्त इति तात्पर्यम् ॥ २९ ॥

समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्
स्मृतेश्च ॥ ३० ॥

नन्वाकृतिपदार्थकत्वेऽपि प्रलये सर्वाकृतिकव्यक्तिनाशे पुनस्तदाकृतिकव्यक्त्युत्पत्तौ मानाभावान्नित्याऽनित्यसंयोगविरोधस्तदवस्थ इतिचेदुच्यते। सृष्टिप्रलयावृत्तावपि न शब्दे विरोधः। कस्मात् समाननामरूपत्वात्। न हि प्रलये जगतो निरन्वयनाशोऽस्ति येनोत्पद्यमानं जगद्विलक्षणं स्यात्। किन्तु संस्कारात्मना, अविद्यायां तिष्ठत्येव जगद्, अनुभव इव भावनाख्यसंस्कारात्मना। नचाऽर्थसंस्कारे मानाभावः । मृदि मण्डूकसंस्कारदर्शनात् । नित्यप्रलयाख्यसुषुप्तौ सविषयेन्द्रियाद्यर्थसंस्कारसद्भावाच्च प्रबोधे सजातीयव्यवहारात्। नच प्रतिदिनं सृष्टिलययोः सद्भावे मानाऽभावः । यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वै रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः सहाप्येति । स यदा प्रबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो

विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवा देवेभ्यो लोका इत्यादिश्रुतेर्मानत्वात् । अस्यार्थः । अथशब्दस्तदार्थकः । यदेत्युपक्रमात् । प्राणशब्दः परमात्मपरः । अस्मिन् प्राणे जीव एवैकधा भवति, तदात्मना तिष्ठतीत्यर्थः।तदा एकीभावावस्थायाम् एनं प्रकृतं प्राणं परमात्मानमन्तर्बहिरिन्द्रियाणि सर्वाणि सविषयाणि, अपियन्ति परमात्मनि लीनानि भवन्तीत्यर्थः। प्रबोधे तस्मादेव परमात्मनो जगतो जन्माह । स इति । अविलम्बेन उत्पत्तौ दृष्टान्तः । यथेति । एवं-शब्दात् पूर्वं तदेत्यध्याहारः । प्राणा वागादयस्तेभ्योऽनन्तरं तदनुग्राहकदेवा अग्न्यादयस्तेभ्योऽनन्तरं लोकाः शब्दादिविषया इति । तथाच यथा संस्कारबलात् पूर्वमण्डूकादिसमाननामरूपत्वमुत्तरकार्यस्य एवं पूर्वकल्पप्रपञ्चसमाननामरूपत्वादुत्तरप्रपञ्चस्येति पूर्वाकृतिव्यक्त्युत्पत्तेर्न शब्दे कश्चिद्विरोधः।समाननामरूपत्वं च श्रुतौ दर्शनात् स्मृतेश्चाऽभ्युपगन्तव्यम् । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथिवीं चान्तरिक्षमथो स्वरिति । तथाच नक्षत्रेष्टौ, अग्निर्वा अकामयत अन्नादो देवानां स्यामिति। स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपदिति भाविवृत्तिमाश्रित्य, यजमानोऽग्निरित्युच्यते। एवं कामयित्वा किं कृतवाँस्तदाह ।स इति। कृत्तिकाभ्यः कृत्तिकाख्यनक्षत्रदेवतायै । बहुवचनं नक्षत्रबाहुल्याद् बोद्धव्यम् । अष्टाकपालम् अष्टसु कपालेषु पचनीयं निरवपत् । उक्तपुरोडाशहविष्कामिष्टिं कृतवानित्यर्थः । तथाच योऽग्निर्यस्मै अग्नये निरवपत् तयोः समाननामरूपत्वं दर्शयतीति सिद्धम् । स्मृतिरपि, यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये * दृश्यन्ते तानि तान्येव तथा भावा युगादिष्वित्यादिका द्रष्टव्या ॥ ३० ॥

उक्तं देवादीनामधिकारमाक्षिपति—

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

देवादीनां ब्रह्मविद्यायामनधिकारं जैमिनिराचार्यो मन्यते । कस्मात् । मध्वादिष्वसम्भवात् । एवं हि मधुविद्या श्रूयते । असौ वा आदित्यो देवमधु देवानां मोदनान्मध्विव मधु । तस्य मधुनो द्युलोक एव तिरश्चीनवंशः। अन्तरिक्षे आदित्याख्यमधुनोऽवस्थानात्तदेव मध्वाधारोऽपूपः । रोहितं शुक्लं कृष्णं परःकृष्णं गोप्यं चेति पञ्च रोहितादीन्यऽमृतानि प्रागाद्यूर्ध्वान्तं पञ्चदिगवस्थिताभिरादित्यरश्मिनाडीभिर्मधुच्छिद्रभूताभी रोहिताद्याख्याभिस्तत्तद्वेदोक्तकर्मकुसुमेभ्यस्तत्तद्वेदिकमन्त्रमधुकरैरादित्यमण्डलमानीतानि पञ्चमममृतं गोप्याख्यं प्रणवकुसुमादुपासनाभ्रमरैरूर्ध्वदिगात्तसूर्यरश्मिरूपगोप्याख्यमधुच्छिद्रद्वारा आदित्यमण्डलम् आनीतं रोहितादिकममृतं मकरन्दस्थानभूतं वह्नौ हुतसोमाज्यपयःपुरोडाशादिरूपं द्रष्टव्यम् । तानि च रोहितादीन्यमृतानि यशस्तेजोवीर्यसकलेन्द्रियान्नरूपेण निष्पन्नान्यादित्यमधुसम्बद्धानि प्रागादिदिक्षु क्रमेण विद्यमानानां वसुरुद्रादित्यमरुत्साध्यरूपाणां देवानामुपजीव्यानीत्येवं चिन्तयतां फलं वस्वाद्याऽऽप्तिरुच्यते । वस्वादीनां समानानां मध्ये एको भूत्वा यशआद्यऽमृतं प्रत्यक्षानुमानादिभिः करणैरुपलभ्य तृप्यतीति । न ह्येवम्भूतमधुविद्यायां सूर्यवस्वादीनां देवानामधिकारः सम्भवति । एकस्योपास्योपासकभावप्राप्यप्रापकभावयोर्विरोधात् सूत्रस्थाऽऽदिशब्देन यासु विद्यासु, आदित्यो ब्रह्मेत्येवमादिरूपासु देवानामुपास्यत्वं ता विद्या गृह्यन्ते । तथा इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो, वागेवाऽत्रिरि-

त्याद्यासु ऋष्युपास्यकासु न तेषामेवर्षीणामधिकारः संभवति । श्रुत्यर्थस्तु, इमौ दक्षिणवामकर्णौ क्रमेण गौतमभरद्वाजावित्युपास्यौ । द्वितीयेमावित्यनेन दक्षिणवामाक्षिद्वयोक्तिः । तृतीयेमावित्यनेन दक्षिणवामनासिकाद्वयोक्तिः । एवं सप्तसु शीर्षण्येन्द्रियेषु सप्तर्ष्युपास्तिरित्यर्थः । नच मध्वादिविद्यासु देवादीनामनधिकारेऽपि ब्रह्मविद्यायामधिकारः किं न स्यादिति वाच्यम् । विद्यात्वाऽविशेषेण ब्रह्मविद्यायामप्यनधिकारात् । तथाचाऽयं प्रयोगः । ब्रह्मविद्या न देवादीनधिकरोति, विद्यात्वात्, मध्वादिविद्यावदिति ॥ ३१ ॥

अपि च,

ज्योतिषि भावाच्च ॥ ३२ ॥

भ्रमणवत्तया परिदृश्यमानज्योतिर्मण्डल एव सूर्यचन्द्रादिदेवताशब्दानां लोके प्रयोगसद्भावान्मण्डलस्य मृत्पिण्डादिवदऽचेतनत्वेन विग्रहाभावादग्निवाय्वादीनामपि तत्तुल्यत्वेन सामर्थ्यादेश्चेतनधर्मस्याऽभावान्न देवादीनामधिकारः । नच मन्त्रार्थवादेभ्यो देवानां विग्रहवत्त्वसिद्धेः सर्वं सुस्थितमिति वाच्यम् । तेषामन्यपरत्वेन स्वार्थे प्रामाण्याऽभावात् । तस्माद्द देवादीनां ब्रह्मविद्यायामधिकाराभावं जैमिनिर्मन्यते इति शङ्कासूत्रयोरभिप्रायः ॥ ३२ ॥

सिद्धान्तयति—

भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

तुशब्दः शङ्कानिरासार्थः, बादरायण आचार्यो ब्रह्मविद्यायां देवादीनामधिकारस्य भावं मन्यते । यद्यपि देवतामिश्रोपासनास्वनधिकारस्तथापि निर्गुणब्रह्मविद्यायां देवानामप्यधि-

कारोऽस्ति हि । पूर्वोक्तस्य विद्यात्वादित्यनुमानस्य ज्योतिष्टोमादि न ब्राह्मणकर्तव्यं, कर्मत्वाद् राजसूयवदित्याभाससाम्यं द्रष्टव्यम् । यद्वा ज्योतिषि भावाच्चेत्यस्योत्तरम्— अस्ति हीति ॥ यद्यपि देवताशब्दा ज्योतिरादौ प्रयुज्यन्ते, तथापि तदभिमानिदेवतापरा एव सम्भवन्ति । अस्ति हि ऐश्वर्ययोगाज्ज्योतिरादिरूपेणाऽवस्थातुं विग्रहं गृहीत्वा व्यवहर्तुं च सामर्थ्यम् । तथाहि श्रूयते, मेधातिथेर्मेपेति । मेधातिथिं काण्वायनं मेषो भूत्वेन्द्रो जहारेत्यऽर्थः । तथा स्मर्यते च, आदित्यः पुरुषो भूत्वा कुन्तीमुपजगामेति । नन्वर्थवादादीनां स्वार्थे प्रामाण्याऽभावात् कथं तेभ्यो विग्रहवत्त्वसिद्धिरितिचेन्न । तत्राप्यस्ति हीत्येवोत्तरं मानान्तरविरोधसंवादयोरभावे तेभ्य एव विग्रहवत्त्वसिद्धिरस्ति । तथाहि । अर्थवादादिभिः स्तुत्यादिकं लक्षयतां वाच्यार्थोऽङ्गीकृत एव । न हि वाच्यार्थाऽभावे, लक्षणा युक्ता । किञ्च, व्रात्यो व्रात्यस्तोमेन यजेतेत्यादौ व्रात्यस्वरूपाकाङ्क्षायां, सावित्रीपतितो व्रात्यो यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्य इति व्रात्यस्वरूपं विध्यपेक्षितं सद्विधिप्रमाणकमित्युच्यते । यथा वा स्वर्गरूपं विध्यपेक्षितं सद्विधिप्रमाणकं तथा निःस्वरूपदेवतोद्देशेन द्रव्यत्यागाऽयोगाद्विध्यपेक्षितं देवतादिस्वरूपं विग्रहवत्त्वं विधिप्रमाणकमेव । एवं मन्त्रार्थवादप्रत्यक्षमूलेतिहासपुराणादिभिरपि विग्रहवत्त्वसिद्धिः । नच प्रत्यक्षमूलत्वं पुराणादीनामसिद्धमिति वाच्यम् । तत्कर्तॄणां योगमाहात्म्याद्देवादिभिः सह प्रत्यक्षव्यवहारसम्भवात् । तथाच श्रुतिर्योगमाहात्म्यमाह—

पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाऽग्निमयं शरीरमिति ॥

पादतलमारभ्याजानोराजानोरानाभेराग्रीवं ग्रीवाया आकेशप्ररोह-

माकेशप्ररोहाच्चाब्रह्मरन्ध्रं क्रमेण पृथिव्यादिधारणया पृथिव्यादिपञ्चाऽऽत्मके भूतसमुदाये समुत्थानप्रतिपत्तिद्वारा वशीकृते, योगगुणे चाऽणिमादौ प्रवृत्ते योगाभिव्यक्तं तेजोमयं देहं प्राप्तस्य योगिनो न रोगादिप्राप्तिरित्यर्थः। तस्मात् समूलेतिहासपुराणादिभ्यो विग्रहवत्त्वासिद्धावर्थित्वादिसम्भवाद्देवादीनां ब्रह्मविद्यायामाधिकारोऽस्तीति क्रममुक्त्युपासनासु मुमुक्षुप्रवृत्तिराविकलेति सिद्धम् ॥ ३३ ॥

( १० जातिशूद्रस्य ब्रह्मविद्यायामनधिकाराधिकरणम्। सू० ५ )

शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॥३४॥

पूर्वं यथा, तद्यो यो देवानामिति देवशब्दश्रुत्या मनुष्याधिकारनियमाऽपवादेन देवानामधिकार उक्तः। तथा मुमुक्षौ जानश्रुतौ शूद्रशब्दश्रुत्या, लिङ्गेन द्विजात्याधिकारानियममपोह्य शूद्रस्याप्यधिकारोऽस्त्विति दृष्टान्तसङ्गत्येदमारभ्यते। शूद्रशब्दस्य सिद्धान्ते क्षत्रिये समन्वयोक्तेरध्यायान्तर्भावोऽस्य युक्तः। शूद्रशब्दस्येव वेदान्तानां स्वार्थे समन्वयसिद्धेः श्रुतिसङ्गतिः। पूर्वपक्षे जातिशूद्रस्यापि ब्रह्मविद्यायां त्रैवर्णिकादविशेषः फलं, सिद्धान्ते ततो विशेष इति विवेकः। एवं किलाऽत्र छान्दोग्ये चतुर्थाध्याये उपाख्यायते। जानश्रुतिः पौत्रायणः प्रियातिथिबह्वन्नदाता बहुसद्गुणो बभूव। तस्य राज्ञो गुणगणगरिमसन्तोषिताः सन्तो देवर्षयो हंसरूपमास्थाय निदाघसमये प्रासादोपरि शयानस्याऽस्य राज्ञ उपरि मालामाबद्ध्याऽऽजग्मुः। तेषामग्रेसरं हंसं संबोध्य पृष्ठत आगच्छन्नेको हंसः सादृभुतमभ्युवाद। भो भो भल्लाक्ष, भल्लाक्ष, अस्य राज्ञो जानश्रुतेर्द्युलोकं व्याप्य विद्यमानं तेजो न पश्यसि किं, तत्तेजस्त्वां धक्ष्यति। अतस्तदतिलङ्घ्य न गच्छेति। भल्लाक्षेत्युपहासः। भद्राक्ष

इत्यर्थः । इदमुपश्रुत्याग्रगामी हंसः प्रत्युवाच । कमु वर एनमेतत् सन्तं सयुग्वानमिव रैक्कमात्थेति । अयमर्थः । वरेति सोपहाससंबोधनम् । अवरेत्यर्थः । यद्वाऽवरो वराको जानश्रुतिः । कमुपदमाऽऽक्षेपार्थकं, कथमित्यर्थः । रैक्को नाम कश्चन ब्रह्मनिष्ठः । योजयति देशान्तरं गमयति स्वारूढामिति युग्वा गन्त्री शकटी तया सह वर्तते इति, सयुग्वानमित्यर्थः । तथाच एनं वराकं जानश्रुतिं प्राणिमात्रं सन्तं मूढम् अरे सयुग्वानं भगवन्तम् असह्यतेजसं रैक्कमिव, कथमेतद्वचनं ब्रवीषि । इदं श्रुत्वा अयं राजा ब्रह्मविद्यार्थं रैक्कसमीपं गत्वा कृतार्थो भविष्यतीति दयालूनां हंसानामभिप्रायः। अथैष राजा हंसप्रयुक्तमनादरवाक्यं श्रुत्वा स्वस्याऽत्यन्तनिष्कर्षम्, उत्कर्षकाष्ठां च रैक्कस्य ज्ञात्वा दुःखितमनाः कथमपि निशामतिवाहयाम्बभूव । ततो निशाऽवसानसूचकं बन्दिवृन्दसमारब्धस्तुतिसहस्रसंवलितमङ्गलतूर्यनिर्घोषमाकर्ण्य तल्पस्थ एव राजा झटिति यन्तारमाहूयाऽऽदिदेश । विविक्तदेशेषु पर्वतगुहादिषु तेषु तेषु रैक्काह्वयं सयुग्वानमन्विष्य यत्नेनाऽस्मभ्यमाचक्ष्वेति । स यन्ता तथैव क्वचिदतिविविक्तदेशे शकटस्याधस्तात् सन्तं पामानं कण्डूयमानं दृष्ट्वाऽयमेव रैक्क इति निश्चित्याऽतिकुशलो रैक्कस्य तैस्तैरिङ्गितैर्गार्हस्थ्येच्छां धनेच्छां चोन्नीय, राज्ञे निवेदयामास । स राजा तन्निशम्य गवां षट्शतानि हारं रथं चाऽश्वयुक्तमादाय सत्वरं रैक्कमुपससाद । उपसद्य चोवाच— हे रैक्क, इदं सर्वं गवादिकं गृहीत्वाऽनुशाधि मां भगवन्निति । अथैवमुक्तवन्तं ससम्भ्रमं सस्पृहं चोवाच रैक्कः । अह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति । अहेतिनिपातः साटोपाह्वानमाह । हारेण युक्तः रथो हारेत्वा गोभिः सहितस्तवैवाऽस्तु । किमेतावन्मात्रेण मम निर्वाहाऽनुपयोगेनेति भावः ।

एवं स्थिते चिन्ता । किं शूद्रस्य ब्रह्मविद्यायामधिकारोऽस्ति न वेति । अस्तीति तावत् प्राप्तम् । कस्मादर्थित्वादिसम्भवात् । वेदाध्ययनसाध्याहवनीयाद्यभावेनाऽग्निसाध्यकर्माऽनधिकारेऽपि देवादिवद्विद्यायामधिकारसम्भवात् । संवर्गविद्यायां मुमुक्षौ जानश्रुतौ शिष्ये रैक्केण गुरुणा शूद्रशब्दप्रयोगाच्चेति । अत्र ब्रूमः । न शूद्रस्य ब्रह्मविद्यायामधिकारः । उपनयनाभावेन वेदाध्ययनाऽभावात् । न हि वेदवाक्यविचारसाध्यब्रह्मविद्यायामनधीतवेदस्याऽधिकारः सम्भवति । शास्त्रीयसामर्थ्याऽभावात् । न चैवं सति देवानामप्यनधिकार इति साम्प्रतम् । तेषां स्वयम्प्रभातवेदत्वात् । न च शूद्रस्यापि लिखितपाठादिना वेदप्राप्तिरिति युक्तम् । गुरूपसदनपूर्वकाऽध्ययनसंस्कृतवेदस्यैव ब्रह्मविद्योपकारकत्वात् । न च शूद्रश्रवणाल्लिङ्गेन तस्याधिकारः । न्यायाभावे लिङ्गस्याऽसाधकत्वात् । तर्हि वैदिकशूद्रशब्दोऽनर्थकः स्यादित्याशङ्क्य तं व्याख्यातुमिदं सूत्रं, शुगस्येत्यादि । अस्य जानश्रुतेः क्षत्रियस्य तदनादरश्रवणात्तस्य हंसस्याऽनादरश्रवणाद्या शुगुत्पन्ना सा शूद्रशब्देन सूच्यते हि रैक्केण । स्वस्य सर्वज्ञत्वज्ञापनार्थं रैक्कः शूद्रशब्दं प्रयुक्तवानिति भावः । शूद्रशब्दं योगेन क्षत्रिये वर्तयति ॥ तदाद्रवणादिति ॥ तस्याः शुचो जानश्रुतिं प्राप्तत्वादित्यर्थः । यद्वा, तस्य जानश्रुतेः शुचं प्राप्तत्वादिति । अथवा तं रैक्कं प्रति जानश्रुतिः शुचा दुद्रावेति शूद्रो जानश्रुतिरुच्यते । अतो न शूद्रस्याधिकारः ॥ ३४ ॥

ननु मुख्य एव शूद्रो जानश्रुतिरस्तु, किं जघन्येन योगनेत्यत आह—

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

जानश्रुतिर्न मुख्यशूद्रः कुतः ॥ क्षत्रियत्वगतेः ॥ क्षत्रियत्वाऽवधृतेरि-

त्यर्थः। सापि कुतः। उत्तरत्र संवर्गविद्यावाक्यशेषे चैत्ररथेन प्रसिद्ध-क्षत्रियेणाऽभिप्रतारिनामकेन सह समभिव्याहारात्मकलिङ्गादित्यर्थः । सजातीयानामेव हि प्रायेण सहचारो भवतीति भावः। एवं ह्यभिप्रतारी सङ्कीर्त्यते । अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं सूदेन परिविष्यमाणौ ब्रह्मचारी विभिक्ष इति। संवर्गविद्याविध्यनन्तरमर्थवादारम्भार्थोऽथशब्दः । शुनकस्याऽपत्यं शौनकं, कपिगोत्रं कापेयं पुरोहितमभिप्रतारिणं च नाम्ना राजानं कक्षसेनस्याऽपत्यं, काक्षसेनिम् । तौ भोक्तुमुपविष्टौ, सूदेन पाचकेन परिविष्यमाणौ सेव्यमानौ भिक्षितवानित्यर्थः । अस्य चाऽभिप्रतारिणश्चैत्ररथत्वं कापेयेन चित्ररथपुरोहितेन योगादवगन्तव्यम् । चित्ररथपुरोहितत्वं च कापेयानां श्रुतौ प्रसिद्धम्। एतेन वै चित्ररथं कापेया अयाजयन्निति। एतेन द्विरात्रेण। समानान्वयानां हि प्रायेण समानान्वया एव याजका भवन्ति । ननु चित्ररथपुरोहितकापेययोगादभिप्रतारिणश्चैत्ररथत्वं भवतु तथापि कथं क्षत्रियत्वमितिचेन्न । तस्माच्चैत्ररथिर्नामैकः क्षत्रियपतिरजायतेतिश्रुतेः । तस्माच्चित्ररथादित्यर्थः । एवमभिप्रतारिणः क्षत्रियत्वे सिद्धे तत्समभिव्याहारात्मकलिङ्गाज्जानश्रुतेः क्षत्रियत्वमिति सिद्धम् ॥ ३५ ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

अत्रसूत्रे वेदाध्ययनाङ्गोपनयनाभावान्न जातिशूद्रस्याऽधिकारः । कुतः । विद्याप्रदेशेषूपनयनादिसंस्कारपरामर्शात् । तं होपनिन्ये, अधीहि भगव इति होपससाद । ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः । एष ह वै तत्सर्वं वक्ष्यतीति । ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्ना इति । अयमर्थः । तं विद्यार्थिनमाचार्यः किलोपनिन्ये उपनीतवान् । अनुपनीताय

विद्यादानाऽयोगादिति तात्पर्यम् । सनत्कुमारं प्रति नारदः । अधीहि भगव इति मन्त्रमुच्चार्य गुरूपसदनं कृतवानित्याह । अधीहीति । भरद्वाजादयः षड् ऋषयः परं ब्रह्म परत्वेनोपगतवन्त इति ब्रह्मपरास्तद्ध्याननिष्ठाः परं परमार्थरूपं ब्रह्म विचारयन्तो, निर्णयार्थमेष पिप्पलादस्तज्जिज्ञासितं सर्वं वक्ष्यतीति निश्चित्य रिक्तहस्तानां गुरूपसदनाऽयोगात् समित्पाणयः सन्तस्तमुपसन्नाः किलेत्याह । ब्रह्मपरा इति । ननु, तान् हानुपनीयैवेत्यनुपनीतानामपि वैश्वानरविद्यायामधिकारश्रुतेरानियतमुपनयनमिति चेन्न । निषेधस्य प्राप्तिपूर्वकत्वात् प्राप्तोपनयनानां प्राचीनशालाऽऽदीनां द्विजातीनामेवाऽधिकारात् । निषेधस्तु विद्योपदेष्टुरश्वपते राज्ञो न्यूनवर्णत्वाद् द्रष्टव्यः । तान् प्राचीनशालादीनृषीननुपनीयैवाऽश्वपती राजोवाचेति श्रुत्यर्थः । ननु शूद्रस्याप्युपनयनं कल्प्यतामित्यत आह ॥ तदभावाभिलापाच्चेति ॥ न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति । शूद्रश्चतुर्थो वर्ण एकजातिरित्यादिना उपनयनादिसंस्काराऽभावाभिलापादित्यर्थः । पातकं भक्ष्याभक्ष्यविभागाऽभावकृतम् । एकजातिः । उपनयनरहित इति स्मृत्यर्थः ॥ ३६ ॥

किञ्च—

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

जाबालो हि मृतपितृको गुरूपसदनं कर्तुकामो गोत्रमजानानो मातरं पप्रच्छ, किंगोत्रोऽहमस्मीति । सा चाप्यहं न जानामीत्युवाच । ततः स जाबालो गौतममुपससाद । उपसद्य चोवाच । हे भगवन ब्रह्मचर्यं चरितुं त्वयीच्छामि मामनुगृह्णातु भवानिति । ततो गौतमेन, किंगोत्रोऽसीति पृष्टः सत्यकामो जाबाल आह । नाहं गोत्रं वेद, नाऽपि मन्मातेति । ततः स

गौतमस्तदीयेन सत्यवचनेन जाबालस्य शूद्रत्वाऽभावं निश्चित्य प्रवृत्ते । नैतदब्राह्मणो विवक्तुमर्हति । समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा इति । एतत् सत्यवचनं विविच्य निःसंदिग्धं वक्तुमब्राह्मणो नार्हति । अतस्त्वं न सत्यादगाः सत्यवचनान्नातिगतोऽसि । अतस्त्वामुपनेष्ये । तदर्थं समिधमाहरेत्यर्थः । ततश्च सूत्रस्यायमर्थः । तस्य शूद्रत्वस्याऽभावनिर्धारणे सत्येव विद्योपदेशे प्रवृत्तिदर्शनादिति । तस्मान्न शूद्रस्याधिकारः ॥३७॥

श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

इतश्च न जातिशूद्रस्याधिकारः । यतः स्मृतितो वेदश्रवणस्य तदध्ययनस्य तत्प्रयोजनयोरर्थज्ञानाऽनुष्ठानरूपयोरर्थयोः प्रतिषेधादित्यर्थः । एवं स्मरति । अथाऽस्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणमिति श्रवणस्य निषेधः । त्रपुजतुभ्यां संतप्ताभ्यां सीसलाक्षाभ्यामस्य शूद्रस्य द्रुताभ्यां श्रोत्रद्वयपूरणं वेदश्रवणप्रायश्चितमित्यर्थः । पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यमित्यध्ययननिषेधः । न ह्यश्रुतस्याऽध्ययनं सम्भवति । पद्यु पादयुक्तं, सञ्चारसमर्थमिति यावत् । तादृशं श्मशानं यच्छूद्र इत्यन्वयः । न शूद्राय मतिं दद्यादिति तदर्थज्ञाननिषेधः । द्विजातीनामध्ययनमिज्या दानमिति तदर्थाऽनुष्ठाननिषेधः । शूद्राणां दानशब्देनाऽत्र नित्यदानमुच्यते । नैमित्तिकदाने शूद्रस्याप्यधिकार इति द्रष्टव्यम् । विदुरधर्मव्याधप्रभृतीनां तु पूर्वजन्मकृतश्रवणादिना गर्भस्थवामदेववज्ज्ञानोपपत्तिर्मन्तव्या । तस्मान्न कथमपि ब्रह्मविद्यायां शूद्रस्य वेदपूर्वकोऽधिकार इति सिद्धम् ॥ ३८ ॥

( ११ ईश्वरस्यैव कम्पनकर्तृताऽधिकरणम् । सूत्रम् १ )

कम्पनात् ॥ ३९ ॥

समाप्तः प्रासङ्गिकोऽधिकारविचारः । इदानीं प्रकृतं वाक्या-ऽर्थविचारं प्रवर्तयिष्यामः । शब्दादेव प्रमित इत्यत्र, ब्रह्मवाक्ये, जीवाऽनुवादो ब्रह्मैक्यज्ञानायेत्युक्तम् । न तथेह, यदिदमित्यादि-वाक्ये, प्राणाऽनुवादो युक्तः, प्राणस्य स्वरूपेणापि, कल्पितस्य ब्रह्मैक्याऽयोगादिति प्रत्युदाहरणसङ्गत्यास्याऽऽरम्भः।प्रासङ्गिक-त्वान्नाव्यवहितेन सङ्गत्यपेक्षा । पूर्वपक्षे प्राणोपास्तिः फलं, सिद्धान्ते निर्विशेषब्रह्मज्ञानमिति भेदः । काठकवाक्यं पठ्यते । यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्तीति । अस्यार्थः । यत्किञ्चेदमविशिष्टं जगत्सर्वं प्राणे निमित्ते सत्येजति चेष्टते । एजृ कम्पने इति धातोः कम्पनार्थकत्वात् कम्पनं चेष्टैवेति चेष्टत इत्युक्तम् । तच्च जगत्तस्मादेव निःसृतम् उत्पन्नम् । तच्च प्राणाख्यं जगत्कारणं महत् अनवच्छिन्नम् । बिभेत्यस्मात् सर्वं वाय्वादीति भयम् । भीषास्माद्वातः पवत इत्यादिश्रुत्यन्तरात् । तदेव भयहेतुत्वं निरूपयति । वज्रमिति । उद्यतं वज्रमिवेत्यर्थः । प्राणा-ख्यब्रह्मज्ञानस्य मोक्षहेतुत्वमाह । य इति । अत्र संश-यः । किं प्राणशब्देन मुख्यप्राणवायुं गृहीत्वा, वज्रशब्देन चाऽशनिहेतुं वायुं लक्षयित्वा उभयविषयकमेकमुपासनं विधेय-मुत निर्विशेषं ब्रह्माऽनेन वाक्येन प्रतिपाद्यमिति । तत्र तावदु-पास्तिपरमिति युक्तम् । प्राणशब्दस्य तत्र प्रसिद्धेः । वायौ हि पर्जन्यभावेन विवर्तमाने विद्युन्मेघवृष्ट्यशनयो जायन्त इत्यशनि-हेतुवायुलक्षकत्वं वज्रशब्दस्यापि युक्तम् । न च मोक्षफल-श्रवणाद्विरोधः । तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जग-[illegible] य एवं वेदेति वायुवेदनस्यापि मोक्षहेतुत्वश्रवणादित्येवं प्राप्ते, ब्रूमः । शब्दा[illegible] [illegible] इति व्यवहितमपि मण्डूकप्लुत्याऽनुवर्तते ।

अस्मिन् वाक्ये प्राणादिशब्दात् परमात्मैव प्रमितः । कुतः ? ॥ कम्पनात् ॥ सर्वशब्दवाच्यस्य सवायुकस्य जगतः कम्पनाज्जीवनादिचेष्टाहेतुत्वादित्यर्थः। ब्रह्मण्यपि प्राणशब्दप्रयोगो बहुलं वेदे दृष्टः । प्राणस्य प्राणमित्यादौ वज्रशब्दोऽपि भयहेतुत्वसाम्यादुपपद्यत इत्युक्तम् । वाक्यार्थकथनसमये, कम्पनहेतुत्वं ब्रह्मणः श्रुत्यन्तरे प्रसिद्धम्—

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रिताविति ॥

इतरेणाऽऽत्मना, एतौ प्राणाऽपानौ । किञ्च, कम्पनवाक्यात् पूर्वमुत्तरत्र च ब्रह्मोक्तेरिहापि ब्रह्मग्रहणं न्याय्यम् ॥

तदेव शुक्रं तद्ब्रह्म तदेवाऽमृतमुच्यते ।

यस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चनेति पूर्ववाक्ये ब्रह्मोक्तम् । शुक्रं ज्योतिष्मत् । अमृतं कूटस्थम् उक्तं सर्वाधिष्ठानत्वं व्यतिरेकमुखेनाह ॥ तदु नेति । किञ्चन जडं तद्ब्रह्म नात्येति, अतिक्रमेण न वर्तत इत्यर्थः । तथोत्तरत्रापि

भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम, इति ॥

अस्येश्वरस्य भयादग्न्यादयः स्वव्यापारे नियमेनाऽनुवर्तन्ते, राजाज्ञया भृत्यादिवदिति । उक्ताऽग्न्याद्यपेक्षया मृत्योः पञ्चमत्वम् । यदुक्तं वायुवेदनस्य मोक्षहेतुत्वम् । तन्न । विशेषसामान्यात्मकस्य व्यष्टिसमष्टिवाय्वोर्ज्ञानादपमृत्युनिवृत्तिमात्रश्रवणात् । तस्मादनेन वाक्येन निर्विशेषब्रह्म व्यामिनि सिद्धम् ॥ ३९ ॥

( १२ ब्रह्मण एव ज्योतिष्ट्वाधिकरणम् । सूत्रम् १ )

ज्योतिर्दर्शनात् ॥ ४० ॥

पूर्वं सर्वशब्दश्रुतिसंकोचाऽनुपपत्त्या प्रकरणात् प्राणशब्दं ब्रह्मेत्युक्तम्। न तथेह संप्रसादवाक्ये प्रकरणाऽनुग्राहकं किञ्चिदस्ति, येन प्रकरणाज्ज्योतिःशब्दं ब्रह्म स्यादिति प्रत्युदाहरणसंगत्याऽस्यारम्भः। पूर्वपक्षे आदित्योपास्त्या क्रममुक्तिः। सिद्धान्ते ब्रह्मज्ञानान्मुक्तिरिति फलभेदः। छान्दोग्ये प्रजापतिविद्यायां श्रूयते। य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाऽभिनिष्पद्यते स उत्तमः पुरुष इति। एतदर्थो दहराधिकरणेऽनुसन्धेयः। तत्र संशयः। किं ज्योतिःशब्देन प्रसिद्धसूर्यादितेजोऽभिधीयते, उत ब्रह्मेति। तत्र सूर्यादीति युक्तं, प्रसिद्धत्वात्। अथ या एता हृदयस्य नाड्य इत्यादि नाडीखण्डे। अथ यत्र एतस्माच्छरीरादुत्क्रामत्यथ तैरेव रश्मिभिरूर्ध्वमाक्रमत इति मुमुक्षोरादित्यप्राप्त्यभिधानादत्रापि ज्योतिरुपसंपद्येति श्रवणाच्च। अयमर्थः। विशेषज्ञानोपरमानन्तर्यमथशब्दार्थः। यत्र प्रारब्धकर्मावसानकाले एतदुत्क्रमणं यथा स्यात्तथेति क्रियाविशेषणम्। अस्मादभिमानविषयाद्देहादुत्क्रमणं यदा करोत्यथ तदा एतैरेवाऽऽदित्यस्य रश्मिभिरालम्बनैरारूढः सन्नाक्रमते, उपरि गच्छति तत आदित्यं गच्छतीति। एवं प्राप्तेऽभिधीयते। ज्योतिरत्र ब्रह्मैव। कुतः। दर्शनात्। आत्माऽपहतपाप्मेत्युपक्रमालोचनया, ब्रह्मण एव प्रतिपाद्यतयाऽनुवृत्तिदर्शनादित्यर्थः। यदुक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति। तन्न। अस्य निर्गुणब्रह्मप्रकरणत्वात्। न हि निर्गुणब्रह्मविदो गत्युत्क्रान्ती स्तः। अत्र ब्रह्म समश्नुत इति श्रुतेः। तस्मात् परं ज्योतिर्ब्रह्मैवोपसंपत्तव्यत्वेन निर्दिश्यत इति सिद्धम्॥ ४०॥

( १२ ब्रह्मण एव नामरूपनिर्वाहकताधिकरणम्। सूत्रम् १)

आकाशोऽर्थान्तरत्वादिव्यपदेशात्॥ ४१॥

पूर्वमुपक्रमवशादर्थान्तरे प्रसिद्धोऽपि ज्योतिःशब्दः स्वाऽर्थात् प्रच्यावितः। तथाऽऽकाशोपक्रमवशाद् ब्रह्मादिशब्दोऽपि स्वार्थात् प्रच्याव्यतामिति दृष्टान्तसङ्गत्या इदमारभ्यते । पूर्वपक्षे भूताकाशाभिन्नसर्वाधिष्ठानभूताऽऽकाशात्मकब्रह्मण उपास्त्या क्रममुक्तिः,सिद्धान्ते सर्वाधिष्ठानब्रह्मधिया साक्षान्मुक्तिरिति फलभेदः । छान्दोग्ये अन्ते श्रूयते । आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मेति । ते नामरूपे यस्माद् ब्रह्मणो भिन्ने तदित्यर्थः । यद्वा, ते नामरूपे यस्य ब्रह्मणोऽन्तरा मध्ये वर्तेते तदित्यर्थः । तत्र, किमाकाशशब्देन भूताकाश उच्यते ? उत परमात्मेति विशये,रूढ्या भूताकाश इति प्राप्ते ब्रूमः । परमात्मैवाकाशशब्दवाच्यः । कस्मात् । अर्थान्तरत्वादिव्यपदेशात् । ते यदन्तरेत्याकाशस्य नामरूपाभ्यामर्थान्तरत्वेन व्यपदेशात् । न हि नामाद्यन्तःपातिन आकाशस्य भूतस्य स्वस्मादर्थान्तरत्वं युक्तम् । आदिशब्देन तद्ब्रह्मेत्यादिना ब्रह्मत्वादिव्यपदेशो द्रष्टव्यः । तस्मादाकाशः परमात्मा ज्ञेय इति सिद्धम् ॥ ४१ ॥

( १९ ब्रह्मण एव विज्ञानमयाधिकरणम् । सूत्रे २ )

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

व्यपदेशादित्यनुवर्तते । पूर्वं नामरूपाभ्यां भेदेन व्यपदेशादाकाशो ब्रह्मेत्युक्तम् । तदयुक्तम् । प्राज्ञेनाऽऽत्मना संपरिष्वक्त इत्यत्राऽभिन्ने जीवे भेदोपचारादित्याक्षिप्य प्राज्ञशब्दस्य ब्रह्मपरतया न भेद औपचारिक इति समाधानात् सङ्गतिः । पूर्वपक्षे जीवाऽनुवादेन कर्मशेषकर्तुः स्तुतिः फलम् । सिद्धान्ते जीवाऽनुवादेन प्रत्यग्ब्रह्मैक्यधीरिति विवेकः । बृहदारण्यके षष्ठप्रपाठके। कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः

पुरुष इत्युपक्रम्य सुषुप्त्याद्यवस्था मध्य उपन्यस्य, स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तास्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याऽधिपतिरित्युपसंहारो दृश्यते । अस्यायमर्थः । देहादीनामन्यतमो वा तदतिरिक्तो वात्मेति जनकस्य प्रश्ने याज्ञवल्क्यस्योत्तरम् । योऽयमिति । विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः । प्राणेषु हृदीति व्यतिरेकार्थे सप्तम्यौ । प्राणबुद्धिव्यतिरिक्त इत्यर्थः । बुद्धिवृत्तेर्विविनक्ति । अन्तरिति । अज्ञानाद्भिनत्ति । ज्योतिरिति । पुरुषः पूर्णः । योऽयमेवम्भूतः स आत्मेत्यर्थः । स्वाधीनं सर्वं नियन्तुं शक्तिरस्तीति वक्तुं, सर्वस्येशान इत्युक्तम् । स्वाधीनं स्वनियम्यं च । सर्वमधिष्ठाय पालयतीति वक्तुं सर्वस्याऽधिपतिरित्युक्तमिति । अत्र संशयः । किमयं वाक्यसंदर्भो जीवाऽनुवादकः, उत तदनुवादेनाऽसंसारिस्वरूपप्रतिपादनपर इति । तत्राऽवस्थाद्युपन्यासात् परमात्मवाचकशब्दाऽभावाज्जीवाऽनुवादक इति प्राप्ते ब्रूमः । विज्ञानमयसुषुप्त्याद्यवस्थावज्जीवानुवादेन ब्रह्माऽभेदप्रतिपादनपरोऽयं वाक्यसंदर्भो, न जीवाऽनुवादकः । कस्मात् । सुषुप्त्युत्क्रान्त्योरवस्थयोः शारीराद्भेदेनेश्वरस्य प्राज्ञशब्देन व्यपदेशात् । तथाहि सुषुप्तौ तावद्व्यपदेशो दृश्यते । तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवाऽयं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति । उत्क्रान्तावपि, अयं शारीर आत्मा प्राज्ञेनाऽऽत्मनाऽऽन्वारूढ उत्सर्जन् यातीति श्रुतिः शारीराद्भेदेन परमात्मानं प्राज्ञशब्देन व्यपदिशति । अन्वारूढोऽधिष्ठितः । उत्सर्जन् वेदनातः शब्दं कुर्वन्निति यावत् । ननु भेदव्यपदेशमात्रेणाऽभेदप्रतिपादनपरोऽयं संदर्भ इति कथं गम्यते इति चेत् । उच्यते ।

ध्यायतीव लेलायतीवेत्यादिग्रन्थप्रवृत्तिदर्शनात् । बुद्धौ ध्यायन्त्यां स्वयमात्मा ध्यायतीव, चलन्त्यां चलतीव । वस्तुतो न ध्यायति, न चलतीत्यर्थः । एवमत ऊर्ध्वं विमोक्षायैव ब्रूहीति पदे पदे प्रश्नः, अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति पदे पदे प्रतिवचनं च वाक्यसंदर्भस्याऽभेदपरत्वं फलयति । अस्याऽर्थः । अतः कामादिविवेकानन्तरं मोक्षसाधनीभूतसाक्षात्काराऽयैव ब्रूहीति जनकप्रश्नार्थः । तेन जाग्रद्भोगादिना, अनन्वागतोऽस्पृष्टो भवति, असङ्गत्वादिति ॥ ४२ ॥

पत्यादिशब्देभ्यः ॥ ४३ ॥

इतश्च जीवस्याऽसंसारित्वप्रतिपादनपरमिदं वाक्यजातं, यतोऽस्मिन् वाक्ये पत्यादयः शब्दा असंसारित्वप्रतिपादनपराः संसारित्वप्रतिषेधपराश्च दृश्यन्ते । सर्वस्य वशी सर्वस्येशानः सर्वस्याऽधिपतिरित्यसंसारित्वपराः, स न साधुना कर्मणा भूयान्नो एवाऽसाधुना कनीयानित्याद्याः संसारित्वप्रतिषेधका इति । तस्मादसंसारिपरमात्मस्वरूपप्रतिपादनपरोऽयं वाक्यसंदर्भ इति सिद्धम् ॥ ४३ ॥

इति श्रीमद्ब्रह्मसूत्रवृत्तौ ब्रह्माऽमृतवर्षिण्यां प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥

## प्रथमाध्याये चतुर्थः पादः ॥ १ ॥ ४ ॥

एवं तावत् प्रथमे पादे जिज्ञास्यत्वेन प्रतिज्ञाते ब्रह्मणि जगज्जन्मादिकारणे सर्वज्ञे समन्वयं वेदान्तानां प्रसाध्य ब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिमाशङ्क्याशब्दत्वेन निराकृतमीक्षतेर्नाऽशब्दमित्यत्र । तदनन्तरं स्पष्टब्रह्मलिङ्गानि वाक्यानि ब्रह्मणि समन्वितानीत्यप्युक्तम् । द्वितीयतृतीयपादयोरस्पष्टब्रह्मलिङ्गानि प्रायश उपास्यगानि ज्ञेयगानि च समन्वितानीत्यप्युक्तम् । इदानीं तु प्रधानस्याऽशब्दत्वमसिद्धम् । क्वचिच्छाखासु तत्परशब्दानामपि दर्शनादित्याशङ्क्य तेषामन्यपरत्वप्रतिपादनार्थमयं पाद आरभ्यते—

( १ कारणशरीरस्यैवाव्यक्तशब्दवाच्यताधिकरणम् । सू० ७ )

### आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

पूर्वस्मिन् सूत्रसंदर्भे ब्रह्मैव जगत्कारणं वेदान्तप्रतिपाद्यं, न प्रधानादीत्युक्तमयुक्तम् । ब्रह्मवत् प्रधानस्यापि जगत्कारणत्वेन वेदान्तबोध्यत्वात् । न च कारणद्वयवैयर्थ्यम् । कल्पभेदेन व्यवस्थानादिति ब्रह्माङ्गीकारेणाऽऽक्षेप इत्याक्षेपसङ्गतिः । पूर्वग्रन्थेनाऽस्याधिकरणस्य सूत्रकारैरेवाऽप्येकशब्दं प्रयुञ्जानैः सूचिता । अव्यवहिताऽधिकरणेन तु प्रसिद्धजीवोक्तिभङ्गेनाऽप्रसिद्धब्रह्मोक्तिवदप्रसिद्धप्रधानोक्तिपरमेव काठकवाक्यमस्त्विति दृष्टान्तसङ्गतिः । प्रधानस्याऽशब्दत्वप्रतिपादनेन ब्रह्मणि वेदान्तानां समन्वयदार्ढ्यादस्ति श्रुत्यध्यायसङ्गतिः । अविरोधनयपर्यन्तं, पदविचारत्वात् सर्वेषां नयानाम् आपादं पादसङ्गतिः । पूर्वपक्षे ब्रह्मण्येव वेदान्तानां समन्वय इति नियमाऽभावः

फलम् । सिद्धान्ते तु तादृशानियम इति विवेकः । काठकवाक्यं पठ्यते—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्, इति ॥

अनियतेन्द्रियादेः पुंसः संसारित्वं, नियतेन्द्रियस्याऽध्वनः पारं विष्णोः परमं पदमिति श्रावयित्वा, किं तदध्वनः पारं विष्णोः पदमित्याकाङ्क्षायां तेभ्य एवेन्द्रियादिभ्यः परत्वेन परमात्मानं विष्णोः पदं दर्शयति—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरिति ॥

अयमर्थः । आत्मनो भोक्तृत्वेन प्राधान्याद्रथित्वं रथस्वामित्वम् । स्थूलं शरीरं भोगायतनत्वेन गुणतया रथसमम् । विवेकाऽविवेकवृत्तिभ्यां बुद्धेरेव शरीरद्वारा भोक्तारं सुखं दुःखं वा उपनयतीति सारथिः । मनसा अश्वरशनास्थानीयेन विवेकिना विषयेभ्य इन्द्रियाणि निगृह्यन्ते । तेनाऽविवेकिना विषयेषु प्रवर्त्यन्ते । तेन युक्तं मनसः प्रग्रहत्वम् । इन्द्रियाणि संयतानि मुक्तिद्वारं प्रापयन्ति, असंयतानि अनर्थं संसारमिति हेयत्वं तेषाम् । यथाऽश्वो मार्गमालक्ष्य चलति, एवमिन्द्रियहयाः स्वार्थमुपलभ्य चलन्तीति शरीरादिषु मध्ये शब्दादीनां विषयाणां मार्गत्वम् । ननु मार्गे रथिनो रथाद्यपेक्षा, न भोगे । चिद्रूपतया स्वभावेनैव

तद्भोगादित आह । आत्मेति । आत्मा भोक्तेत्याहुरिति संबन्धः । तस्यासङ्गस्यार्थेन्द्रियाऽसंनिकर्षे भोगायोगाद् इन्द्रियमनोयोगो यथा भवतीति क्रियाविशेषणेन भोक्तृत्वमाह । इन्द्रियेति । भावे निष्ठा । यद्वा आत्मा देहः । तद्युक्तमात्मानं भोक्तेत्याहुरिति योजना । यद्यप्यन्तरङ्गत्वादिन्द्रियाणामर्थापेक्षया परत्वं, तथापीन्द्रियाणां ग्रहत्वमर्थानां शब्दादीनामतिग्रहत्वं श्रुतौ निर्दिष्टमित्यर्थानामेव परत्वम् । गृह्णन्ति वशीकुर्वन्ति पुरुषपशुमिति ग्रहा इन्द्रियाणि, तेषां ग्राहकत्वं विषयाधीनमित्यातिग्रहा विषयाः । तेनाऽतिग्रहतयार्थानां प्राधान्यमित्याह । इन्द्रियेभ्य इति । सर्वेन्द्रियाऽर्थव्यवहारस्य मनोमूलत्वान्मनसोऽर्थेभ्यः परत्वम् । निश्चयाऽऽत्मकबुद्धिद्वारा विषया भोक्तुरुपकुर्वन्तीति संशयात्मकमनसो बुद्धेः प्राधान्यम् । पूर्वं यो रथित्वेनोक्त आत्मा स भोक्ता बुद्धेः परः । भोगोपकरणत्वात्तस्याः । स्वामित्वाच्च आत्मनो महत्त्वम् । यदि महत्त्वस्याऽऽत्मविशेषणत्वे आत्मनः परमव्यक्तमिति स्यात् तस्य विशेष्यत्वादिति ब्रूपे, तदा महच्छब्देन हिरण्यगर्भबुद्धिरुच्यते । तस्या व्यष्टिबुद्धिव्यापनादात्मत्वं च । एवम्भूतहिरण्यगर्भबुद्धिं स्मृतिर्दर्शयति—

मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः ।
प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते ॥

अयमर्थः । सर्वे प्रथमान्ता हिरण्यगर्भबुद्धिपराः । तस्या मनस्त्वे संदेहरूपत्वं स्यादित्यत आह । मतिरिति । महत्त्वमुपपादयति । ब्रह्मेति । भोग्यजाताधारत्वमाह । पूरिति । निश्चयात्मत्वमाह । बुद्धिरिति । चितिशक्तिमती ख्यातिः । ईश्वरो नियामकः । प्रज्ञा लौकिकप्रकृष्टज्ञानम् । संवित् ज्ञानफलम्, उपासकस्य तत्प्राप्तेः । चितिः चित्प्रधाना । स्मृतिर्ज्ञातसर्वार्थानुसंधान-

शक्तिमती। विद्वत्प्रसिद्धिमुक्तबुद्धावनुकूलयति। परीति। श्रुतिरपि, यो ब्रह्माणं विदधाति पूर्वमित्यादिका हिरण्यगर्भबुद्धौ वेदाविर्भावमीश्वराऽनुग्रहाद् दर्शयन्ती तस्या उक्तरूपत्वमाह । एतादृशी बुद्धिः सर्वासां बुद्धीनां परा उत्कृष्टा । अस्मिन् पक्षे पुरुषग्रहणेनैव तदभिन्नो रथी भोक्ता गृहीतो द्रष्टव्यः । आत्मानं रथिनं विद्धीत्यादिवाक्यनिर्दिष्टाः सर्वे गृहीताः। अवशिष्टं रथत्वेन कल्पितं शरीरम्। अव्यक्ताख्याऽविद्याकार्यं लक्षणया अव्यक्तशब्देन निर्दिशति । महतः परमव्यक्तमिति । एवं वस्तुगत्यार्थः प्रदर्शितः । तत्र संशयः । किमव्यक्तशब्देन प्रधानमुच्यते, उत पूर्वप्रकृतं शरीरमिति। तत्र सांख्यस्मृतौ महदव्यक्तपुरुषशब्दानां तत्त्वत्रये प्रसिद्धत्वादव्यक्तं प्रधानमेवेत्याह ॥ आनुमानिकमप्येकेषामिति चेदिति ॥ अनुमानगम्यं प्रधानमप्येकेषां शाखिनां प्रधानमव्यक्तशब्देन पठ्यत इत्यशब्दत्वमसिद्धमिति चेदिति सूत्रान्वयार्थः । परिहरति ॥ नेति ॥ कुतः ॥ शरीररूपकविन्यस्तगृहीतेः ॥ शरीरस्य पूर्ववाक्ये रथरूपेण विन्यस्तस्य कल्पितस्याऽव्यक्तशब्देन गृहीतेर्ग्रहणादित्यर्थः । रूपकाऽऽत्मना रथात्मना विन्यस्तं रूपकविन्यस्तम् । शरीरं च तद्रूपकविन्यस्तं च तत्तथोक्तम् तस्य गृहीतिरिति विग्रहः । कथं शरीरपरोऽव्यक्तशब्दस्तत्राह ॥ दर्शयति चेति ॥ पूर्वाऽपरवाक्यसंदर्भः पर्यालोच्यमान ओचित्येन, प्रकृतं परिशिष्टं च शरीरमेवाऽव्यक्तशब्देन बोध्यं दर्शयतीत्यर्थः ॥ १ ॥

ननु स्थूलशरीरस्य व्यक्तशब्दार्हस्य कथमव्यक्तशब्दार्हत्वमित्यत उत्तरं पठति—

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

दर्शयतीत्यनुषङ्गः। तुशब्दः शङ्कानिरासार्थः । स्थूलशरीरा-

रम्भकं भूतानां सूक्ष्मं कारणमव्यक्तशब्देन दर्शयति । कुतः ॥ तदर्हत्वात् ॥ अव्यक्तशब्दार्हत्वादित्यर्थः । गोभिः श्रीणीत मत्सरमित्यादिवत् । प्रकृतिवाचकशब्देन विकारो लक्ष्यत इति भावः । गोभिः गोविकारैः पयोभिर्मत्सरं सोमं श्रीणीत मिश्रितं कुर्यादित्यर्थः ॥ २ ॥

ननु भूतसूक्ष्मात्मकाऽव्यक्ताङ्गीकारे आगतः प्रधानकारणवादः, सांख्यैस्तस्यैव प्रधानत्वेनाङ्गीकारादित्यत आह—

तदधीनत्वादर्थवत् ॥ ३ ॥

न प्रधानकारणवादो मयाङ्गीकृतः । कुतः ॥ तदधीनत्वात् । ईश्वराधीनत्वाङ्गीकारात् । स्वतन्त्रं चेतनानधिष्ठितमव्यक्तं जगत्कारणमिति सांख्यमतम् । सिद्धान्ते त्वीश्वराऽधिष्ठितं मायाऽविद्याऽऽकाशादिशब्दवाच्यं जगत्कारणमिति महद्वैलक्षण्यम् ॥

नन्वीश्वरादेव जगदुत्पत्तावव्यक्तवैयर्थ्यमित्याशङ्क्याह ॥ अर्थवदिति ॥ प्रयोजनवदित्यर्थः । देवात्मशक्तिं स्वगुणैर्निगूढां, मायां तु प्रकृतिं विद्यादितिश्रुतिसिद्धमीश्वरस्य सहकारिभूतमव्यक्तमवश्यमङ्गीकर्तव्यम् । न हि शक्तिरहितेश्वरः कार्यलेशं वा कर्तुं समर्थः । असङ्गत्वादिति तात्पर्यम् । नन्वेवमपि कथं शरीरस्य महतः परत्वं, कथं वा अव्यक्तकार्यत्वस्येन्द्रियादीनामविशेषे, शरीरस्यैवाऽव्यक्तपदार्हत्वमितिचेत् । उच्यते । महच्छब्दवाच्यभोक्त्रऽपेक्षया हिरण्यगर्भबुद्ध्यपेक्षया वा अव्यक्ताख्याऽविद्यायास्तावत्परत्वं सर्वसिद्धम् । तदधीनत्वाद्भोक्त्रादेः । तथाच तन्निष्ठपरत्वं, तद्विकारे देहे उपचर्यते । इन्द्रियादीनां तत्कार्यत्वाऽविशेषेऽपि स्वस्वशब्दैरेवोपात्तत्वात् परिशेषात् प्रकृताङ्गस्याऽव्यक्तशब्देन स्थूलदेहग्रहणं न्याय्यमिति ॥

आचार्यैकदेशीयैः सूत्रद्वयमिदमन्यथा व्याख्यातम् । शरीरं

द्विविधं, स्थूलं सूक्ष्मं च । द्वयमपि पूर्ववाक्ये रथत्वेन गृहीतम्, उत्तरस्मिन् वाक्ये सूक्ष्ममेवाऽव्यक्तशब्देन गृहीतम् । तदर्हत्वात् । तच्चाऽर्थवत् । तदधीनत्वाद् वन्धमोक्षव्यवहारस्येति*। सर्वथापि प्रधानस्य नात्रावकाशः ॥ ३ ॥

अपि च,

ज्ञेयत्वावचनाच्च ॥ ४ ॥

सांख्यैः प्रकृतिपुरुषविवेकान्मोक्ष इति वदद्भिः प्रकृतिरपि तदर्थं ज्ञेयेत्युक्तम् । न च ज्ञेयत्वेन,प्रकृतेअव्यक्तमुच्यते । अव्यक्तशब्दमात्रश्रवणात् । तस्मादपि, नाऽव्यक्तं प्रधानम् ॥ ४ ॥

वदतीतिचेन्न, प्राज्ञो हि प्रकरणात् ॥ ५ ॥

अत्राह सांख्यः, ज्ञेयत्वाऽवचनादित्यसंगतम् । अव्यक्तशब्दवाच्यस्यैवोत्तरत्र ज्ञेयत्ववचनात् ॥

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यगन्धवच्च यत् ।*

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यत इति ॥ अशब्दमित्यादिषु प्रत्येकं नित्यमिति संबद्ध्यते । नित्यं सर्वदा निचाय्य ज्ञात्वा । यादृशं शब्दादिहीनं प्रधानं तादृशमेवेदं वाक्यं, ज्ञेयत्वेन वदतीतिचेन्न । प्राज्ञो हि परमात्मा निचाय्यत्वेन निर्दिष्टो, न प्रधानम् । कस्मात् ?

पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ।

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते इत्यादिनाऽऽत्मन एव प्रकरणात् ॥ ५ ॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

किञ्च, न प्रधानमव्यक्तशब्दवाच्यं ज्ञेयम् । वाक्यात् त्रयाणामेव अग्निजीवपरमात्मनामेव एव पूर्वोत्तरवाक्यपर्या-

लोचनया वक्तव्यत्वेनोपन्यासस्तद्विषय एव प्रश्नोऽपि दृश्यते कठवल्लीग्रन्थे, नाऽन्यस्य । तत्र, स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यमित्यग्निविषयः प्रश्नः । येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीय इति जीवप्रश्नः । अन्यत्र धर्मादन्यत्राऽधर्मादन्यत्राऽस्मात् कृताऽकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वदेति परमात्मप्रश्नः ॥ लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वेत्यग्निविषयमुत्तरम् । हंत त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा च मरणं प्राप्यात्मा भवति गौतम ॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतमिति जीवस्योत्तरम् । न जायते म्रियते वा विपश्चिदित्यादि परमात्मनः प्रतिवचनम् ॥ न ह्येवं प्रधानस्य प्रश्नोत्तरे दृश्येते, येनाऽव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा स्यात् ॥ श्रुत्यर्थस्तु - हे मृत्यो, स मदर्थं दत्तवरस्त्वं स्वर्ग्यं स्वर्गहेतुमग्निमध्येषि सदा स्मरसि तेन त्वं तद्विषयां विद्यां वदेत्यर्थः । जीवपरमात्मप्रश्नौ पूर्वं व्याख्यातौ । लोकादिं लोकहेतुं, विराड्दृष्ट्योपास्यत्वाल्लोकादिं तमग्निमुक्तवान्नचिकेतसे । याः स्वरूपतो यादृशीः यावतीः संख्याता यथा वाग्निश्चीयते तत्सर्वमुवाचेति संबन्धः । हंत इदानीं गुह्यं गोप्यं चिरन्तनं ब्रह्म प्रवक्ष्यामीत्युपक्रम्य जीवमपि ब्रवीति । यथेति । आत्मा जीवो मरणं प्राप्य यथा भवति तथा वक्ष्यामीति योजना । कथं भवतीत्यत आह । योनिमिति । मृतानां पुनर्विचित्रजन्मापत्तौ निमित्तमाह । यथेति । यद्यप्यस्मिन् कठवल्लीग्रन्थे जीवपरमात्मनोः पृथक्प्रश्नौ न स्तः । वरान् वृणीष्वेति मृत्युना प्रेरितेन नचिकेतसा पितुः सौमनस्याऽग्निविद्याऽऽत्मविद्यात्मकवरत्रयमेव पृष्टमिति

णामित्वभ्रममूलकः पूर्वपक्षः ॥ २६ ॥

सिद्धान्तयति—

श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुराक्षेपनिरासं ब्रूते । न तावत्कृत्स्नप्रसक्तिरस्ति । कुतः ॥ श्रुतेः ॥ यथा जगदुपादानत्वं ब्रह्मणः श्रूयते, एवं कार्यव्यतिरेकेण ब्रह्मणः सत्त्वं श्रूयते, एतावानस्य महिमेत्यादौ । तथाच श्रुत्यैव विवर्तवादः स्फुटीकृतः। न हि परिणामवादे कार्यव्यतिरेकेण सत्त्वं संभवति । तस्मात् कार्यातिरेकेण ब्रह्मणोऽवस्थानश्रुतेर्नोक्तदोष इत्यर्थः । ननु श्रुतिर्वा कथं कार्यातिरेकेण ब्रह्मणः सत्त्वं बोधयेदुक्तयुक्तिबाधितत्वादित्यत आह ॥ शब्दमूलत्वादिति ॥ ब्रह्मणः शब्दैकप्रमाणकत्वाद्यथाशब्दं कार्योपादानत्वं, तदतिरेकेण सत्त्वं चाऽविरुद्धमित्यर्थः ॥ २७ ॥

जगतो ब्रह्मविवर्तत्वेन स्वप्नप्रपञ्चवन्मायिकत्वात्तदुपादानत्वेऽपि ब्रह्मणो न कृत्स्नप्रसक्त्यादिदोषः स्वप्नसाक्षिवदित्याह—

आत्मनि चैव विचित्राश्च हि ॥ २८ ॥

एवं ब्रह्मणीव, हि यस्माद्धेतोरेकस्मिन्नात्मनि स्वप्नदृशि निरवयवे विचित्राः सृष्टयः श्रूयन्ते । न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत इत्यादौ स्वप्ने रथादीनामभावे कथं तदुपलब्धिरित्याशङ्क्योक्तं श्रुतावथेत्यादिसूत्रे चशब्देन मायाविदृष्टान्तं समुच्चिनोति । यथा लोके मायाविस्वरूपाऽनुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते तथा ब्रह्मण्यपि विविधसृष्टिरित्यर्थः ॥ २८ ॥

यत्रोभयोः समो दोष इति न्यायेन कृत्स्नप्रसक्त्यादेः स्व- मतेऽनुद्भाव्यत्वं दर्शयति—

स्वपक्षदोषाच्च ॥ २९ ॥

सांख्यादयोऽपि निरवयवं प्रधानं जगत् परिणामीत्यङ्गीचक्रुः । तथाच कृत्स्नप्रसक्त्यादिदोषाः सर्वे समानाः।अणुवादिनोऽपि परमाणुद्वयसंयोगेन द्व्यणुकादिसृष्टिमङ्गीचक्रुः । संयोगः किं व्याप्यवृत्तिरव्याप्यवृत्तिर्वा । आद्ये दृष्टविरोधः । कार्यप्रथिमाऽनुपपत्तिश्च । द्वितीये सावयवत्वं विनाऽव्याप्यवृत्तिसंयोगानुपपत्तिर्निरवयवत्वव्याकोप इत्यादयो दोषाः समानाः । ब्रह्मवादे ते दोषा न सन्ति च । तस्मादत्यन्तमुपपन्नः परमात्मकारणतावादः ॥ २९ ॥

एकस्यापि ब्रह्मणो विचित्रकार्यशक्तिमत्त्वमुक्तम् । तत् समर्थयति—

( १० ब्रह्मणोऽशरीरस्यैव मायाधिष्ठानाधिकरणम् । सू० २ )

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

मायाशक्तिमतो ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयोऽशरीरस्य न मायेतिन्यायेन विरुध्यते, न वेति संदेहे पूर्वोक्तशक्तिमत्त्वविषयकशङ्कानिरासेन तत्समर्थनात्मकत्वाद्विषयविषयिभावसंगत्या विरुध्यत इति पूर्वपक्षे राद्धान्तः ॥ सर्वोपेता ॥ सर्वशक्तियुक्ता परा देवता । कुतः ॥ तद्दर्शनात् ॥ तस्य सर्वशक्तियोगस्य श्रुतौ दर्शनादित्यर्थः । सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्त इत्यादिश्रुतिर्द्रष्टव्या ॥ ३० ॥

विकरणत्वान्नेतिचेत्तदुक्तम् ॥ ३१ ॥

सर्वशक्तियुक्तानामपि देवादीनां चक्षुरादिकरणवतामेव विचित्रकार्यकर्तृत्वमवगम्यते । अचक्षुष्कम् अश्रोत्रमित्यादिना ब्रह्मणो विकरणत्वावगमान्न कर्तृत्वमितिचेद्, यदत्रोत्तरं वक्तव्यं तत् पूर्वमेव, न विलक्षणत्वाद्, देवादिवदपि लोके इत्यादा-

वुक्तम् । श्रुत्यैकसमधिगम्यत्वान्न तर्केण विरोधाशङ्का । यथा एकस्य तथैवान्यस्येति नियमाऽभावादित्यादिकमित्यर्थः ॥ ३१ ॥

ब्रह्मणो जगत्कर्तृत्वं हेत्वन्तरेणाक्षिपति—

( ११ नित्यतृप्तस्यापि ब्रह्मण एव जगत्स्रष्टृत्वाधिकरणम् । सू० २ )

न प्रयोजनवत्त्वात् ॥ ३२ ॥

अवाप्तसकलकामाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो, ब्रह्म विना फलेन न सृजति, अभ्रान्तचेतनत्वात् संमतवदिति-न्यायेन विरुद्ध्यते ? । नवेति संदेहे, पूर्वोक्तकर्तृत्वाऽऽक्षेपसंगत्या पूर्वपक्षः । ब्रह्मणो जगत्कर्तृत्वं न संभवति । नित्यतृप्तत्वेन प्रयोजनाऽभिसन्धिविरहितत्वात् प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वाऽवगमादिति ॥ ३२ ॥

अत्र राद्धान्तः—

लोकवत्तु लीलाकैवल्यम ॥ ३३ ॥

तुरुक्तशङ्कानिरासकः । यथा लोके राजतदमात्यादीनां फलं विनैव केवललीलारूपाः प्रवृत्तयो दृश्यन्ते, यथा वा उच्छ्वासादयः स्वभावादेवोपपद्यन्ते एवं ब्रह्मणोऽपि विचित्रकार्य-रचना लीलाकैवल्यं, केवललीलामात्रं, न फलसापेक्षम् । कथञ्चिद् राजादीनां लीलायां फलसंभवेऽपि नित्यतृप्तस्य ब्रह्मणो लीला-मात्रमेतादित्यभिप्रायः ॥ ३३ ॥

विधान्तरेण ब्रह्मणः कारणत्वमाक्षिप्य, समाधत्ते—

( १२ ब्रह्मणो वैषम्यनैर्घृण्याभावाधिकरणम । सू० ३ )

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥

निरवद्याद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो, यो विषमसृष्टि-कर्त्ता स सावद्य इति न्यायेन विरुद्ध्यते ? न वेति विशये, पूर्वं

मायामय्या लीलया ब्रह्मणो यत्स्रष्टृत्वमुक्तं तस्यात्राक्षेपात् संगतिसिद्धौ पूर्वपक्षः । ब्रह्म किं प्राणिकर्मसापेक्षं जगत्कर्तृ, निरपेक्षं वा । नाद्यः । अनीश्वरत्वप्रसङ्गात् । द्वितीये वैषम्यनैर्घृण्ये प्रसज्ज्येयाताम् । कांश्चित्तिर्यगादीनत्यन्तदुःखिनः सृजति कांश्चिन्मनुष्यादीन् सुखदुःखसाधारणान् कांश्चिद्देवादीनत्यन्तसुखिन इति वैषम्यं, सर्वसंहर्तृत्वाच्च नैर्घृण्यम् । ततश्च सावद्यत्वं प्रसज्ज्येत । तस्मान्निरवद्यस्येश्वरस्य न जगत्कर्तृत्वमितिशङ्कानिरासमाह ॥ वैषम्यनैर्घृण्ये न स्याताम् ॥ कस्मात् ॥ सापेक्षत्वात् ॥ प्राणिकर्मसापेक्षत्वात् । कर्मानपेक्षत्वे हि वैषम्यादिः स्यान्न सापेक्षत्वे इत्यर्थः। न च सापेक्षत्वेऽनीश्वरत्वम् । भृत्यादिसेवाऽनुसारेण फलदातू राज्ञोऽराजत्वादर्शनात् । ईश्वरस्तु पर्जन्यवद् द्रष्टव्यः । यथा तत्तद्बीजे सत्यपि न पर्जन्यं विना अङ्कुरोत्पत्तिस्तद्वदिति कर्मणैवोपपत्तौ किमर्थमीश्वरस्वीकार इतिचोद्यं श्रुत्या पराकृतमित्यादि भाष्ये द्रष्टव्यम् । नन्वीश्वरस्य कर्मसापेक्षत्वं कुत इत्यत्राह॥तथाहि दर्शयतीति॥ श्रुतिः स्मृतिश्चेत्यर्थः । एष हि एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषत इति । पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेनेत्याद्या श्रुतिः।यमुन्निनीषते ऊर्ध्वं नेतुमिच्छतीश्वरस्तं साधु कर्म कारयति । पूर्वजन्मकृतसुकृतवशादिति योजना । पुण्यः सुखी, पापो दुःखी । स्मृतिस्तु, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमित्याद्या द्रष्टव्या ॥ ३४ ॥

न कर्माऽविभागादितिचेन्नाऽनादित्वात् ॥ ३५ ॥

सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयमित्यादिना सृष्टेः प्राग-

ऽविभागाऽवधारणान्न तदानीं कर्मास्तीत्यतः कर्मापेक्षया विषमा सृष्टिरित्यसङ्गतमितिचेन्न ॥अनादित्वात्॥ संसारस्य बीजाङ्कुरवद् हेतुहेतुमद्भावोपपत्तेरित्यर्थः। पूर्वसृष्टौ सम्पादितधर्माधर्मप्रपञ्चस्या-त्यन्तिकनाशाभावात् तदपेक्षयोत्तरसृष्टौ न किञ्चिद्बाधकमिति भावः ॥ ३५ ॥

ननु संसारस्याऽनादित्वं कुत इत्यत आह—

उपपद्यते चाऽप्युपलभ्यते च ॥ ३६ ॥

संसारस्याऽनादित्वमुपपद्यते च । अन्यथाऽकस्मादेव सृष्ट्यङ्गीकारे मुक्तस्यापि पुनर्जन्मप्रसङ्गात् । पूर्वसृष्टिसा-दृश्याऽनुपपत्तेश्च ॥ श्रुतिस्मृत्योः ॥ संसारस्याऽनादित्वमुप-लभ्यते च । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्या-करवाणीति प्राणधारणनिमित्तेन जीवशब्देन सृष्ट्यादौ शारीर-मभिलपन् प्राणधारणादिसंसारस्याऽनादित्वं दर्शयति । धाता यथापूर्वमकल्पयदित्यादिश्रुतिरपि पूर्वकल्पसद्भावं दर्शयति । स्मृतिरपि संसारस्याऽनादित्वमाह । न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठेति । स्मृत्यर्थस्तु, अस्य संसार-वृक्षस्य कल्पितस्य रूपं पारमार्थिकं स्वरूपं ब्रह्म तथा घटादिव-दिह प्राकृतैर्व्यवहारभूमौ नोपलभ्यते, न चान्तोऽवधिरस्य सं-सारस्य विना ब्रह्मविद्यामुपलभ्यते, नाप्यादिरनिर्वचनीयत्वा-देव, नाऽपि सम्प्रतिष्ठा मध्यमिति ॥ ३६ ॥

इदानीं परपक्षप्रतिषेधप्रधानपादमारब्धुकामः स्वपक्षे निर्दु-ष्टतामुपसंहरति—

( १३ निर्गुणस्यापि ब्रह्मणो मायिकप्रकृतित्वाधिकरणम् । सू० १ )

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

पूर्वाधिकरणे कर्मवशादीश्वरस्य विषमसृष्टिहेतुत्वमुक्तं, तद्-ऽस्तु । विषमसृष्टिप्रयोजककर्मणः सत्त्वात् । तद्वदुपादानत्वप्रयोजकसगुणत्वस्याऽभावान्नोपादानत्वमिति प्रत्युदाहरणेनाऽस्यारम्भः । निर्गुणाद् ब्रह्मणो जगत्सर्गं वदन् समन्वयो, यन्निर्गुणं तन्नोपादानं यथा गन्ध इति न्यायेन विरुद्ध्यते ? न वेतिसन्देहे, विरुद्ध्यते इति प्राप्ते, ब्रूमः॥सर्वधर्मोपपत्तेश्चेति॥ सर्वे जगत्कारणत्वसर्वज्ञत्वादयः कारणधर्मा ये विद्यन्ते तेषां पूर्वोक्तप्रकारेण ब्रह्मण्युपपत्तेर्ब्रह्मैव जगत्कारणमित्यौपनिषदशास्त्रं निर्दोषमित्यऽर्थः । अयं भावः । यन्निर्गुणं तन्नोपादानमिति व्याप्तौ, किं परिणामित्वाभावो व्यापकः, उत विवर्त्तोपादानत्वाभावः । नाद्यः । इष्टत्वात् । न द्वितीयः । आरोपितानित्यत्वोपादाने ज्ञानजात्यादौ व्यभिचारात् । तस्मान्निर्गुणत्वे ब्रह्मणो विवर्त्तजगदुपादानत्वमविरुद्धमिति । तस्मान्न कथमपि समन्वयस्य विरोध इति सिद्धम् ॥ ३७ ॥

इति श्रीमद्ब्रह्मसूत्रवृत्तौ ब्रह्माऽमृतवर्षिण्यां द्वितीयाध्यायस्य प्रथमः स्मृतिपादः संपूर्णः ॥ २ ॥ १ ॥

## द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

इयता प्रबन्धेन मुमुक्षूणां सम्यग्ज्ञानोत्पत्तये वाक्यानां समन्वयः प्रतिपादितः । तस्मिन् समन्वये परपरिकल्पितदूषण-निरासेन स्वपक्षः स्थापितः । इदानीं मुमुक्षूणामद्वैतशास्त्रे निर्विचिकित्सप्रवृत्तिसिद्धये परमतदूषणप्रधानः पाद आरभ्यते—

( १ प्रधानस्य जगद्धेतुत्वाभावाऽधिकरणम् । सू० १० )

### रचनानुपपत्तेश्च नाऽनुमानम् ॥ १ ॥

सांख्यमतस्य शिष्टपरिगृहीतत्वेनाऽभ्यर्हितत्वात्तदादौ निराक्रियते । पूर्वमीक्षतेर्नाऽशब्दमित्यादिना प्रधानपरत्वेन वेदान्तानां व्याख्यानं निरस्तमिह तु प्रधानसाधकवेदनिरपेक्षयुक्तीनामाभासत्वमुच्यते इति न पौनरुक्त्यम् । अत्र सांख्यादिमत-निरासेन, समन्वयस्य तन्मतविरोधनिरासद्वारा दृढीकरणादस्य पादस्य श्रुत्यध्यायसङ्गती बोध्ये । समन्वये स्मृतिविषयकाविरोध-निरासेन स्वपक्षस्थापनपरप्रथमपादेनाऽस्य पादस्योपजीव्योप-जीवकभावसङ्गतिः । स्वपक्षस्थापनं विना परमतानिरासाऽयोगात् स्वसिद्धान्तज्ञानहेतुत्वाद्वा पूर्वपादस्योपजीव्यत्वं बोध्यम् । परमत-निरासपरत्वादेव सर्वेषामधिकरणानां पादसङ्गतिः । सर्वधर्मो-पपत्तेश्चेत्यनेन ब्रह्मणि कारणधर्माणामुपपत्तिरित्युक्तम् । तेषां प्रधान एवोपपत्तिः किं न स्यादिति आक्षेपस्याऽत्र निरासादन-योरधिकरणयोराक्षेपलक्षणाऽवान्तरसङ्गतिः । फलं तु पादसमाप्ति-पर्यन्तं परमतयुक्तिविरोधाऽविरोधाभ्यां समन्वयाऽसिद्धि-तत्सिद्धी इति विवेकः । तत्र प्रधानमचेतनं जगदुपादानमिति सांख्यसिद्धान्तो विषयः । सन्दिह्यमानस्यैवाऽधिकरणविषय-त्वात् । स च सिद्धान्तः सन्दिह्यते । किं प्रमाणमूलो ?

भ्रान्तिमूलो वेति । तत्र प्रमाणमूल एवेति युक्तम् । तथा, हि । बाह्याध्यात्मिकं जगत् सुखदुःखमोहात्मकसामान्योपादानकं भवितुमर्हति । तदन्वितत्वात् । यद्यदन्वितं तत्तदुपादानकं यथा मृदन्वितं घटादिकं मृदुपादानकमिति । तथाच यदेव सुखदुःखमोहात्मकं किञ्चित्सिद्धं तदेव सत्त्वरजस्तमोगुणात्मकं प्रधानमिति प्रामाणिकः सांख्यसिद्धान्त इति प्राप्ते ब्रूमः । उक्तानुमानसिद्धं प्रधानं न जगदुपादानम् ॥रचनानुपपत्तेः॥ चेतनाऽप्रेरितात् स्रष्टव्यज्ञानशून्यात् प्रधानादनेकविविधविचित्रजगद्रचनानुपपत्तेरित्यर्थः । लोके विचित्रप्रासादादिरचनायां बुद्धिकुशलशिल्प्यादिकार्यत्वदर्शनादितिभावः । सूत्रे चशब्देन हेतोः स्वरूपासिद्धिं समुच्चिनोति । सुखादीनामान्तरत्वप्रतीतेस्तदन्वितत्वं जगतोऽसिद्धम् । तस्मादप्रामाणिकः सांख्यसिद्धान्त इति ॥ १ ॥

प्रवृत्तेश्च ॥ २ ॥

साम्यावस्थापन्ना गुणा हि प्रधानम् । साम्यावस्थायाञ्च न किञ्चित्कार्यं जायते, किन्तु साम्यवस्थाप्रच्यवेन गुणानामङ्गाङ्गिभावे जाते कार्यस्योदय इति प्रक्रिया, सा न युक्ता, लोके अचेतनरथादिप्रवृत्तेश्चेतनाऽधीनत्वदर्शनात् प्रधानस्य साम्यावस्थाप्रच्युतिरूपप्रवृत्तेश्चेतनप्रेरणं विनाऽनुपपत्तेरित्यर्थः ॥ २ ॥

पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

नन्वचेतनस्य स्वयम्प्रवृत्तिरपि दृश्यते । यथा क्षीरं वत्सविवृद्धये स्वयमेव प्रवर्त्तते, यथा वा जलं स्वयमेव स्यन्दते तथा पयोऽम्बुवत् प्रधानं स्वयमेव प्रवर्तते इतिचेन्न । यतस्तत्रापि परमात्मा प्रेरकः श्रूयते, योऽप्सु तिष्ठन्नित्यादिना । तथाच पक्षत्वान्न व्यभिचारः पयोऽम्बुनोरिति भावः ॥ ३ ॥

व्यतिरेकाऽनवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

अपिच न स्वतन्त्रं प्रधानं जगदुपादानम् । कुतः ॥ व्यतिरेकानवस्थितेः ॥ स्वतन्त्रस्य तस्य कारणत्वे सर्वदा कार्यप्रसक्तौ कदाचिदपि कार्यव्यतिरेकस्यावस्थित्यभावप्रसङ्गादित्यर्थः । तदपि कुतः ॥ अनपेक्षत्वात् ॥ स्वतन्त्रस्य प्रधानस्य चेतनादिसहकार्यान्तराऽनपेक्षत्वाऽभ्युपगमात्त्वयेत्यर्थः ॥ ४ ॥

अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

ननु तृणोदकादिकं निमित्तान्तरनिरपेक्षमेव क्षीराकारेण परिणमते, तद्वत्प्रधानमपीतिचेन्न । कुतः ॥ अन्यत्राऽभावात् ॥ धेन्वादेरन्यत्र वलीवर्दादौ तृणादेः क्षीरीभावस्याऽभावादित्यर्थः॥ तथाच धेन्वादिसापेक्षमेव तृणादिकं क्षीरीभवति, निरपेक्षत्वे वलीवर्दादावपि क्षीरीभावप्रसङ्ग इति भावः ॥ ५ ॥

अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

प्रधानस्य स्वतःप्रवृत्त्यभ्युपगमे पुरुषार्थस्याप्यपेक्षाऽभावप्रसङ्गादित्यर्थः । न चेष्टापत्तिः । प्रधानमचेतनं चेतनस्य पुरुषार्थं साधयितुमेव प्रवर्तत इति, स्वाभ्युपगमविरोधादिति भावः । यद्वा, अर्थाभावात् प्रयोजनाऽभावादित्यर्थः। तथाहि । न तावत् प्रधानप्रवृत्तिः पुरुषस्य भोगापवर्गार्था । भोग्यानामानन्त्याद्ऽनिर्मोक्षप्रसङ्गात् । नाप्यपवर्गार्था । भोगाभावप्रसङ्गात् । प्रधानस्याप्रवृत्तिप्रसङ्गाच्च पुरुषस्य स्वरूपेणाऽवस्थितिलक्षणस्य मोक्षस्य प्रधानाप्रवृत्त्यैव सिद्धेः । तस्मात् प्रयोजनाभावान्न प्रधानस्य जगद्धेतुत्वम् ॥ ६ ॥

पुरुषाश्मवदितिचेत्तथापि ॥ ७ ॥

ननु पुरुष एव प्रधानस्य प्रवर्तकः । ननु स्वयमप्रवर्तमानः कथं परं प्रवर्तयेदितिचेत्,पुरुषाश्मवदिति।।ब्रूमः । लोके यथापङ्गुः पुरुषः स्वयमप्रवर्तमानोऽन्धं प्रवृत्तिशक्तिमन्तं प्रवतर्यति, यथावाऽयस्कान्तोऽश्मसंन्निधिमात्रेणाऽयः प्रवर्तयति । एवं पुरुषः प्रवर्तक इतिचेन्न। यतस्तथापि दोषाणामनिर्मोक्षः।तथाहि।प्रधानस्य पुरुषप्रेर्यत्वे प्रधानं स्वतन्त्रमिति स्वाऽभ्युपगमविरोधः।पुरुषस्य प्रवर्तकत्वे कूटस्थत्वहानिः।स्वस्य व्यापारं विना प्रवर्तकत्वाऽयोगात्। पङ्गोरपि वाग्व्यापारस्य सत्त्वात् । अयस्कान्तस्य त्वनित्यसान्निधिरेव व्यापारः।प्रधानपुरुषसन्निधेर्नित्यत्वेन व्यापारत्वायोगः । नित्यस्यापि व्यापारत्वे प्रधानप्रवृत्त्यविच्छेदप्रसङ्ग इत्यादयो दोषाः द्रष्टव्याः। ब्रह्मणस्त्वाविद्यकं प्रवर्तकत्वमिति न कौटस्थ्यहानिः।।७।।

अङ्गित्वाऽनुपपत्तेश्च ॥ ८ ॥

अपिच, गुणत्रयसाम्यावस्थाप्रकृतिः । साम्यावस्थाप्रच्युत्या गुणानामङ्गाङ्गिभावे महदाद्युत्पत्तिरिति वदता सांख्येनेदं वक्तव्यम् । प्रकृतिः किं कूटस्था, उत विकारिणी । आद्ये परस्परापेक्षाणां गुणानां साम्यावस्थाप्रच्युत्याङ्गाङ्गिभावाऽनुपपत्तेः कार्यानुदयप्रसङ्गः । प्रच्युत्यङ्गीकारे स्वरूपहान्यापत्तेः । द्वितीये, किं स्वतः प्रच्युतिरुताऽन्यतः।नाद्यः । सदा कार्यप्रसङ्गात् । न द्वितीयः । पुरुषस्योदासीनत्वादभ्युपगमहानेश्च । अतः प्रच्युत्यभावेनाङ्गाङ्गिभावानुपपत्तेः कार्याभावप्रसङ्ग इत्यर्थः ।।८।।

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

नन्वनपेक्षस्वभावाः कूटस्थाश्च गुणा नानुमीयन्तेऽस्माभिः, किन्त्वन्यथा प्रकारान्तरेणैव । यथा कार्योत्पत्तिसम्भवस्तथानुमीयन्ते कार्याऽनुमेयत्वात् प्रधानस्येत्यङ्गाङ्गिभावसम्भवात् कार्यो-

त्पादः सम्भवतीतिचेन्न ॥ ज्ञशक्तिवियोगात् ॥ गुणानां ज्ञानशक्तिरहितत्वादित्यर्थः । अयं भावः । अचेतनानां गुणानां साम्यावस्थाप्रच्युत्यादियोग्यत्वेऽपि प्रच्युतेर्निर्निमित्तत्वाऽसम्भवात् किञ्चिन्निमित्तं वक्तव्यम् । तथाचान्यस्य निमित्तस्याऽसम्भवेन, स्वतो वैषम्ये सर्वदा वैषम्यं स्यात् । स्वतोऽप्यवैषम्ये सदा साम्यप्रसङ्ग इत्यङ्गाङ्गित्वानुपपत्तिस्तदवस्थेति कार्यानुत्पादोऽपि तदवस्थ इति ॥ ९ ॥

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

सांख्या हि क्वचिन्महतः पञ्चतन्मात्रसर्गं वदन्ति क्वचिदऽहङ्कारात् क्वचिदेकादशेन्द्रियाणि क्वचिद्बाह्येन्द्रियाणि त्वगिन्द्रियेऽन्तर्भाव्य सप्तेन्द्रियाणीतिस्थापयन्ति । तथाच परस्परविप्रतिषेधादसमञ्जसं सांख्यमतमित्यर्थः । तस्मात् सांख्यमतस्य भ्रान्तिमूलत्वात्तदीययुक्तिविरोधः समन्वयस्य नास्तीति सिद्धम् ॥१०॥

ननु प्रपञ्चस्य ब्रह्मोपादानकत्वे ब्रह्मवच्चैतन्यं स्यात् कारणगुणस्य कार्येऽवश्यम्भावादित्याशङ्क्येमं नियमं तदीयप्रक्रियया व्यभिचारयति—

(२ ब्रह्मणो विसदृशजगदुत्पत्तौ काणादीयदृष्टान्तसद्भावाऽधिकरणम् । सू० १)

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

प्रपञ्चस्य प्रधाननिष्ठाऽशब्दत्वादिगुणानन्वयात् प्रधानाऽनुपादानकत्ववद्ब्रह्मगुणचेतनत्वाऽनन्वयात् ब्रह्मोपादानकत्वं न स्यादिति दृष्टान्तसङ्गत्यास्यारम्भः । यद्यपि स्वपक्षे दोषनिरासाऽऽत्मकस्यास्याधिकरणस्य नात्र सम्बन्धः, किन्तु स्मृतिपाद एव तथाप्युक्ताऽवान्तरसङ्गतिलोभादिह लिखितमिति मन्तव्यम् । अत्र चेतनाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः । स किं

कारणगुणाः कार्ये स्वसमानजातीयगुणारम्भका इति न्यायेन विरुद्ध्यते, न वेति सन्देहे विरुद्ध्यते इति प्राप्ते, व्यभिचारान्न विरोध इति राद्धान्तः। सूत्रे वाशब्दश्चार्थोऽनुक्ताणुसमुच्चयं ब्रूते। तथाच ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घाणुवच्चेतनाद्ब्रह्मणोऽचेतनं जगद्भवतीतियोजना। वैशेषिका हि ह्रस्वादणोश्च द्व्यणुकाद् महद्दीर्घं च त्र्यणुकं जायते द्व्यणुकगतह्रस्वत्वाऽणुत्वे तु त्र्यणुके स्वसमानजातीयह्रस्वत्वाणुत्वे नारभेते। किन्तु द्व्यणुकगतत्रित्वसंख्या त्र्यणुके महत्त्वादिकमारभते इति वदन्ति। एवं परिमण्डलात् परमाणोरणुद्व्यणुकं जायते। परमाणुगतपारिमाण्डल्यं तु द्व्यणुके पारिमाण्डल्यं नजनयति,किन्तु परमाणुगतद्वित्वसंख्या द्व्यणुकेऽणुत्वादिकमारभत इति प्रक्रियां दर्शयन्ति। एवं वर्णयतां वैशेषिकाणां, कारणगुणाः कार्ये स्वसमानजातीयगुणारम्भका इति नियमाऽभासं वदतां कथं लज्जा न भवेत्। व्यभिचारस्य स्फुटत्वादिति तात्पर्यम्। एतेन, शिष्टापरिग्रहा अपि व्याख्याता इत्यस्याऽयं प्रपञ्च इति न तेन पौनरुक्त्यं शङ्कनीयमिति ॥ ११ ॥

इदानीं प्रकृतं परमतनिरासमुपक्रमते—

( ३ परमाणुकारणवादनिराकरणाधिकरणम् । सू० ६ )

उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥

प्रासङ्गिकाव्यवहितेनाऽस्य सङ्गतिर्नापेक्षितेति व्यवहितेनोच्यते। ननु प्रधानस्य चेतनाऽनधिष्ठितत्वात् कारणत्वाऽभावे तर्हि चेतनाऽधिष्ठिताः परमाणवः कारणं जगत इति प्रत्युदाहरणेनास्यारम्भः। अत्र परमाणुप्रक्रियया, जगदुत्पत्तिरिति वैशेषिकासिद्धान्तो विषयः। स किं मानमूलो भ्रान्तिमूलो वेति विशये, मानमूल इति प्राप्ते, ब्रूमः। वैशेषिकाः खलु

कर्मणा सृष्टेः पूर्वं निश्चलयोः परमाण्वोः संयोगे द्व्यणुकाद्युत्पत्ति-रिति वदन्ति । तस्य कर्मणः किञ्चिन्निमित्तमभ्युपगम्यते, न वा । आद्ये कर्मनिमित्तत्वेन प्रसिद्धं जीवप्रयत्नाभिघातादिकमङ्गी-कर्तव्यम् । न हि तत् संभवति । सृष्ट्युत्तरकालीनत्वात्तस्य । द्वितीये कर्मानुत्पत्तिः । अत उभयथापि न कर्म । अतः कर्माभावा-त्तदभावः । द्व्यणुकादिक्रमेण सृष्ट्युत्पादाभाव इत्यर्थः ।यद्वा जीवा-ऽदृष्टवशादाद्यं कर्म परमाणुष्विति तत्सिद्धान्तः।तथाच तददृष्टं किं जीवनिष्ठं वा परमाणुनिष्ठं वा । उभयथापि न कर्म । अदृष्टस्या-ऽचेतनस्य कर्माभिमुख्यायोगात् । तथात्वे सर्वदा सृष्टिप्रसङ्गात् । न च जीवोऽदृष्टस्य प्रेरकः । तदानीं तस्य ज्ञानवत्त्वाभावात् । नच वैशेषिकाभिमत ईश्वरः प्रेरक इति वक्ष्यते । अतः सर्गा-भाव इत्यर्थः । यद्वा परमाण्वोः संयोगोत्पत्तौ सृष्टिविभागोत्पत्तौ च प्रलयस्तयोश्च संयोगविभागयोः कर्मैव हेतुरिति तत्सिद्धान्तः । तथाच संयोगहेतुः कर्म नास्तीत्युक्तम् । एवं विभागहेतुः कर्म नास्ति निमित्तस्यादृष्टस्य नोदनादेरसंभवात् । अदृष्टं च भोगार्थ-मेव, न प्रलयार्थमित्युभयथापि न कर्माऽतः संयोगविभागहेतु-कर्माभावात्तदभावस्तयोः सृष्टिप्रलयोरभाव इत्यर्थः । तस्मादनु-पपन्नः परमाणुकारणवादः ॥ १२ ॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

तदभाव इत्यनुषङ्गः । तस्य परमाणुकारणवादस्याऽसम्भव इत्यर्थः । कुतः । परमाणुद्व्यणुकयोः समवायाऽभ्युपगमात् । अभ्युपगमे को दोषस्तत्राह ॥ साम्यादनवस्थितेरिति ॥ यथा द्व्यणुकं परमाणुभ्यामत्यन्तं भिन्नं तत्समवायमपेक्षते, एवं सम-वायोऽपि समवायिभ्यामत्यन्तं भिन्नः सन्नन्येन समवायेन समवायिभ्यां सम्बध्येत । भिन्नत्वस्य सम्बद्धस्य साम्यादसम्बद्ध-

स्य सम्बन्धत्वादर्शनात् । तथाच तस्यापि भिन्नत्वसाम्यात् । समवायान्तरमित्यनवस्था स्यादित्यर्थः । स्वरूपस्य सम्बन्धत्वे समवायलोपप्रसङ्ग इति बोध्यम् । तथाच समवायासिद्धौ समवेत-द्व्यणुकादिसृष्ट्यसिद्धिः स्यादिति भावः ॥ १३ ॥

नित्यमेव च भावात् ॥ १४ ॥

परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेर्नित्यमेवभावात् प्रलया-भावप्रसङ्गः । निवृत्तिस्वभावत्वे निवृत्तेर्नित्यमेव भावात् सृष्ट्य-ऽभावप्रसङ्ग इति भावः ॥ १४ ॥

रूपादिमत्त्वाच्च विपर्ययोऽदर्शनात् ॥ १५ ॥

चतुर्विधाः परमाणवो रूपस्पर्शादिमन्तो नित्या अणवश्चेति वैशेषिकासिद्धान्तः । स नोपपद्यते । तथाहि । परमाणवो नित्याः स्थूलाश्च भवितुमर्हन्ति । रूपादिमत्त्वात् पटादिवत् । पटो हि रूपादिमत्त्वात् स्वकारणतन्त्वपेक्षया स्थूलोऽनित्यश्च । तद्वज्ज-गत्कारणस्यापि रूपादिमत्त्वे अनित्यत्वप्रसक्तौ स्वकारणाऽपेक्ष-या स्थूलत्वं स्यादिति न जगज्जत्कारणस्य रूपादिमत्त्वमिति तात्पर्यम् । सूत्रार्थस्तु, भवन्मते जगत्कारणस्य रूपादिमत्त्वादणु-त्वानित्यत्वाविपयर्यः स्थूलत्वमनित्यत्वं च प्रसज्ज्येत । लोके रूपादिमतः पटादेस्तथा दर्शनादिति ॥ १५ ॥

उभयथा च दोषात् ॥ १६ ॥

रूपरसगन्धस्पर्शात्मिका पृथिवी स्थूला दृश्यते । रूपरस-स्पर्शात्मिका आपः सूक्ष्माः, रूपस्पर्शात्मकं तेजः सूक्ष्मतरम् । स्पर्शात्मको वायुः सूक्ष्मतम इत्यनुभवागमसिद्धा प्रक्रिया । तत्र पृथिव्यादिवत् परमाणवोऽप्युपचिताऽपचितगुणात्मकाः कल्प्यन्ते न वा।आद्येऽणुत्वव्याघातः। उपचिताऽपचितगुणात्मकपृथिव्यादेः

स्वरूपोपचयाऽपचयदर्शनाद् गुणानां द्रव्यादतिरिक्तत्वेऽपि तादृशगुणवत्त्वेन पृथिव्यादीनामुपचयदर्शनात् । अणुत्वव्याघात एव । न वा गुणगुणिनोर्भेदः सम्भवति । भेदे गवाश्ववद्गुण-गुणिभावाऽनुपपत्तेर्द्वितीये तत्कार्यपृथिव्यादिषु रूपाद्यनुपलम्भ-प्रसङ्ग इत्युभयथापि दोषादनुपपन्नः परमाणुकारणवादः ॥ १६॥

अपरिग्रहाच्चाऽत्यन्तमनपेक्षा ॥ १७ ॥

प्रधानवादो हि सत्कार्यत्वाद्यंशेन मन्वादिभिः शिष्टैः परि-गृहीतः । परमाणुकारणवादस्तु केनचिदप्यंशेन कैश्चिदपि शिष्टैर्न परिगृहीत इति शिष्टाऽपरिग्रहाच्चात्यन्तमनपेक्षा परमाणुकारण-वादे कर्तव्या वेदविद्भिरित्यर्थः । सूत्रे चशब्देन वैशेषिकाभिमत-षट्पदार्थाऽसम्भवः सूचितः। स चासम्भवः प्रतिपादितो भगवता भाष्यकृता । तस्माद्भ्रान्त्येकमूलवैशेषिकादिमतेन न समन्वय-स्य विरोध इति सिद्धम् ॥ १७ ॥

( ४ वैनाशिकखण्डने समुदायासिद्ध्यधिकरणम् । सू० १० )

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

वैशेषिकस्तावत् परिमाणभेदेन देहादेराशुतरविनाशित्वा-ऽङ्गीकारादात्मनः स्थायित्वाङ्गीकाराच्चार्द्धवैनाशिकः । सर्वक्षणि-कत्ववादिनस्तु पूर्णवैनाशिका इत्यर्द्धवैनाशिकवैशेषिकमत-निराकरणानन्तरं पूर्णवैनाशिकमतं बुद्धिस्थमिदानीं निराक्रियत इत्यत्रान्तरसङ्गतिर्द्रष्टव्या। तत्र तावद् बुद्धमुनिना आगमउपादिष्टः। स चागमो वैभाषिकसौत्रान्तिकयोगाचारसर्वशून्यवाद्याऽऽख्य-चतुर्विधशिष्यप्रतिपत्तिवैचित्र्याच्चतुर्विधो भवति । तत्र वैभाषिक-सौत्रान्तिकयोर्ज्ञानं तदतिरिक्तपदार्थाश्च सर्वे क्षणिकाः सत्यभूताः सन्ति। इयान् परं भेदो, वैभाषिकस्य घटादिपदार्थाः प्रत्यक्षाः,

सौत्रान्तिकस्य तु ज्ञाने घटाद्याकारे सम्पन्ने तेनाकारेण प्रत्यक्षेणाऽप्रत्यक्षघटादयोऽनुमीयन्त इति । तत्राऽऽदौ वैभाषिक-सौत्रान्तिकयोर्बाह्यार्थास्तित्वाऽविशेषात्तयोर्मतमेकीकृत्य तन्मतं प्रमाणमूलं भ्रान्तिमूलं वेति सन्देहे, प्रमाणमूलमिति प्राप्तम् । तथाहि । पृथिव्यप्तेजोवायवश्चत्वारि भूतानि चतुर्विधपरमाणुपुञ्ज-स्वरूपाणि । एवं भौतिकानि रूपादिविषयेन्द्रियाणि परमाणु-पुञ्जस्वरूपाणि । न हि परमाणुसमूहव्यतिरेकेणावयविभूतं कि-ञ्चित् कार्यमस्तीति परमाणुहेतुक एव पृथिव्यादिसमुदायो बाह्यः। आध्यात्मिकश्च समुदायःस्कन्धहेतुकः । तथाहि । रूप विज्ञानवेदना-संज्ञासंस्काराश्च पञ्चैते स्कन्धाः।तत्र रूपस्कन्धः सविषयेन्द्रियाणि। विषयाणां रूपादीनामाध्यात्मिकत्वमाध्यात्मिकेन्द्रियसम्बन्धाद् द्रष्टव्यम् । अहमित्यालयविज्ञानप्रवाहो विज्ञानस्कन्धः । सुखादि-प्रत्ययो वेदनास्कन्धः।गौरश्वइत्यादिशब्दादिविशिष्टवस्तुविषयक-सविकल्पकप्रत्ययः संज्ञास्कन्धः । रागद्वेषमोहधर्माऽधर्माः संस्कारस्कन्धः । तत्र विज्ञानस्कन्धश्चित्तमित्यात्मेति च गीयते । इतरे स्कन्धाश्चैत्ताः । एतेषां चित्तचैत्तानां स्कन्धानां समुदायः सर्वव्यवहाराऽऽस्पदम् । आध्यात्मिकश्च समुदायः स्कन्धहेतुक इति सर्वक्षणिकत्ववादिनोर्वैभाषिकसौत्रान्तिकयोर्मतम् । त-न्निराकरोति ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिरिति ॥ उभय-हेतुकेऽपि समुदाये परमाणुहेतुके बाह्यसमुदाये स्कन्धहेतुके आध्यात्मिकसमुदाये च तदप्राप्तिस्तस्य समुदायस्याप्राप्तिरित्यर्थः। अचेतनानां परमाणूनां स्कन्धानां च स्वतःसमुदायाऽयोगा-दन्यस्य च स्थिरस्य, चेतनस्य समुदायकर्त्तुरनभ्युपगमादिति सूत्रवाक्यशेषः ॥ १८ ॥

इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

ननु संहन्तुश्चेतनस्याभावेऽपि संघात उपपद्यते । तथाहि । अविद्या संस्कारो विज्ञानं नाम रूपं षडायतनं स्पर्शो वेदनेत्येवञ्जातीयकानामविद्यादीनाम् इतरेतरप्रत्ययत्वादितरेतरकारणत्वाद्घटीयन्त्रवदनिशमावर्तमानेष्वविद्यादिष्वर्थाक्षिप्तः संघात उपपद्यत इति शङ्कार्थः। कार्यं प्रति अयते जनकत्वेन गच्छतीति व्युत्पत्त्या प्रत्ययशब्दः कारणवचनः । अविद्यादीनामयमर्थः । क्षणिकेषु स्थिरत्वनित्यत्वादिभ्रान्तिरविद्या सा च विषयेषु रागाद्यात्मकसंस्कारहेतुः । स च संस्कारो गर्भस्थस्याऽऽद्यं विज्ञानं जनयति । तस्माच्चाऽऽलयविज्ञानात् पृथिव्यादिचतुष्टयं, शरीरस्य समुदायस्य कारणभूतं जायते । तदेव नामाश्रयत्वान्नाम इत्युच्यते । तच्च नाम सिताऽसितादिरूपं तच्छरीरं जनयति । गर्भभूतस्य देहस्य कलिलं बुद्बुदाद्यवस्था नामरूपशब्दाऽर्थ इति पर्यवसन्नं पृथिव्यादिचतुष्टयं नाम रूपं च शरीरं विज्ञानधातुश्चेति षडायतनानि यस्येन्द्रियजातस्य तत् षडायतनम् । नामरूपेन्द्रियाणां मिथःसम्बन्धः स्पर्शस्ततः सुखादिका वेदना, ततः पुनरविद्यादय इति । निराकरोति ।।नेति।। कुतः । उत्पत्तिमात्रनिमित्तत्वात् ।। अयमर्थः । द्विविधो हि कार्योत्पादस्तवाऽभिमतः— हेत्वधीनः, कारणसमुदायाऽधीनश्चेति । तत्र हेत्वऽधीनो यथा बीजादङ्कुरः अङ्कुरात् पत्रं पत्रात् काण्डमित्यादौ । कारणसमुदायाऽधीनो यथा पृथिव्यप्तेजोवाय्वाकाशकालविशेषाणां मेलने सति तेभ्य उपकृताद्बीजादङ्कुरो जायते, एवमाध्यात्मिकः कार्योत्पादोऽपि पूर्ववद् द्विविधः । तत्राद्यो हेत्वधीनः कार्योत्पादश्चाविद्यादीनाम् । द्वितीयस्तु पृथिव्यप्तेजोवाय्वाकाशाऽऽलयविज्ञानानां समवायात् कार्यस्योत्पाद इति, कार्येऽङ्कुरादौ काठिन्यस्नेहपाकादीनां दर्शनात् पृथिव्यादीनां कारण-

त्वमूह्यते । उभयाविधेऽपि, कार्योत्पादे न चेतनापेक्षेति । तत्रा-द्यमङ्गीकृत्य द्वितीयं कार्योत्पादं हेतुसमुदायाधीनं दूषयति॥उत्पत्ति-मात्रनिमित्तत्वादिति॥ अविद्यादीनामितरेतरकारणत्वेऽप्युत्पत्ति-मात्रे निमित्तत्वान्न हेतुसंघाताधीनः कार्योत्पादः सम्भवति । संहन्तुः स्थिरस्य चेतनस्याऽनङ्गीकारादित्यर्थः ॥ १९ ॥

सर्वक्षणिकत्ववादिनां हेत्वधीनोऽपि कार्योत्पादो न स-म्भवतीत्याह—

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

कार्यकाले विद्यमानस्यैव मृदादेः कारणत्वं दृश्यते, न तु नष्टस्य । भवन्मते तूत्तरस्य कार्यक्षणस्योत्पादे पूर्वस्य कारणक्षण-स्य निरोधाद् नाशाङ्गीकाराद्, न हेत्वधीनोऽपि कार्योत्पादः स-म्भवतीत्यर्थः ॥ २० ॥

ननु निर्हेतुक एव कार्योत्पादोऽस्तु । तथाच, नोक्तदोष इत्याशङ्क्याह—

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

असति हेतौ,कार्योत्पत्त्यङ्गीकारे पूर्वज्ञानचक्षुरालोकविषयेषु चतुर्षु हेतुषु सत्सु कार्यं नीलादिज्ञानं जायते इत्यस्याः प्रतिज्ञा-या उपरोधः स्यात् । अन्यथा कार्यं सहेतुकमित्यङ्गीकृत्य कार्य-पर्यन्तं हेतोः स्थित्यङ्गीकारे हेतुफलयोर्यौगपद्यम् । एकस्मिन् काले स्थितिः स्यादित्यर्थः । तथाच क्षणिकत्वप्रतिज्ञाहानिरि-ति भावः ॥ २१ ॥

प्रतिसंख्याऽप्रतिसंख्यानिरोधाऽप्राप्तिरविच्छेदात् ॥ २२ ॥

वैनाशिकाः खलु बुद्धिपूर्वकनाशो भावानामबुद्धिपूर्वक-नाश आकाशं चेति त्रयमपि अवस्तुसन्निरुपाख्यं निर्हेतुकं

तुच्छमिति वदन्ति । तत्राऽऽकाशस्य निरुपाख्यत्वमुत्तरसूत्रे निरसिष्यते । अत्र तु बुद्धिपूर्वकनाशाबुद्धिपूर्वकनाशरूपनिरोधद्वयं निराक्रियते । प्रतीपाप्रतिकूलाऽसन्तं घटमसन्तं करोमीत्येवमाकारिका संख्याबुद्धिः प्रतिसंख्या । तत्पूर्वको निरोधो नाशः प्रतिसंख्यानिरोधः।अतत्पूर्वको नाशोऽप्रतिसंख्यानिरोधः। तयोर्निरोधयोःसंतानिषु,संताने वा अप्राप्तिरसंभव इत्यर्थः। कुतः । अविच्छेदात् । न तावन्निरोधद्वयस्य संतानगोचरत्वं, संतानस्याविच्छेदात् । संतानविच्छेदो हि चरमसंतानिविच्छेदाद्वक्तव्यः।स न युक्तः।चरमसंतानिनः कार्यान्तरजनकत्वे संतानस्याविच्छेद एव।अजनकत्वे चरमसंतानिनोऽर्थक्रियाकारित्वरूपसत्त्वाभावेनात्यन्तासत्त्वात् पूर्वसंतानिनां सर्वेषां शून्यतापरिशेषापत्तिः। अर्थक्रियाया अभावात्।नापि संतानिप्रतियोगिकत्वं निरोधद्वयस्य । सन्तानिनां घटादीनां क्षणिकत्वेन बुद्धिपूर्वकनाशायोगात् । नाप्यबुद्धिपूर्वकः समूलनाशस्त्वदभ्युपगतः संभवति । मूलस्य मृदादेः प्रत्यभिज्ञायमानत्वात् । तस्मान्निरोधद्वयस्याऽनुपपत्तिः ॥ २२ ॥

उभयथा च दोषात् ॥ २३ ॥

स्थिरत्वादिभ्रान्तिरूपाविद्यायाः किं सम्यग्ज्ञानाद्विनाश उत स्वतो वा । नाद्यः । निर्हेतुकनाशाऽभ्युपगमहानिप्रसङ्गात् । द्वितीये सम्यग्ज्ञानोपदेशानर्थक्यमित्युभयथापि दोषादसङ्गतं सौगतमतमित्यर्थः ॥ २३ ॥

आकाशस्य निरुपाख्यत्वं दूषयति—

आकाशे चाविशेषात् ॥ २४ ॥

आत्मन आकाशः संभूत इति श्रुत्या शब्दगुणकत्वेन चा-

ऽऽकाशेऽपि पृथिव्यादिवद्वस्तुत्वप्रतिपत्तेरविशेषान्न निरुपाख्यत्व-मित्यर्थः ॥ २४ ॥

आत्मनः क्षणिकत्वं दूषयति—

अनुस्मृतेश्च ॥ २५ ॥

अनुभवमनु अनन्तरमुत्पद्यमाना स्मृतिरनुस्मृतिस्तद्बलाद् आत्मनोऽनुभवितुर्न क्षणिकत्वमित्यर्थः । अन्याऽनुभूतेऽन्यस्य स्मरणाऽयोगादिति भावः ॥ २५ ॥

नासतोऽदृष्टत्वात् ॥ २६ ॥

क्षणिकात् कार्योत्पत्तिमिच्छता अर्थादभावान्निरुपाख्यादेव कार्योत्पत्तिरङ्गीकृतेति प्रतिभाति। पूर्वक्षणनाशं विना कार्यक्षणो-त्पत्त्ययोगात् साक्षादभावाद्भावोत्पत्तिः स्वग्रन्थे दर्शिता । तथा-चाऽसतोऽभावान्निरुपाख्यात् कार्योत्पत्तिर्न युक्ता । कुतः ? ॥ अदृष्टत्वात् ॥ निरुपाख्यान्नरविषाणादेः कार्योत्पत्तेरदृष्टत्वादित्य-ऽर्थः । दृष्टत्वादिति वा पदच्छेदः । सत एव मृदादेः कार्योत्पत्ते-र्दृष्टत्वादित्यर्थः ॥ २६ ॥

उदासीनानामपि चैवं सिद्धिः २७ ॥

किञ्चैवमभावाद्भावोत्पत्त्यङ्गीकारे उदासीनानां तत्तत्कार्य-साधनेषु कृष्यादिष्वप्रवर्त्तमानानां, स्वगृहे तूष्णीमुपविष्टानामपि पुंसां स्वस्वाऽभिमतस्य कार्यस्य सिद्धिः स्यादित्यर्थः । तस्माद् भ्रान्त्येकमूलेन,वैभाषिकसौत्रान्तिकयोर्बाह्यार्थवादिनोर्मतेन,सम-न्वयस्य न विरोध इति सिद्धम् ॥ २७ ॥

( ५ विज्ञानवादनिराकरणाधिकरणम् । सू० ५ )

नाभाव उपलब्धेः ॥ २८ ॥

एवं क्षणिकबाह्यार्थवादिनिराकरणं कृतम् । तन्निराकरण-

मुपजीव्य क्षणिकविज्ञानमात्रसत्यत्ववादी प्रत्यवतिष्ठते इत्यनयो-रुपजीव्योपजीवकभावः संगतिः। विज्ञानवादिनो बौद्धस्य योऽयं सिद्धान्तो, विज्ञानाऽतिरिक्तस्यबाह्यपदार्थस्याभाव इति, सोऽस्या-ऽधिकरणस्य विषयः।

स किं मानमूलो भ्रान्तिमूलो वेति सन्देहे मानमूल इति प्राप्तम्। तथाहि। नीलादिविज्ञानस्य, स्वरूपतः सर्वार्थान् प्र-त्यविशिष्टत्वाद्बाह्यार्थवादिनापि तस्य नीलादिविज्ञानत्वसिद्धये नीलाद्याकारत्वमङ्गीकरणीयम्। तथाच तेनैवाऽऽकारेण सर्वव्य-वहारोपपत्तौ किं बाह्येन नीलादिना वन्ध्यायमानेन। तथाच स्वप्रकाशनीलादिविज्ञानस्य क्षणिकत्वात् साकारत्वाच्च स्थायि-निराकारविज्ञानाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो न सिद्ध्यती-ति प्राप्ते, ब्रूमः। विज्ञानव्यतिरिक्तानामर्थानामभावो न सम्भवति। कुतः? ॥ उपलब्धेः ॥ विज्ञानातिरिक्तानाम् अर्थानां घटः पट इत्याद्यनुभवसिद्धत्वादित्यर्थः। नच विज्ञानाकारेणाऽनुभवस्या-ऽन्यथासिद्धिः। बाह्यार्थं विना तत्सारूप्यात्मकाकारस्य ज्ञाने-ऽपि असिद्धेः। एवञ्च प्रतीयमानो बाह्यार्थ एवेति न ज्ञानस्य साकारत्वं,नापि क्षणिकत्वम्। मानाभावादनुमानस्य पक्षाद्यनेक-ज्ञानसाध्यतया स्थायिनमनुमातारं विनाऽनुदयादितिस्थायि-निराकारब्रह्मणि समन्वयो न विरुद्ध्यत इति ॥ २८ ॥

ननु जाग्रदवस्थायामुत्पन्नाः सर्वे प्रत्यया निरालम्बनाः। प्रत्ययत्वात्। स्वप्नगन्धर्वनगरमायाविनिर्मितमायादिप्रत्ययवदि-त्याशङ्क्य दृष्टान्ते बाधितविषयत्वमुपाधिरित्याह—

वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

स्वप्नादिदृष्टान्तेन निरालम्बनत्वं, जाग्रत्प्रत्ययस्येत्यर्थः। चशब्देन दृष्टान्ते साध्यवैकल्यं सूचितम्। स्वप्नादावपि प्राति-

भासिकविषयाणां सत्त्वादिति ॥ २९ ॥

किञ्च, बाह्यार्थानामभावे घटज्ञानं पटज्ञानमित्यादिवैचित्र्यं ज्ञाने न स्यात् । नच पूर्वपूर्वानादिविचित्रवासनावशाद्वैचित्र्यं स्यादिति वाच्यम् । बाह्यार्थाभावे वासनानामप्यभावादित्याह—

न भावोऽनुपलब्धेः ॥ ३० ॥

वासनानां न भावो न सम्भव इत्यर्थः । कस्मात् ॥ अनुपलब्धेः ॥ त्वत्पक्षे बाह्यार्थानामनुपलब्धेरित्यर्थः । वासनानां बाह्यार्थानुभवव्याप्यत्वाद्व्यापकाऽभावे व्याप्याऽभाव इति बाह्यार्थाऽनुभवस्य वासनानां प्रति कारणत्वात् कारणाभावे कार्याभाव इति वा तात्पर्यम् । किञ्च वासनानां संस्काराभिधानानां त्वत्पक्षे आश्रयाऽसम्भवादनुपपत्तिः ॥ ३० ॥

नन्वहमित्यालयप्रत्यय एवाऽऽश्रय इत्यत आह—

क्षणिकत्वात् ॥ ३१ ॥

आलयविज्ञानस्य क्षणिकत्वाङ्गीकारान्नाश्रयत्वं, संस्काराश्रयत्वे वा न क्षणिकत्वम् । संस्कारसमानकालीनस्य वा संस्कारकाले असतो वाऽऽश्रयत्वायोगादिति भावः ॥ ३१ ॥

सर्वथानुपपत्तेश्च ॥ ३२ ॥

पश्यना, तिष्ठनेत्याद्यपशब्दप्रयोगाद् ग्रन्थतोऽप्यनुपपन्नमिदं वेदबाह्यानां मतमुक्तप्रकारेणार्थतोऽप्यनुपपन्नमिति सर्वथानुपपत्तेर्नादरणीयं श्रेयोऽर्थिभिः सौगतमतमित्यर्थः । दर्शनमिति वक्तव्ये, पश्यनेत्यपशब्दः।स्थानमिति वक्तव्ये, तिष्ठनेत्यपशब्दः, दृशेस्तिष्ठतेश्च धातोः शिति प्रत्यये पश्यतिष्ठावादेशौ भवतः । नपुन्प्रत्यये तस्याशित्त्वादिति बोध्यम् ॥

ननु बाह्यार्थवादस्य केवलविज्ञानमात्रवादस्य चोक्तरीत्या-

मङ्गीकृत्य वेदविरुद्धजीवाद्युत्पत्त्यंशं दूषयति॥ उत्पत्त्यसम्भवादिति ॥ परमात्मनो वासुदेवाज्जीवस्योत्पत्तेरसम्भवाद् न तन्मतं साध्वित्यर्थः। अन्यथा जीवस्योत्पत्त्यङ्गीकारे घटादिवदनित्यत्वापत्त्या भगवत्प्राप्तिरूपमोक्षस्त्वदभ्युपगतःकस्य स्यादित्यर्थः ॥४२॥

न च कर्तुः करणम् ॥ ४३ ॥

लोके कर्तुर्देवदत्तादेः सकाशात् करणस्य कुठारादेरुत्पत्त्यदर्शनाज्जीवात् कर्तुः करणं मनो जन्यत इत्येतन्न युक्तमित्यतश्च तन्मतमसङ्गतमित्यर्थः।अयं भावः। किं जीवो मनः करणान्तरमासाद्य जनयति, अनासाद्य वा। आद्ये तत्करणान्तरं जीवजन्यं न वा। आद्येऽनवस्था। आद्यविकल्पावतारसम्भवात्। द्वितीये तदेव मनोऽस्त्विति न मनसो जीवजन्यत्वम्। आद्यद्वितीये करणरहितस्यैव जीवस्य कार्यजननसामर्थ्याङ्गीकारे किं मनःकल्पनयेति ॥४३॥

ननु संकर्षणादयस्त्रयो न जीवादिरूपाः, किन्तु वासुदेववद्विज्ञानस्वरूपा ईश्वरा एवेत्याशङ्क्याह —

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

सङ्कर्षणादीनां त्रयाणां वासुदेववद्विज्ञानादिभावे वा विज्ञानैश्वर्यबलवन्निर्दोषानिरवद्यस्वरूपत्वेऽपि, तदप्रतिषेधः। तस्योत्पत्त्यसम्भवरूपदोषस्य प्रकारान्तरेणाऽप्रतिषेध इत्यर्थः। तथाहि । न तावच्चतुर्णां वासुदेवादीनामीश्वराणां, किञ्चित् प्रयोजनमस्ति।एकेनैव कार्यसिद्धेर्भगवानेवैको वासुदेवः परमार्थतत्त्वमिति त्वत्सिद्धान्तहानिश्च । नन्वीश्वराणां संकर्षणादीनां त्रयाणां वासुदेवतुल्यानामेव वासुदेवादुत्पत्तिरभ्युपगम्यत इति नोक्तदोष इतिचेत्तह्यगत उत्पत्त्यसम्भवो दोषः । सङ्कर्षणादीनामीश्वरत्वाविशेषे वासुदेवस्य ततोऽऽतिशयाऽभावेन त्रयाणां

वासुदेवेन जन्यत्वानुपपत्तेरिति ॥ ४४ ॥

विप्रतिषेधाच्च ॥ ४५ ॥

क्वचिज्ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि वासुदेवगुणा इति प्रतिपादयन्ति, क्वचिच्चोक्तगुणा एवाऽत्मानो वासुदेवा भगवन्त इत्यभेदं गुणगुणिनोर्वर्णयन्ति । तथाच परस्परं विप्रतिषेधाच्चाऽसमञ्जसमिदं भागवतमतमित्यर्थः । तस्मान्निरवद्ये ब्रह्मणि, वेदान्तानां समन्वय इति सिद्धम् ॥ ४५ ॥

इति श्रीमद्ब्रह्मसूत्रवृत्तौ द्वितीयस्याध्यायस्य
द्वितीयः पादः ॥ २ ॥ २ ॥

तद्दृष्टान्तेनेश्वरस्य प्रेरकत्वे तद्वद्भोगादयः प्रसज्ज्येरन्नित्यर्थः
यद्वा, सशरीरस्यैव प्रेरकत्वदर्शनादीश्वरस्य च शरीरानुप
पत्तेर्न प्रेरकत्वमित्याह ॥ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥
भोगाधिष्ठानं शरीरमधिष्ठानशब्दार्थः ॥ करणवच्चेन्न भोगा-
दिभ्यः ॥ करणवदिन्द्रियाधिष्ठानं शरीरमित्यर्थः । तदीश्व
अङ्गीक्रियते एवेतिचेन्न । शरीरवत्त्वे भोगादिप्रसङ्गादीश्वरत्वं
न स्यादित्यर्थः ॥ ४० ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

किञ्च, प्रधानजीवेश्वराणां या संख्या, यच्च परिमा
तदुभयमीश्वरेण परिच्छिद्यते ? न वा । आद्ये परिच्छिन्नसंख्या
वत्त्वात् परिच्छिन्नपरिमाणवत्त्वाच्च त्रयाणां प्रधानपरीश्वर
घटादिवदन्तवत्त्वं विनाशित्वं स्यात् । द्वितीये ईश्वरस्या
ज्ञत्वं स्यादित्यर्थः । तस्मादसङ्गतेन तार्किकपरिकल्पित-
कारणवादेन न निमित्तोपादानब्रह्मसमन्वयविरोध इति सिद्धम्-
( ८ ) जीवोत्पत्तिवादनिराकरणाधिकरणम् । सू० ४२-४५ ।

उत्पत्त्यसम्भवात् ॥ ४२ ॥

एवं केवलाऽधिष्ठातैवेश्वर इति वेदाऽसङ्गतमते निरस्ते, नि
मित्तं प्रकृतिश्चेश्वर इति भागवतमतस्य वेदसङ्गतार्थत्वात्तदङ्ग
कृतजीवोत्पत्त्यंशेऽपि प्रमाणमूलत्वं स्यादिति प्रत्युदाहरणसङ्गत्या
रम्भः । तद् भागवतमतं प्रमाणमूलं, भ्रान्तिमूलं वेति सन्दे
प्रमाणमूलमिति प्राप्तम् । तथाहि । वासुदेवः खलु परमात्मा
परमार्थतत्त्वं जगदुपादानं निमित्तं च । तस्माद्वासुदेवात् सङ्कर्षण
ऽऽख्यो जीव उत्पद्यते । ततो जीवात् प्रद्युम्नाख्यं मनो जायते
मनसश्चाऽनिरुद्धाख्योऽहङ्कार इति । तथाच जीवाभिन्नाद्ब्रह्म
जगत्सर्गं ब्रुवतः समन्वयस्यासम्भव इति प्राप्ते, वेदाऽविरुद्धांश

मर्श्चोपादानोभयात्मकब्रह्मसमन्वयाऽसम्भव इत्याक्षेपे सिद्धा-
ः:- पत्युरीश्वरस्य जगदुपादानप्रधानादिप्रेरकत्वेन जगन्नि-
त्तत्वमात्रं न सम्भवति । कुतः ॥ असामञ्जस्यात् ॥ ईश्वरस्य
गत्सर्जने प्रवृत्तौ रागद्वेषादिप्रसङ्गाद् असामञ्जस्यं स्याद् ।
वृत्ते रागद्वेषादिपूर्वकत्वेन लोके दृष्टत्वाद् दृष्टाऽनुसारित्वात्
ल्पनायाः। अस्माकं तु श्रुत्यनुसारित्वादनिर्वचनीयवादित्वाच्च
दोष इति भावः ॥ ३७ ॥

सम्बन्धाऽनुपपत्तेश्च ॥ ३८ ॥

ज प्रेर्यप्रधानादिभिः प्रेरकस्येश्वरस्य सम्बन्धो वाच्यः ।
म्बन्धवस्थ प्रेरकत्वाऽयोगात् । न च सम्बन्धः सम्भवति ।
ऽविवयक्ति न युतासिद्धत्वाच्च संयोगसमवाययोरनुपपत्तेरित्यर्थः।
जीवान्ते कार्यविद्यादिप्रेरकत्वं कल्पिततादात्म्येनोपपद्यत इति
नु ३८ ॥

वद्विज्ञानस, कुम्भकारस्य मृदादिप्रेरत्वदृष्टान्तेनेश्वरस्य प्रधाना-
दि कल्पनीयम् । न हि तत् सम्भवति। प्रधानस्य रूपा-
दृष्टमृदादिवैलक्षण्यात् प्रधानादिविषयकप्रेरणाया
श्वरस्याऽनुपपत्तेरित्याह—

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

अधिष्ठानं प्रेरणा । सिद्धान्ते तु न दृष्टापेक्षा, श्रुत्येकशरण-
वादिति भावः ॥ ३९ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

ननु करणानीन्द्रियाणि अप्रत्यक्षाण्यपि, यथा जीवेन प्रेर्यन्ते,
नवं प्रधानादिकमप्रत्यक्षमपीश्वरेण प्रेर्यन्ते इतिचेन्न । कुतः ॥
भोगादिभ्यो, दोषेभ्यः । जीवो हीन्द्रियग्रामं भोगार्थं प्रेरयति ।

नैरात्म्यवादप्रसङ्ग इत्यर्थः ॥ ३५ ॥

किञ्च,

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

मुक्तात्मनो यत् परिमाणं तदन्त्यं, तच्च नित्यमप्यणुत्वाद्यन्यतमपरिमाणत्वेन व्यवस्थितं चेति जैनसिद्धान्तः । तथाच, अन्त्यस्य परिमाणस्य नित्यत्वेनाऽवस्थितेस्तद्दृष्टान्तेनाऽऽत्मपरिमाणत्वेन हेतुनोभयोराद्यमध्यमपरिमाणयोर्नित्यत्वप्रसङ्गात् । त्रयाणामाद्यमध्यमान्त्यपरिमाणानामविशेषः साम्यं स्यादित्यर्थः । नित्यपरिमाणानां त्रयाणामेकत्राऽसंभवान्नित्यत्वमापाद्य, तेन साम्यमापादितमिति द्रष्टव्यम् । परिमाणसाम्ये स्थूलसूक्ष्मशरीरप्राप्तौ परिमाणवैषम्यं नस्यादिति भावः।यद्वा सर्वदैकमेव परिमाणं स्यादित्यापाद्यम् । तथाहि। अन्त्यपरिमाणस्य जन्यत्वे नित्यत्वविरोधादाद्यमध्यमकालाऽवस्थानं वक्तव्यमिति, यदन्त्यपरिमाणमणु महद् वा तदेवैकं सर्वदा स्यान्नान्यत् । तथाचान्त्यपरिमाणस्यावस्थितेरणुत्वाद्यन्यतमत्वेन नियतत्वादाद्यमध्यकालयोरुभयोस्तस्य परिमाणस्य नित्यत्वादेकत्वादविशेषः । जीवोऽणुश्चेदणुरेव, महाँश्चेन्महानेव स्यादित्यर्थः । तथाच न शरीरपरिमाणनियम इति भावः । तस्मादयुक्तविवसनमतेन न समन्वयस्य विरोध इति सिद्धम् ॥ ३६ ॥

इदानीं केवलं निमित्तकारणमेवेश्वरो, नोपादानमिति येषां सेश्वरसांख्यपातञ्जलिशैवकणभुगादीनां मतं, तदीयं दूषयति—

( ७ केवलनिमित्तकारणवादनिराकरणाधिकरणम् । सू० ५ )

पत्युरसामञ्जस्यात् ॥ ३७ ॥

पूर्वं सत्त्वासत्त्वयोरेकत्र विरोधादसम्भव इत्युक्तम् । तर्हि तद्वदुपादानकर्तृत्वयोरेकत्र विरोधादसम्भव इति दृष्टान्तसङ्गत्या

एवञ्चात्माऽकार्त्स्न्यम् ॥ ३४ ॥

यथैकत्र विरुद्धधर्माऽसम्भवो दोषस्तेषामार्हतानां मते एवमात्मनोऽकार्त्स्न्यं परिच्छिन्नत्वं, दोषान्तरं स्यात् । जीवस्य देहपरिमाणत्वाङ्गीकारादित्यर्थः । तथाच परिच्छिन्नत्वादात्मनो घटादिवदनित्यत्वं स्यादिति भावः । किञ्चात्मनो देहपरिमाणत्वे मनुष्यात्मनः कर्मवशाद् गजशरीरे कृत्स्ने प्रवेशो न स्यात् । पुत्तिकाशरीरे वा कृत्स्नस्याऽऽत्मनः प्रवेशो न स्यात् ॥ ३४॥

ननु जीवस्य सावयवत्वाङ्गीकारात् पर्यायेण गजादिशरीरप्राप्तौ केचिदवयवा आगच्छन्ति, सूक्ष्मपुत्तिकाशरीरप्राप्तौ च केचिदपगच्छन्तीति न मनुष्यात्मनः स्थूलसूक्ष्मशरीरप्राप्तिविरोध इत्याशङ्क्य निराकरोति—

न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

पर्यायादपि अवयवगमनागमनाभ्यामपि तत्तत्स्थूलसूक्ष्मशरीरपरिमाणत्वस्यात्मन्यविरोध इति न चेत्यर्थः । कुतः ॥ विकारादिभ्यः ॥ आत्मनः सावयवत्वेन तत्तच्छरीरप्राप्त्या वृद्धिह्रासवत्त्वाङ्गीकारे विकारवत्त्वप्रसक्तौ प्रदीपादिवदनित्यत्वं स्याद् अनित्यत्वे च बन्धमोक्षाभ्युपगमो विरुध्येत । जलतुम्बिकान्यायेन संसारसागरे मग्नस्य बन्धविच्छेदात् संततोर्ध्वगमनं मुक्तिर्भवतीति त्वयाभ्युपगमादिति । यद्वा पूर्वसूत्रे परिच्छिन्नत्वादात्मनोऽनित्यत्वं स्यादिति उक्तमयुक्तम् । अनित्यत्वेऽपि बौद्धवत् सन्ताननित्यत्वोपपत्तेरित्याशङ्क्याह ॥ न चेत्यादि सूत्रम् ॥ पर्यायादपि सन्तानरूपेण नित्यत्वस्यात्मन्यविरोध इति न चेत्यर्थः । कुतः ॥ विकारादिभ्यः ॥ सन्तानस्य सन्तानिव्यतिरिक्तस्य सत्त्वे तस्य च सन्तानिजन्यत्वाद्विकारवत्त्वं स्यादेव । असत्त्वे

त्वादिविरुद्धधर्मद्वयमादाय सर्वेषु योजयन्तो विवसनाः पदार्थमात्रस्याऽनेकरूपत्वम् आचक्षते उपादानादिव्यवहारसिद्धये । अन्यथा वस्तुन एकरूपत्वेन सर्वात्मनाऽस्तित्वं, नास्तित्वं वा । वक्तव्यमिति प्राप्यात्मनापि सत्त्वाद् वस्तुप्राप्त्यर्थमुपादानादिव्यवहारो नस्यात् । अतः केनाचिद् घटादिरूपेणाऽस्ति, केनाचित् प्राप्यादिरूपेण नास्तीत्यनेकत्वमेव वस्तुनः । सप्तभङ्गनयो नाम सप्तस्वास्तित्वादिषु वस्तुन्येकत्र विरोधभङ्गः । स एवात्र नयो युक्तिः, स इत्यर्थः । स्यादस्तीत्यादेरयमर्थः । स्यात्पदं कथञ्चिदित्यर्थकम् । वस्तुनोऽस्तित्वविवक्षायामाद्यो भङ्गः । असत्त्वविवक्षायां द्वितीयो भङ्गः । क्रमेणोभयवाञ्छायां तृतीयो भङ्गः । युगपदुभयवाञ्छायामास्तित्वनास्तित्वयोर्युगपद्वाचा वक्तुमशक्यत्वादवक्तव्यत्वं वस्तुन इति चतुर्थो भङ्गः ।

आद्यचतुर्थयोर्भङ्गयोः क्रमेण वाञ्छायां पञ्चमो भङ्गः । द्वितीयचतुर्थयोर्विवक्षायां षष्ठो भङ्गः । आद्यद्वितीयचतुर्थानां वाञ्छायां सप्तमो भङ्ग इति । एवमेकत्वाऽनेकत्वनित्यत्वाऽनित्यत्वादिविरुद्धधर्मद्वयमादायोक्तनयो योजनीय इति । तस्माद्वस्तुमात्रस्य सत्त्वमसत्त्वं चेत्येवमादिविरुद्धाऽनेकधर्मवत्त्वमेवेत्येकरूपब्रह्मसमन्वयो न सिद्ध्यतीतिप्राप्ते ब्रूमः—

नैकस्मिन्नसम्भवादिति॥एकस्मिन् परमार्थरूपे वस्तुनि विरुद्धधर्माणामसम्भवाद्वस्तुनोऽनेकरूपत्वं नास्तीत्यर्थः। यदास्ति तदस्त्येव, न नास्ति । यन्नित्यं तन्नित्यमेव, नाऽनित्यम् । यथा प्रत्यगात्मा वस्तुभूत एवं प्रपञ्चस्यापि त्वन्मते वस्तुभूतत्वान्नानेकरूपत्वसम्भवोऽस्मन्मते तु प्रपञ्चो, न सन्नाप्यऽसत् किन्त्वानिर्वचनीय एव । तेन सर्वव्यवहारसम्भव इति भावः ॥ ३३ ॥

एतेषामार्हतानां देहपरिमाण एवात्मेति मतं दूषयति—

असम्भवाच्छून्यं निःस्वरूपमेव प्रपञ्चतत्त्वं किं न स्यादिति शङ्कायां पुनर्नाभाव उपलब्धेरित्यादीनि सूत्राणि शून्यमतनिरासपरत्वेन योज्यन्ते । प्रपञ्चशून्यत्वस्य सर्वप्रमाणबाधितत्वेन तन्निरासाय पृथक्प्रयत्नानपेक्षणात् । तथाहि । ज्ञानार्थयोर्नाऽभावः । प्रमाणैरुपलब्धेरित्यर्थः ॥ वैधर्म्याच्चेति सूत्रं पूर्ववद् व्याख्येयम् । प्रपञ्चस्य बाध्यत्वे बाधाधिष्ठानं सत्यं किञ्चिद् वक्तव्यम् । निराधिष्ठानबाधायोगात् । तस्य चाऽधिष्ठानस्य त्वन्मते, न भावः, न सत्त्वम् । प्रमाणतस्तदनुपलब्धेरिति, न भावोऽनुपलब्धेरिति सूत्रार्थः ॥

क्षणिकत्वाच्चेतिसूत्रे विभक्तेः पूर्वमुपदेशेत्यध्याहारः । तथाच क्वचित् पदार्थानङ्गीकृत्य तेषां क्षणिकत्वोपदेशाच्छून्योपदेशाच्च व्याहतार्थबोधकः सुगत इत्यर्थः ॥ अन्त्यसूत्रं कृतव्याख्यानम् । तस्माद् भ्रान्त्येकशरणबौद्धमतेन न समन्वयस्य विरोध इति सिद्धम् ॥

देहस्य सर्वसाधारणत्वेन जडत्वविभक्तत्वरूपेण प्रत्यक्षत्वनश्वरत्वात्तस्यात्मता नसम्भवतीत्युपेक्षितं सूत्रकारैरिति तेनापि समन्वयस्य न विरोधः ॥ ३२ ॥

( ६ ) आर्हतानां सप्तभङ्गीनयनिराकरणाधिकरणम् ( सू० ४ )

नैकस्मिन्नसम्भवात् ॥ ३३ ॥

एवं मुक्तकच्छानां बौद्धानां मते निरस्ते विवसनानां जैनानां मतं बुद्धिस्थं बुद्धिसन्निधिलक्षणसङ्गत्या निराक्रियते । तत्र संशयः । किं दिगम्बरमतं मानमूलं भ्रान्तिमूलं वेति । मानमूलमिति प्राप्तम् । तथाहि । स्यादस्ति, स्यान्नास्ति, स्यादस्ति नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति नास्ति चावक्तव्यश्चेत्येवंरूपसप्तभङ्गनयमास्तित्वनास्ति-

## द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

( १ आकाशस्य ब्रह्मजन्यताधिकरणम् । सू० ७ )

### न वियदश्रुतेः ॥ १ ॥

पूर्वस्मिन् पादे श्रुतिविरुद्धत्वात् परपक्षाणामप्रामाण्यमुक्तं तर्हि श्रुतीनामप्यन्योऽन्यं विरोधाद्ब्रह्मकारणवादस्याप्यनपेक्षत्वं स्यादिति शङ्कानिरासार्थं परं पादद्वयमारभ्यते । पादद्वयस्यापि श्रुतीनाम् अन्योन्यविरोधनिरासेन समन्वयदृढीकरणाच्छ्रुत्य-ऽध्यायसङ्गतिः । पूर्वपादेनाऽस्य प्रासङ्गिकी सङ्गतिः शङ्का-व्याजेन दर्शिता।तत्र तावदादौ सृष्टिवाक्यानामविरोधं प्रतिपाद-यितुमाकाशमाश्रित्य विचार्यते। आकाशस्य किमुत्पत्तिरस्ति ? उत नास्तीति ॥ यद्यस्ति तर्हि विरोधः । तथाहि । छान्दोग्ये आकाश-वायू विना, तत्तेजोऽसृजतेति तेजआदिका सृष्टिः श्रूयते । तै-त्तिरीयके तु, आत्मन आकाशः सम्भूत इत्याकाशादिका । तथाचाऽनयोर्वाक्ययोर्विरोध इति पूर्वपक्षः । आध्यायात् पूर्व-पक्षे श्रुतीनां मिथोविरोधादप्रामाण्यं फलम् । सिद्धान्ते विरोधा-ऽभावात् प्रामाण्यमिति बोध्यम् । एवं प्राप्ते एकदेशिमतेन समाधत्ते ॥ न वियदश्रुतेः ॥ वियन्नोत्पद्यते । कुतः ॥ अश्रुतेः ॥ वियत उत्पत्तिप्रतिपादकवाक्यस्याश्रवणादित्यर्थः ॥ १ ॥

यद्यप्यात्मन आकाशः सम्भूत इति श्रुतिरस्ति, तथापि सा गौणीति गूढाभिसन्धिः । तथाचाकाशस्योत्पत्तेरनभ्युपगमादेव न विरोध इति गूढाभिसन्धिमजानानः शङ्कते—

### अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे । छान्दोग्ये आकाशोत्पत्तिश्रुत्य-भावेऽपि सा श्रुतिस्तैत्तिरीयकेऽस्तीत्यर्थः । तथाच विरोधस्तद-वस्थ इति शङ्कितुरभिप्रायः ॥ २ ॥

एकदेशी स्वाभिप्रायं प्रकटयति—

गौण्यसंभवात् ॥ ३ ॥

न ह्याकाशस्योत्पत्तिश्रुतिर्मुख्या, किन्तु गौणी।कुतः॥ असंभवात् ॥ आकाशोत्पत्तौ, समवायिकारणादिसामग्र्यभावाद्विभुत्वेन नित्यत्वाऽनुमानाच्चाऽऽकाशस्योत्पत्तेरसंभवादित्यर्थः ॥३॥

शब्दाच्च ॥ ४ ॥

वायुश्चान्तरिक्षं चैतदमृतमित्याकाशे अमृतशब्ददर्शनाद्नाकाशस्योत्पत्तिरित्यर्थः ॥ ४ ॥

नन्वात्मन आकाशः संभूत इत्यादिवाक्ये संभूतशब्दस्याकाशे गौणत्वं, तेजआदौ तु मुख्यत्वमित्येतद्विरुद्धम् । एकस्मिन् वाक्ये एकस्य शब्दस्य गौणमुख्यत्वादर्शनादित्यत आह—

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

यथा एकस्मिन्नेव प्रकरणे, अन्नं ब्रह्मेति व्यजानादित्यादावन्नादिषु ब्रह्मशब्दो गौणः, आनन्दो ब्रह्मेत्यत्र मुख्यः । विषयभेदात् । एवं प्रकृतेऽपि विषयभेदादेकस्य संभूतशब्दस्य गौणत्वं मुख्यत्वं च स्यादित्यर्थः ॥ ५ ॥

इदमेक..ेमतं दूषयन् सिद्धान्तयति—

प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

विज्ञेयाद्ब्रह्मणः कृत्स्नस्य वस्तुजातस्याव्यतिरेकादात्मैकविज्ञानात् सर्वविज्ञानप्रतिज्ञाया अहानिर्भवति । ब्रह्माभिन्नसत्ताकस्य नित्यस्याऽऽकाशस्याऽभ्युपगमे तु सा प्रतिज्ञा बाध्येत । तस्मादाकाशस्योत्पत्तिमङ्गीकृत्य ब्रह्माधीनसत्ताकत्वाद्ब्रह्मणि ज्ञाते सर्वमाकाशादिकं ज्ञातं भवतीति सा प्रतिज्ञा समर्थनीयेत्यस्त्याऽऽकास्योत्पत्तिरित्यर्थः । किञ्च प्रतिज्ञायाः समर्थनं कार्यकारणा-

ऽभेदपरेभ्यः शब्देभ्यो भवति । तथाहि । कार्यकारणाभेदप्रति-
पादनपरैर्मृदादिदृष्टान्तैः प्रतिज्ञां संसाध्य तत्साधनायैव, सदेव
सोम्येदमग्र आसीदेकमेवाऽद्वितीयं, तदैक्षत तत्तेजोऽसृजत, ऐत-
दात्म्यमिदं सर्वमित्यादिशब्दाः कार्यजातं प्रदर्श्य तस्य ब्रह्मा-
ऽव्यतिरेकं दर्शयन्ति । इदं सर्वमाकाशस्याऽकार्यत्वे बाधितं
स्यादिति । नन्वेवमुत्पत्तिमत्त्वे सिद्धे पूर्वोक्तविरोधपरिहारः कथ-
मितिचेदुच्यते । छान्दोग्ये हि तेजस उत्पत्तिमात्रं श्रूयते, नाद्य-
त्वमपि । तैत्तिरीयके तु आकाशाद्वायुर्वायोरग्निरिति तेजस-
स्तृतीयत्वं श्रूयते । तथाच तयोर्वाक्ययोरेकवाक्यत्वादनवकाश-
तैत्तिरीयकश्रुत्यनुसारेणाकाशं वायुं च सृष्ट्वा तत् तेजोऽसृजते-
ति छान्दोग्यश्रुतिः परिणम्यत इति नानयोर्वाक्ययोर्विरोध
इति ॥ ६ ॥

यदुक्तं तैत्तिरीयके वियदुत्पत्तिश्रुतिर्गौणी । सामग्र्यभावा-
द्विभुत्वेन नित्यत्वानुमानाच्चेति । तन्न । श्रौतस्य ब्रह्मण एव
वियत्सामग्रीत्वादित्याभिप्रेत्य तदीयानुमानमनुमानेनैव दूषयति –

यावद्विकारन्तु विभागो लोकवत् ॥ ७ ॥

तुशब्द आकाशोत्पत्त्यसम्भवाशङ्काव्यावृत्त्यर्थः । यतो याव-
द्विकारजातं विभागो दृश्यते, न त्वविकारे ब्रह्मणि । विभागा-
ऽदर्शनात् । लोके घटादेर्विकारस्यैव, विभक्तत्वदर्शनादित्यर्थः ।
तथाचाऽयं प्रयोगः । आकाशदिक्कालमनःपरमाणवः, पराधीन-
सत्ताकाः । स्वसमानसत्ताकविभागवत्त्वात् । घटशरावादिव-
दित्याकाशोत्पत्तिवादिनं प्रति विभुत्वहेतोः परोक्तस्याऽसिद्धि-
रपि बोध्या । आकाशेऽमृतशब्दप्रयोगस्त्वापेक्षिकः । अमृता देवा
इतिवदिति, सिद्धं ब्रह्मकार्यं वियदिति ॥ ७ ॥

ननु छान्दोग्ये वायोरुत्पत्तिर्न श्रूयते, तैत्तिरीये तु श्रूयते ।

तथाच पूर्ववदनयोर्वाक्ययोर्विरोधपरिहारार्थं वायूत्पत्तिर्गौणीति वाच्यम् । किञ्च, सैषाऽनस्तमिता देवता यद्वायुरिति वायोर्लयप्रतिषेधाच्च नित्यत्वमित्याशङ्कामतिदेशेन निराकरोति—

( २ वायोर्ब्रह्मजन्यत्वाधिकरणम् । सू० १ )

**एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥**

एतेन वियत उत्पत्तिमत्त्वव्याख्यानेन वायुरपि वियदवच्छिन्नब्रह्मजन्यत्वेन व्याख्यात इत्यर्थः । वायोर्नित्यत्वे एकविज्ञानप्रतिज्ञाहान्यादेः समानत्वादिति भावः । वायोर्लयप्रतिषेधश्चाऽऽपेक्षिकः अतिदेशत्वान्न पृथक्सङ्गत्यपेक्षेति मन्तव्यम् ॥८॥

( ३ सद्ब्रह्मणोऽजन्यत्वाधिकरणम् । सू० १ )

**असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥**

पूर्वमसम्भावितोत्पत्तिकयोरपि वियत्पवनयोरुत्पत्तिरस्ति श्रुतिबलादित्युक्तम् । तद्वदेव ब्रह्मापि ब्रह्मान्तरकार्यमस्तु, कार्यकारित्वाद् वियदादिवदित्यनुमानानुगृहीतया, त्वं जातो भवसि विश्वतोमुख इत्यादिब्रह्मजन्मश्रुत्या ब्रह्मणोऽप्युत्पत्तिरस्त्विति दृष्टान्तसङ्गत्या इदमारभ्यते । तत्र ब्रह्मणो नित्यत्वप्रतिपादकश्रुतीनामुक्तानुमानानुगृहीतश्रुत्या विरोधोऽस्ति न वेति सन्देहे । अग्नेर्विस्फुलिङ्गोत्पत्तिवद् ब्रह्मान्तराद् ब्रह्मोत्पत्तिरुक्तश्रुतिबलादस्त्येवेति विरोध इतिप्राप्ते, ब्रूमः ॥ सतः सदाऽऽत्मकस्य ब्रह्मण उत्पत्त्यऽसम्भवः । कुतः । अनुपपत्तेः । सत्सामान्यात् सत्सामान्यस्योत्पत्तेरनुपपत्तिः । विशेषस्यैव घटादेः सामान्यजन्यत्वदर्शनात् । ब्रह्मणश्च विशेषत्वेन जन्यत्वे, यत् तज्जनकं सामान्यं तदेव नो ब्रह्म । ब्रह्मणः कार्यत्वेऽध्यस्तत्वेन जगदधिष्ठानत्वानुपपत्तेश्चेत्यर्थः । जन्मश्रुतिश्चौपाधिकविषया । न चाऽस्य कश्चिज्जनितेत्यादिबहुश्रुतिविरोधादित्यविरोधः ॥ ९ ॥

( ४ तेजसो ब्रह्मजन्यत्वाधिकरणम् । सू० १ )

## तेजोऽतस्तथा ह्याह ॥ १० ॥

तत्तेजोऽसृजतेति छान्दोग्ये ब्रह्मजन्यत्वं तेजसः श्रूयते। तैत्तिरीयके तु, वायोरग्निरिति वायुजन्यत्वमित्यनयोर्वाक्ययोर्विरोधोऽस्ति न वेति सन्देहे, सामान्यात् सामान्यस्योत्पत्तिर्माभूत् सामान्याद्वायोर्विशेषस्य तेजस उत्पत्तिःसम्भवति । एवं श्रुतिबलात् सर्वोपादानब्रह्मजत्वमपीत्यस्ति विरोध इति प्रत्युदाहरणसङ्गत्या पूर्वपक्षे पूर्वं ब्रह्मणः कार्यत्वे जगदुपादानत्वं न सम्भवतीत्युक्तम् । तद्वद्वायोरपि कार्यत्वात्तेजःप्रत्युपादनत्वं नास्त्येवेति ब्रह्ममात्रजत्वं तेजस इत्यविरोधः । वायोरग्निरिति पञ्चमी क्रमार्था, न तु हेत्वर्था इत्येकदेशिना सिद्धान्तः कृतः । तं दूषयति ।। तेजोऽतस्तथा ह्याहेति ॥ अतो मातरिश्वनः सकाशात्तेजो जायत एव हि यतस्तथा वायुजत्वं, वायोरग्निरितिश्रुतिराह । न चेयं पञ्चमी क्रमार्था । वाय्वनन्तरं तेजइतिपदान्तरकल्पनाप्रसङ्गात् । किञ्च, आकाशः सम्भूत इत्यादौ, पृथिव्या ओषधय इत्यन्ते च हेतुपञ्चम्या दर्शनान्मध्येऽकस्मात् क्रमार्था पञ्चमीत्यसङ्गतमेव। नचैवं क्वचिद् ब्रह्मजन्यत्वं क्वचिद्वायुजन्यत्वमिति विरोधः। वायोर्ब्रह्मानन्यत्वेनवायुभावापन्नब्रह्मजन्यत्वस्य छान्दोग्यवाक्यार्थस्यैव, वायोरग्निरिति वाक्यस्याप्यर्थत्वेनाऽविरोधादिति ॥ १० ॥

( ५ अपां ब्रह्मजन्यत्वाधिकरणम् । सू० १ )

## आपः ११ ॥

अतस्तथा ह्याहेत्यनुवर्तते। तेजोऽनन्तरभावित्वादप्पृथिव्योरिति तेजसो वायुजन्यत्वकथनानन्तरं तयोरप्पृथिव्योः क्रमेण बुद्धिस्थत्वाद् बुद्धिसन्निधिलक्षणसङ्गत्या क्रमेणाऽधिकरणद्वय-

मारभ्यते । तदपोऽसृजतेत्यादिवाक्यस्याऽपां ब्रह्मजन्यत्वप्रतिपादकस्याऽग्नेराप इति वाक्येन, विरोधोऽस्ति न वेति सन्देहे पूर्ववद्विरोधोऽस्तीति पूर्वपक्षे अपामग्निदाह्यत्वात्तज्जन्यत्वं नास्त्येवेति अविरोध इत्येकदेशिसिद्धान्तं दूषयति ॥ आप इति ॥ आपोऽतस्तेजसो जायन्ते । हि यस्मात्तथा तेजो जन्यत्वमग्नेराप इति श्रुतिराहेत्यर्थः । त्रिवृत्कृतयोरप्तेजसोर्दाह्यदाहकभावेऽप्यत्रिवृत्कृतयोर्न विरोधः । छान्दोग्ये तेजोऽवच्छिन्नं ब्रह्म तच्छब्दार्थ इति पूर्ववद्विरोधपरिहारो बोद्धव्यः ॥ ११ ॥

अव्नन्तरभाविपृथिवीमाश्रित्य विचारयति—

( ६ पृथिवीमात्रस्यान्नशब्दवाच्यताधिकरणम् । सू० १ )

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

ता आप ऐक्षन्त बह्वयः स्याम प्रजायेमहीति, ता अन्नमसृजन्तेति श्रूयते । तत्र संशयः । किमन्नशब्देनौदनादिकमुच्यते, किं वा पृथिवीति । तत्राऽन्नशब्दस्यौदनादौ प्रसिद्धत्वादोदनादिकमेवाऽन्नशब्देनोच्यते । तथाच व्रीहियवादेस्तज्जन्यौदनस्य च योगेन रूढ्यावाऽन्नशब्दवाच्यस्य क्वचिदब्जन्यत्वं, क्वचित्तु पृथिव्या ओषधय ओषधीभ्योऽन्नमित्यत्र पृथिव्यादिजन्यत्वमित्यनयोः श्रुत्योर्विरोध इति प्राप्ते ब्रूमः । पृथिव्येवात्रान्नशब्देन उच्यते, न व्रीह्यादिकम् । कुतः ॥ अधिकाररूपशब्दान्तरेभ्यः ॥ तत्तेजोऽसृजतेति महाभूतोत्पत्त्यधिकारात् यत् कृष्णं तदन्नस्येति कृष्णरूपस्यान्नशब्दवाच्यस्य पृथिवीत्वज्ञापकस्य श्रवणात् । समानप्रकरणे, अद्भ्यः पृथिवीति च, तद्यदपां शर आसीत् तत् समहन्यत सा पृथिव्यभवदिति च, पृथिव्या एवाब्जन्यत्वप्रतिपादकशब्दान्तरसत्त्वाच्चेत्यर्थः । तत्तत्र सृष्टिकाले यदपां शरो

घनीभाव आसीत् तत्समहन्यत स घनीभावः संघातात्मना परिणत आसीत् । सैवाऽपां कठिनाकारपरिणामरूपा पृथिव्यभवदिति श्रुत्यर्थः । तथाच व्रीह्याद्यन्नस्य नाम्बूपादानकत्वं, किन्तु पृथिव्युपादानकत्वमेवेत्यविरोध इति सिद्धम् ॥ १२ ॥

( ७ सोपाधिकब्रह्मण एव कार्यकारणत्वाधिकरणम् । सू० १ )

तदभिध्यानादेव तल्लिङ्गात् सः ॥ १३ ॥

एवं तावत् सृष्टिक्रमे महाभूतश्रुतीनामविरोधः प्रतिपादितः । इदानीं तानि भूतानि आश्रित्याश्रयाश्रयिभावसंगत्याऽन्यद्विचार्यते । किं महाभूताऽभिमानिन्यो देवताः, स्वतन्त्रा एव भौतिकोत्पादने प्रवर्त्तन्ते, उतेश्वराऽधिष्ठिता इति विशये, आकाशाद्वायुरित्यादिना स्वस्वकार्योत्पत्तौ स्वातन्त्र्यश्रवणात् स्वतन्त्रा एवेति ब्रह्मणः सर्वसृष्टिकर्तृत्वप्रतिपादकश्रुत्या भूतसृष्टिश्रुतीनां विरोध इति प्राप्ते, ब्रूमः । स परमात्मा तत्तत्कार्यगोचरेक्षणात्मकाऽभिध्यानादेवेक्षिता तत्कारणाऽधिष्ठाता सर्वकार्यं सृजति । कस्मात् ॥ तल्लिङ्गात् ॥ तस्य परमात्मनः सर्वनियन्तृत्वरूपलिङ्गस्य, यः पृथिव्यां तिष्ठन्नित्यादिना श्रुतत्वादित्यर्थः । पृथिव्यां तदभिमानिदेवतायाम् । अयं भावः । आकाशादिपदानां भूतमात्रे रूढत्वाद्देवतापरत्वे, लक्षणापत्तेर्न भूताभिमानिदेवतानां स्वातन्त्र्यमाकाशाद्वायुरित्यादौ श्रुतम् । न च, ता आप ऐक्षन्तेत्येतदबादिपदानां देवतापरत्वे लिङ्गम् । तदीयेक्षणस्य तदवच्छिन्नब्रह्मनिष्ठत्वादिति, न देवतानां स्वातन्त्र्ये किञ्चिन्मानमिति ॥ १३ ॥

( ८ लयक्रमनिरूपणाधिकरणम् । सू० १ )

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

एवम्भूतानामुत्पत्तिक्रमे चिन्तिते, लयक्रमो बुद्धिस्थः प्रसङ्ग-

देशः। तत्र चाऽयं पुरुषवचस्त्वप्रकारः स्फुटीकृतः। एवं प्रश्न-निरूपणाभ्यामबादिभूतसम्परिष्वक्तो रंहतीति गम्यते॥ १॥

ननूक्तप्रश्ननिरूपणाभ्यामद्भिः सम्परिष्वक्तो गच्छतीति गम्यते। तथाच कथमबितरभूतपरिष्वङ्गसिद्धिस्तत्राह—

त्र्यात्मकत्वात्तु भूयस्त्वात्॥

तुरुक्तचोद्यनिरासार्थः। अपां त्रिवृत्करणश्रुत्या त्र्यात्मकत्वाद्देहस्य यजमानद्वारा निर्गताब्जन्यत्वे सिद्धे इतरभूतद्वयजन्यत्वं तत्परिष्वङ्गश्च सिद्ध्यति। यद्वा वातपित्तश्लेष्मभिस्त्रिभिः शरीरस्य त्र्यात्मकत्वाज्जलमात्रजन्यत्वं न सम्भवति। वातपित्तयोर्वायुतेजःकार्यत्वात्। तथाचाबितरभूतचतुष्टयजन्यत्वमऽपि गन्धस्वेदपाकप्राणाऽवकाशानां पञ्चभूतकार्याणां दर्शनात्। तर्हि श्रुतावब्ग्रहणं कथं, तत्राह॥ भूयस्त्वादिति॥ यद्यपि देहे पृथिवीभूयस्त्वमेव, तथापि तेजआद्यपेक्षयाऽपां भूयस्त्वं बोध्यम्॥२

प्राणगतेश्च॥ ३॥

प्राणानां मुख्यप्राणचक्षुरादीनां जीवद्दशायां देहात्मना स्थितभूताश्रितानां गमनदर्शनात्, तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्वे प्राणा अनूत्क्रामन्तीति श्रुत्या मरणकाले प्राणानां गतिश्रवणाद्भूताश्रिता एव प्राणा गच्छन्तीति वक्तव्यम्। तथाच भूतसम्परिष्वक्तस्य रंहणमित्यर्थः॥ ३॥

अग्न्यादिगतिश्रुतेरितिचेन्न, भाक्तत्वात्॥ ४॥

ननु यत्राऽस्य पुरुषस्य मृतस्याऽग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमित्यादिना वागादीनां प्राणानामग्न्यादिषु देवेषु गतेर्लयस्य श्रवणान्न तेषां लोकान्तरं प्रति गतिर्यया भूतसम्परिष्वङ्गसिद्धिः स्यादितिचेन्न। प्राणमनूत्क्रामन्तꣳ सर्वे प्राणा अनू-

त्क्रामन्तीति श्रुतिविरोधेन, यत्राऽस्येत्यादिश्रुतेरोषधीर्लोमानि वनस्पतीन् केशा इति सह पाठेन भाक्तत्वावगमात् । न हि मृतस्य लोमानि केशाश्च प्रत्यक्षेण दृश्यमाना ओषधिवनस्पतिषु लयं गच्छन्तो दृश्यन्ते । अतस्तत्सहपाठादग्न्यादिषु वागादिलय औपचारिक इत्यर्थः ॥ ४ ॥

प्रथमेऽश्रवणादितिचेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

ननु द्युलोकादिषु पञ्चाग्निष्वपामाहुतित्वे सिद्धे पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारो निश्चेतुं शक्यते । तदेव नास्ति । प्रथमे द्युलोकाख्याग्नावपाम् आहुतित्वस्याऽश्रवणात् । किन्तु तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति प्रथमेऽग्नौ श्रद्धैवाहुतित्वेन श्रूयते इतिचेद्, न हि । यतस्ता एवाऽऽपः श्रद्धाशब्देनोच्यन्ते । कुतः ॥ उपपत्तेः ॥ अपां हि होमद्रव्यत्वेनाऽऽहुतित्वं सम्भवति । मनोवृत्तिविशेषरूपश्रद्धा तु मनसः सकाशात् पृथक्कृत्य, होमायोपादातुं न शक्यते । तदाहुतिजन्यसोमाख्यशरीरादेरब्बाहुल्याऽनुपपत्तिश्च । तस्माच्छ्रद्धापूर्वकमास्मिन् लोकेऽब्बहुलदधिपयःप्रभृतिद्रव्यस्य हुतस्य द्युलोकाऽग्नौ आहुतित्वेन पर्यवसानादप्सु श्रद्धाशब्दो लाक्षणिक इत्यर्थः । आपो हाऽस्मै श्रद्धां संनमन्ते पुण्याय कर्मण इति श्रुतावपां श्रद्धाजनकत्वश्रवणात् । तेन सम्बन्धेन वाऽप्सु श्रद्धाशब्दस्य लक्षणा । अस्मै पुंसे आपो दर्शनमात्रेण स्नानादिपुण्यकर्मसिद्ध्यर्थं श्रद्धां संनमन्ते जनयन्तीति श्रुत्यर्थः ॥ ५ ॥

अश्रुतत्वादितिचेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

ननु भवतु सोमवृष्ट्यादिक्रमेण पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारस्तथाप्यब्वादिभूतपरिष्वक्तो जीवो रंहतीत्ययुक्तमेव ।

अबादिवज्जीवस्य रंहणकर्तृत्वस्याऽश्रुतत्वादितिचेन्न ॥ इष्टादिकारिणां प्रतीतेः॥ अथ ये इमं ग्रामे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्तीत्यादिना गार्हस्थ्ये स्थित्वा इष्टादिकर्मकारिणां धूमादिमार्गेण चन्द्रलोकप्राप्तिमुक्त्वा तान् इष्टादिकारिणश्चन्द्रलोकस्थान् सोमराजशब्देन निर्दिशति । एष सोमो राजेति । इहापि पञ्चाग्निविद्यायां तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवतीति सोमराजशब्दश्रवणात्त एवेष्टादिकारिणः प्रतीयन्ते । अतो भूतसंपरिष्वक्तजीवानां रंहणमित्यर्थः ॥ ६ ॥

नन्विष्टादिकारिणां भूतपरिष्वक्तानां चन्द्रलोकं प्रति रंहणं कर्मफलभोगायेत्येतदसङ्गतम् । ते चन्द्रं प्राप्याऽन्नं भवन्ति ताꣳस्तत्र देवा यथा सोमꣳराजानमाप्यायस्वापक्षीयस्वेत्येवमेताँस्तत्र भक्षयन्तीति श्रुतौ चन्द्रलोकं गतानामिष्टादिकारिणामन्नत्वेन भक्ष्यत्वश्रवणाद् यथा यज्ञे सोमं सोमराजानं चमसस्थमृत्विजः। आप्यायस्व पुनः पुनराप्याय्याऽऽप्याय्य, अपक्षीयस्व पुनःपुनरपक्षय्याऽपक्षय्य भक्षयन्त्येवमेतान् कर्मिणो देवा भक्षयन्तीति श्रुत्यर्थः । तत्रोत्तरमाह—

भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ॥ ७ ॥

वाशब्दश्चोदितदोषनिरासार्थः । तेषामिष्टादिकारिणामन्नत्वं भाक्तमेव,नमुख्यम् । अन्यथा स्वर्गकामो यजेतेतिश्रुतिबाधप्रसङ्गादतः कर्मिणां देवान् प्रति पुत्रभार्यादिवद्भोगोपकरणत्वमात्रेणाऽन्नत्वव्यपदेशः । कर्मिणामनात्मवित्त्वाच्च देवान् प्रति गुणभावेन भोग्यत्वम् । तथाहि श्रुतिरनात्मविदां देवभोग्यत्वं दर्शयति । अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानामिति । भेददृष्टिरनात्मवित्त्वात्

पशुवद्देवानामुपकरोति हविरादिदानेनेति । देवभोग्य इति श्रुति-तात्पर्यम् । यद्वाऽनात्मवित्त्वादिसूत्रभागस्याऽयमर्थः । पञ्चाऽग्नि-विद्याविदत्रात्मविच्छब्देनोच्यते । तथाचात्मवित् पञ्चाऽग्नि-विद्यावित् स न भवतीत्यनात्मवित्तस्य भावस्तत्त्वं तस्मादित्य-ऽर्थः । केवलेष्टादिकारिणां पञ्चाऽग्निविद्याऽनभिज्ञानां देवान् प्रत्यन्नभावेन भोग्यत्वं पञ्चाग्निविद्याप्रशंसार्थं गौणमेव श्रुता-वुक्तमिति भावः । नन्वन्नत्वस्य मुख्यत्वेऽपि प्रशंसा सम्भवती-त्यत आह ॥ तथा हीति ॥ यथाऽन्नत्वस्य गौणत्वं तथा हि श्रुतिर्दर्शयति । स सोमलोके विभूतीमनुभूय पुनरावर्तत इति तस्येष्टादिकारिणः सोमलोके विभूत्यनुभवोऽन्नत्वस्य मुख्यत्वे न सम्भवति । तस्मादन्नत्वस्य गौणत्वात् परलोकभोगार्थं, भूत-सम्परिष्वक्तस्य रंहणमिति सिद्धम् ॥ ७ ॥

( २ स्वर्गादवरोहतो जीवस्य सानुशयत्वाधिकरणम् । सू० ४ )

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ॥८॥

पूर्वं कर्मसमवेतानामपां पञ्चमाहुतौ पुरुषात्मना परिणाम-श्रवणं हेतुमाश्रित्यान्नादिभूतपरिवेष्टितस्य जीवस्य रंहणमुक्तं, तद-युक्तम् । स्वर्गादवरोहतां जीवानां कर्माभावेन तत्समवेतानामपा-मप्यभावादित्याक्षेपसङ्गतिः । पूर्वपक्षे चन्द्रलोकभोगानन्तरं तस्मादवरोहतां कर्माभावेन तदनुगुणातिर्यगादियोनिप्राप्त्य-भावान्न कर्मफलेषु वैराग्यमिति फलम् । सिद्धान्ते कर्मणः सत्त्वाद् वैराग्यमिति विवेकः । एवं हि स्वर्गिणामवरोहणं श्रूयते । तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त-न्त इत्यारभ्य रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूय-चरणाः कपूयां योनिमिति तस्मिँश्चन्द्रलोके यावद्भोक्तव्यं कर्मोषि-त्वा भोक्तव्यकर्मसमाप्त्यनन्तरमेतमेव वक्ष्यमाणमध्वानमाकाश-

वायुधूमाभ्रादिरूपं प्रति पुनरागच्छन्ति । ते चागन्तारो रमणीयचरणाः पुण्यकर्माणो ब्राह्मणादिपुण्ययोनिं प्रविशन्ति, कपूयचरणाः कुत्सितकर्माणस्तिर्यगादियोनौ जायन्त इति । तत्र संशयः । किं स्वर्गादवरोहन्तः सानुशया उत निरनुशया इति । अनुशयशब्देनामुष्मिकफलप्रापककर्माऽतिरिक्तं कर्मोच्यते । तत्र यावत्सम्पातमुषित्वेति सर्वकर्मनाशाऽनन्तरमवरोहणश्रवणान्निरनुशया एवाऽवरोहन्तीति प्राप्ते ब्रूमः । कृतस्य स्वर्गसुखप्रापककर्मजातस्य भोगेनात्यये नाशे अनुशयवानेवाऽवरोहति। कुतः ॥ दृष्टस्मृतिभ्याम् ॥ तथाहि दृष्टा प्रत्यक्षा श्रुतिः।तद्य इह रमणीयचरणाः अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा, वैश्ययोनिं वा, अथ य इह कपूयचरणाः अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वेति ।तेषां कर्मिणां मध्ये ये केचिदिह कर्मभूमौ पुण्यं कृतवन्तस्ते स्वर्गादवरोहन्तो रमणीयां ब्राह्मणादियोनिमापद्येरन्निति । यत्तदभ्याशो ह क्षिप्रं ह्यवश्यमेवेत्यर्थः । योनिशब्दः स्थानवचनः शरीरं ब्रूते । यद्वा लोके जन्मनैव प्रतिप्राण्युच्चावचमध्यमरूपभोगो दृष्टः । स च निरनुशयानामवरोहाङ्गीकारे आकस्मिक एव स्यादिति सूत्रस्थदृष्टशब्दार्थः। स्मृतिरपि, वर्णा आश्रमाश्च स्वकर्मनिष्ठिताः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपाऽऽयुःश्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्त इति साऽनुशयानामेवाऽवरोहणं दर्शयति । वर्णाः वर्णिनः, आश्रमा आश्रमिणः, प्रेत्याऽस्माल्लोकात् समुत्थाय चन्द्रलोकमधिरुह्येत्यर्थः । ततः शेषेण भुक्तफलादन्येन कर्मणानुशयाख्येन जन्म प्रतिपद्यन्त इति संबन्धः। श्रुतं ज्ञानं वृत्तमाचारः। देशादयो विशिष्टा येषां ते तथो-

क्ता इति । यत्तु यावत्संपातमुषित्वेति सकलकर्मनाशाऽनन्तरं श्रवणमिति । तन्न । यावत्पदस्य स्वर्गे भोक्तव्याऽशेषकर्मपरत्वेन सकलकर्मपरत्वाऽभावादिति । तस्मात् सिद्धं साऽनुशयानामवरोहणम् । ते च कर्मिणो येन मार्गेण चन्द्रलोकमारूढास्तेनैव मार्गेणाऽवरोहन्त्युत मार्गविशेषेण वेति प्रश्ने उत्तरमाह ॥ यथेतमनेवं चेति ॥ धूमाकाशयोरेवाऽऽरोहणमार्गे श्रुतयोरवरोहणमार्गे श्रुतत्वाद्यथेतं यथागतम् अवरोहन्तीति गम्यते । पूर्वश्रुतानां रात्र्यादीनामश्रवणादभ्राद्यधिकश्रवणाच्चाऽनेवम्पूर्वमार्गविपरीतमार्गेणाऽवरोहन्ति, न यथाश्रुतपूर्वमार्गेणेत्यर्थः ॥ ८ ॥

चरणादितिचेन्नोपलक्षणार्थेतिकार्ष्णाजिनिः ॥ ९ ॥

ननु रमणीयचरणा रमणीयां योनिमापद्यन्त इति श्रुतिबलात् सानुशयानामवरोहणमित्येतदसङ्गतम् । तस्यां श्रुतौ चरणाद्योन्यापत्तिश्रवणात् । चरणस्याऽऽचारात्मकस्य कर्मणोऽनुशयाद्भिन्नत्वादितिचेन्नाऽयं दोषः । यतः कार्ष्णाजिनिराचार्यः, इयं चरणश्रुतिरनुशयोपलक्षणार्थेति मन्यते ॥ ९ ॥

आनर्थक्यमितिचेन्न तदपेक्षत्वात् ॥ १० ॥

ननु चरणश्रुतिरनुशयोपलक्षणार्थेत्यसङ्गतम् । चरणस्यैव सदाचारदुराचारात्मकस्य सदसद्योनिप्रापकत्वसम्भवात् । अन्यथा कर्मण एवानुशयाख्यस्य सदसद्योनिप्रापकत्वे चरणस्यानर्थक्यं स्यादितिचेन्न । इष्टादिकर्मणां चरणाख्याऽऽचारनिर्वर्त्यत्वेन चरणापेक्षत्वात् तत्र चरणस्यार्थवत्त्वादित्यर्थः ॥ १० ॥

वस्तुतः कर्मचरणयोर्न भेद इत्याह—

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देनोच्येते इति

भन्यते । लोके इष्टादिकारिणि धर्मं चरत्येष महात्मेति कर्मचरणयोरभेदेन प्रयोगदर्शनादित्यर्थः । तस्मादिष्टादिकारिणां चन्द्रलोकं गतानां पुनरवरोहणे अनुशयोऽस्तीति सिद्धम् ॥ ११ ॥

. एवमिष्टादिकारिणां गत्यागती विचार्य्य, तेभ्यो निष्कृष्टानामनिष्टादिकारिणां गत्यागती विचारयितुमिष्टाकारिरिण एव चन्द्रलोकं गच्छन्तीत्येतदाक्षिपति—

( ३ पापिनां स्वर्गे गत्यभावाधिकरणम् । सू० १० )

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

अत्र पापिनां शुभमार्गेण गमनमपि नास्तीति सिद्धान्तोक्त्या वैराग्यदृढीकरणात् पादसङ्गतिः । पूर्वपक्षे इष्टानिष्टकारिणामविशेषेण चन्द्रलोकगतेरिष्टादिकरणं व्यर्थमिति तत्फलम् । सिद्धान्ते पापिनां चन्द्रलोकगत्यभावात्तदर्थयज्ञादिकरणं सार्थकमिति विवेकः । अत्र पापिनां चन्द्रलोकगतिरस्ति न वेति सन्देहे, अस्तीत्याह ॥अनिष्टेति॥ इष्टादिकारिणामिवाऽनिष्टादिकारिणामपि चन्द्रलोकगमनम् । ये वैके चाऽस्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति श्रुत्या श्रुतम् । अतो धर्मिण एव चन्द्रलोकं गच्छन्तीत्येतदसङ्गतमित्यर्थः ॥ १२ ॥

ननु धर्मिणामधर्मिणां च चन्द्रलोकगमनं, पापिनां नरकप्राप्तिबोधकशास्त्रविरुद्धमितिचेन्न । पापिनां चन्द्रलोकगमनाङ्गीकारेऽपि तत्र भोगाऽनङ्गीकारात् । किन्तु, चन्द्रलोकगमनमात्रं कृत्वा, ततोऽवरोहतां पापिनां नरकेष्वेवानुभव इति प्राह सूते—

संयमने त्वनुभूयेतरेषामारोहावरोहौ
तद्गतिदर्शनात् ॥ १३ ॥

तुशब्दः पूर्वपक्षनिरामार्थः । भोगार्थं हि चन्द्रलोकगमन-

म्। तत्र पापिनां भोगासम्भवात् तद्गमनं व्यर्थमेव। अतश्चन्द्रलोकमेव ते सर्वे गच्छन्तीति श्रुतिरिष्टादिकारिमात्रविषया। सर्वे सुकृतिन एव चन्द्रलोकं गच्छन्तीति। पापिनस्तु यमलोकमारुह्य सँय्यमने यमालये स्वपापानुरूपा यामीर्यातना अनुभूय पुनरिमं लोकं प्रत्यवरोहन्तीत्येवम्भूतावेवेतरेषां पापिनामारोहावरोहौ भवतः। कुतः॥तद्गतिदर्शनात्॥यमलोकगतेः श्रुतौ दर्शनादित्यर्थः॥

न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते म,इति॥

वैवस्वतं सङ्गमनं जनानामित्यादिकं पापिनां यमलोकगतौ लिङ्गम्। सम्यगवश्यम्भावेन परः परस्ताद् देहपातादूर्ध्वमयते गम्यते इति व्युत्पत्त्या सम्परायः परलोकः। तत्साधनभूतकर्मविशेषः साम्परायः। स बालमविवेकिनं, विशेषतो वित्तनिमित्तेन मोहेन मूढं छन्नदृष्टिम्, अत एव प्रमाद्यन्तं प्रमादं विषयासक्तिं कुर्वन्तं प्रति न भाति। स च बालो न केवलमज्ञ एव, किन्तु विपरीतदर्शी। यतोऽयमेव लोकोऽन्नपानादिरस्ति, न पर इति मननशीलस्तस्मात् तदनुरूपं पापमाचरन् पुनः पुनर्जन्ममरणप्राप्त्या मे मम वशमापद्यत इति मृत्योर्नाचिकेतसं प्रतिवचनम्। जनानां परलोकं गतानां पापिनां सङ्गमनं सम्यग्गम्यं वैवस्वतं यमं राजानं हविषा प्रीणयतेत्यर्थः॥ १३॥

स्मरन्ति च॥ १४॥

मन्वादयः शिष्टाः पापिनां नरकभोगं स्मरन्ति। अतश्च धर्मिणामेव चन्द्रलोकगमनं, नान्येषामित्यर्थः॥ १४॥

अपि च सप्त॥ १५॥

सप्त रौरवादयो, नरकाः पापफलभूमित्वेन स्मर्यन्ते पौराणिकैः।तान् पापिनः प्राप्नुवन्तीति, न चन्द्रप्राप्तिरिति भावः॥१५॥

ननु पापिनो यमसम्बन्धिनीर्यातना अनुभवन्तीति यदुक्तं तदसङ्गतम् । रौरवादिषु चित्रगुप्तादीनामधिष्ठातृत्वस्मरणादित्यत आह—

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तत्रापि रौरवादिषु तस्यैव यमस्याऽधिष्ठातृत्वव्यापाराद-ऽविरोधः । चित्रगुप्तादीनां यमप्रयुक्तत्वादिति भावः ॥ १६ ॥

उपासकानामर्चिरादिमार्गः केवलकर्मिणां धूमादिमार्ग इति श्रुतिस्मृत्यादिषु व्यवस्था । तथाचैतन्मार्गद्वयभ्रष्टानां पापिनां तृतीयमार्गोक्तेरपि न तेषां चन्द्रप्राप्तिरित्याह—

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

पञ्चाऽग्निविद्यायां प्रवाहणाख्येन राज्ञा मृतैर्जनैर्बहुभिश्चन्द्रलोकः कथं न सम्पूर्यते, तत्प्रकारं किं त्वं न जानासीति श्वेतकेतुः पृष्टस्तस्य प्रश्नस्य श्वेतकेतुपितरं गौतमं प्रति राज्ञ एव प्रतिवचनं श्रूयते । अथैतयोः पथोर्न कतरेण च नैतानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम् । तेनाऽसौ लोको न संपूर्यते इति । अथैतयोरिति पदस्याऽर्थमाह सूत्रकारः॥ विद्याकर्मणोरितीति ॥ अर्थ इति शेषः।कुतः।विद्याकर्मणोरेव देवयानपितृयानात्मकमार्गद्वयसाधनत्वेन प्रकृतत्वात् प्रकृतवाचकत्वमेतच्छब्दस्य युक्तमित्यर्थः । एतदुक्तं भवति। एतयोर्विद्याकर्मणोः पथोर्मार्गसाधनयोरन्यतरेण मार्गसाधनेन विद्यया कर्मणा वान्यतरस्मिन् पथि नाधिकृताः पापिनस्तेषां क्षुद्रजन्तुलक्षणोऽसकृदावर्तिजन्ममरणबाहुल्ययुक्तस्तृतीयः पन्था इति न चन्द्रप्राप्तिरिति श्रुतौ जायस्व म्रियस्वेत्य-

ऽनेन जन्ममरणबाहुल्यं युक्तम् । स्थानशब्दो मार्गद्वयोपक्रमाऽनुरोधात् तृतीयं मार्गं लक्षयति । सूत्रे तुशब्देन चन्द्रमसमेव ते सर्वे गच्छन्तीति श्रुतिप्रयुक्तशङ्कानिरासः कृतः । सर्वशब्दस्य पुण्यपुरुषमात्रपरत्वादिति भावः ॥ १७ ॥

ननु पापिनामस्मिँल्लोके देहप्राप्त्यर्थं चन्द्रलोकगमनमङ्गीकर्तव्यम् । पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्याहुतिसंख्यानियमेन देहप्राप्त्यभिधानादऽन्यथा संख्यानियमाऽभावप्रसङ्ग इत्यत आह—

न तृतीये तथोपलब्धेः ॥ १८ ॥

तृतीये मार्गे प्रविष्टानां पापिनां देहप्राप्त्यर्थमाहुतिसंख्यानियमो नादरणीयः । कुतः ॥ तथोपलब्धेः ॥ संख्यानियमं विनैव, जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमिति श्रुतौ तृतीयमार्गे देहप्राप्तेरुपलब्धेरित्यर्थः । इष्टादिकारिणामेवाऽयं संख्यानियम इति भावः । किञ्च, पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति पञ्चम्यामाहुतावपां पुरुषवचस्त्वं प्रतिपाद्यते, नापञ्चम्याहुतौ पुरुषवचस्त्वं निषिद्ध्यते । वाक्यभेदप्रसङ्गात् । तथाच ये चन्द्रं गतास्तेषां संख्यानियमः । इतरेषां तु विनैव संख्यानियमं भूतान्तरप्रविष्टाभिरद्भिर्देह आरभ्यते इत्यनियमः ॥ १८ ॥

स्मर्यतेऽपि च लोके ॥ १९ ॥

अपिच लोके भारतादौ द्रोणधृष्टद्युम्नादीनां सीताद्रौपद्यादीनां चाऽयोनिजत्वं स्मर्यते । तत्र द्रोणादीनां योषिदाहुतिरेका नास्ति । धृष्टद्युम्नादीनां योषित्पुरुषविषये द्वे आहुती न स्त इत्याहुतिसंख्याया अनियमः । एवमन्यत्रापीति भावः ॥१९॥

दर्शनाच्च ॥ २० ॥

किञ्च, लोके जरायुजाण्डजस्वेदजोद्भिज्जेषु चतुर्विधेषु देहेषु स्वेदजोद्भिज्जयोस्त्रीपुंव्यक्तिसंयोगं विनैवोत्पत्तिदर्शनाद् नाहुति-संख्यानियम इत्यर्थः। जरायुजं मनुष्यादिशरीरम्, अण्डजं पक्ष्या-दिकं, स्वेदजं यूकादिकम्, उद्भिज्जं वृक्षादिकम् ॥ २० ॥

ननु तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमिति श्रुतौ शरीरत्रैविध्यं श्रूयते । अतः कथं चातुर्विध्यमत आह—

तृतीयशब्दाऽवरोधः संशोकजस्य ॥ २१ ॥

श्रुतावण्डजं जीवजमुद्भिज्जमित्यत्र तृतीयेनोद्भिज्जशब्देना-ऽवरोधः संग्रहः संशोकजस्य स्वेदजस्य । वृक्षादिकं हि पृथिवी-मुद्भिद्य जायते स्वेदजं तु जलमुद्भिद्य इत्युभयोरवयवार्थत्वा-ऽविशेषादुम्भिज्जपदेन संग्रहः श्रुतौ कृतः । न ह्येतावता, चातु-र्विध्यहानिर्भवति । स्थावरजङ्गमात्मकत्वेनोभयोर्भेदस्य दुरपह्नव-त्वादिति भावः । तस्मादनिष्टादिकारिणां न चन्द्रलोकप्राप्तिः, किन्त्विष्टादिकारिणामेवेति सिद्धम् ॥ २१ ॥

( ४ स्वर्गावरोहे जीवस्याकाशादितुल्यताधिकरणम् । सू० १ )

साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

पूर्वमिष्टादिकारिणश्चन्द्रं गताः कर्मफलभोगाऽनन्तरं सा-ऽनुशया अवरोहन्तीत्युक्तम् । अत्र तेषामवरोहप्रकारश्चिन्त्यते । तत्रावरोहश्रुतिः पठ्यते। अथैतमेवाऽध्वानं पुनर्निवर्त्तन्ते । यथेत-माकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वाऽभ्रं भवति, अभ्रम्भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षतीति । अथ भोक्तव्यकर्मसमाप्त्यनन्तरं अध्वानमेवाऽऽह । यथेति । यथा-गतमित्यर्थः । इदमुपलक्षणम् । अनेवमित्यपि द्रष्टव्यम् । याः

खल्वापश्चन्द्रलोके देहमारब्धवत्यस्ताः कर्मक्षये द्रुता आकाशं गतास्तत्समा यदा भवन्ति तदा तदुपहिता अनुशयिनो जीवा अप्याकाशसमा भवन्तीत्याह । आकाशमिति । एवं वाय्वादावपि योजनीयम् । वायुर्भूत्वा वायुसमो भूत्वा, एवमग्रेऽपीति सिद्धान्तार्थः । पूर्वाधिकरणे जायस्व म्रियस्वेति तृतीयस्थानमित्यत्र स्थानशब्दस्य मार्गद्वयोपक्रमसामर्थ्यात् तृतीयमार्गलक्षकत्वमुक्तं तद्युक्तम् । इमौ द्वौ ब्राह्मणावित्युपक्रम्याऽयं तृतीय इत्यादौ तृतीयस्योपक्रान्तसजातीयस्यैव दर्शनादिह तु भवति श्रुतेर्मुख्यार्थपरित्यागे मानाऽभाव इति प्रत्युदाहरणसङ्गतिः । पूर्वपक्षे भवति श्रुतेर्मुख्यत्वसिद्धिः फलं, सिद्धान्ते गौणत्वसिद्धिरिति विवेकः । तत्र संशयः । किं स्वर्गादवरोहन्तो जीवा आकाशादिस्वरूपं प्रतिपद्यन्ते, उत तत्साम्यमिति । तत्र भवति श्रुतेर्मुख्यत्वानुरोधादाकाशादिस्वरूपापत्तिरेव, जीवानामिति प्राप्ते, ब्रूमः । जीवानां तैराकाशादिभिः साभाव्यापत्तिः साम्यापत्तिरेव । कुतः ॥ उपपत्तेः ॥ लोके क्षीरस्य दधिभावो युक्तः।क्षीरकाले दध्यभावादिह तु पूर्वं विद्यमानाकाशादिभावो जीवस्य दुरुपपादः । किञ्च, जीवस्याऽऽकाशस्वरूपापत्तौ वाय्वादिक्रमेणावरोहाभावप्रसङ्ग इत्यादियुक्तिवशाद्भवति श्रुतेर्गौणत्वमङ्गीकर्तव्यमित्याकाशादिसम्बन्धमात्रमेव । जीवानां सम्बन्धश्च सादृश्यातिरिक्तो न सम्भवतीति सादृश्यमेवेति सिद्धम् ॥ २२ ॥

एवमाकाशादिषु वर्षान्तेषु पूर्वपूर्वसादृश्यानन्तरमुत्तरोत्तरसादृश्यमित्युक्तम् । तदुपजीव्य विचार्य्यते । किं जीवाश्चिरकालमेकसादृश्येनावस्थायापरसादृश्यं गच्छत्युताल्पकालमिति विशये नियामकशास्त्राभावादनियम इति प्राप्ते सिद्धान्तयति—

( ५ स्वर्गाद्‌वरोहतां त्वराविलम्बाधिकरणम् । सू० १ )

## नाऽतिचिरेण विशेषात् ॥ २३ ॥

जीवो नातिचिरेणाल्पम् अल्पं कालमेवाकाशादिवर्षान्तैः साद‍ृश्येनावस्थाय वर्षधाराद्वारा पृथिवीं प्रविशति।कुतः॥विशेषात्॥ पृथिव्यनन्तरं व्रीह्यादौ प्रवेशमुक्त्वा व्रीह्यादिभ्यो जीवस्य निःसरणसमये व्रीह्यादिषु चिरकालाऽवस्थानरूपविशेषं दर्शयित्वा निःसरणं दर्शयति श्रुतिः—

अतो वै खलु दुर्निष्प्रपततरमिति । एकस्तकारो लुप्तश्छान्दसप्रक्रियया । अतोऽस्माद् व्रीह्यादिभावाद् दुर्निष्प्रपततरं दुःखतरं जीवानां निःसरणं भवतीत्यर्थः । व्रीह्यादिभ्यो जीवस्य दुःखं निःसरणं भवतीत्युक्तौ आकाशादिभ्यः सुखं निःसरणं जातमिति प्रतीयते।यथा लोके कश्चित् पण्डितोऽनेकराजसभासञ्चारं चरित्वा कस्याञ्चिद् राजसभायामान्दोलिकाप्रतिष्ठामविन्दतेत्युक्ते इतरासु सभासु आन्दोलिकां न लब्धवानिति प्रतीयते तद्वद् व्रीह्याकाशादिषु सुखदुःखे जीवस्य दीर्घकालावस्थानाऽल्पकालावस्थाने भवतः । तदानीं स्थूलशरीराभावेन मुख्यसुखदुःखयोरसम्भवात् । तस्माद् व्रीह्यादिप्रवेशात् पूर्वमल्पमल्पमेव कालं तत्तत्साद‍ृश्येनावस्थानमिति सिद्धम् ॥ २३ ॥

( ६ स्वर्गादवरोहतां व्रीह्यादौ संश्लेषाधिकरणम् । सू० ४ )

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

तस्मिन्नेवाऽवरोहे जीवानां वर्षधाराद्वारा पृथिवीप्रवेशानन्तरं पठ्यते । त इह व्रीहियवा ओषधीवनस्पतयस्तिलमाषा इति जायन्ते इति । ते अनुशयिनो जीवा इत्यर्थः । तत्र संशयः । किं जीवानां व्रीह्यादिभावेन जन्मश्रुतिर्मुख्या ? उत जीवान्तरा-

ऽधिष्ठिते व्रीह्यादौ तेषां संसर्गमात्रमिति । तत्र पूर्ववद् दुर्निष्प्रपततरशब्दस्य पूर्वोक्तयुक्तिबलाच्चिरकालावस्थानलक्षकत्वेऽपि प्रकृते क्षीरस्य दधिभावेनेवाऽबादिभूतसम्परिष्वक्तजीवानामन्नादिद्वारा व्रीह्यादिभावेन मुख्यस्यैव जन्मनः सम्भवाद् व्रीह्यादिस्थावरशरीरेषु सुखदुःखभाजोऽनुशयिनो जीवाइतिप्रत्युदाहरणेन पूर्वपक्षे सिद्धान्तः । अन्यैर्जीवैरधिष्ठिते व्रीह्यादौ संसर्गमात्रमनुशयिनां भवति ॥ पूर्ववत् ॥ यथाकाशादौ संसर्गमात्रं तद्वत् । कुतः ॥ पूर्ववदभिलापात् ॥ यथाकाशादिषु वर्षान्तेषु, कर्मपरामर्शमन्तरेणैव प्रवेश उक्त एवं व्रीह्यादिष्वपि कर्मपरार्श विनैव प्रवेशाभिलापादित्यर्थः । पूर्ववदिति पदं सूत्रे अर्थद्वयाऽभिप्रायेण प्रयुक्तमिति पुनरुपादाय व्याख्यातम् । तस्मात् कर्मपरामर्शाभावान्न व्रीह्यादिष्वनुशयिनां सुखदुःखभावत्वम् । यत्र त्वनुशयिनां सुखदुःखभाक्त्वं तत्र कर्मपरामर्शो, रमणीयचरणा इत्यादिना दृश्यते इति जायन्त इति श्रुतिः, संसर्गमात्राऽभिप्राया, न मुख्येति बोध्यम् ॥ २४ ॥

अशुद्धमितिचेन्न शब्दात् ॥ २५ ॥

ननु ज्योतिष्टोमादिकं कर्म पशुहिंसायोगादशुद्धं तत्कारिणामनुशयिनां व्रीह्यादिषु स्थावरेषु दुःखानुभवार्थं मुख्यमेव जन्माऽस्त्वितिचेन्न । ज्योतिष्टोमादेः शब्दाद्विधिशास्त्राद्धर्मत्वेनाऽवगतत्वान्न दुःखहेतुत्वमित्यर्थः ॥ २५ ॥

किञ्च,

रेतःसिग्योगोऽथ ॥ २६ ॥

अथ व्रीह्यादिभावाऽनन्तरमनुशयिनां रेतः सिञ्चतीतिरेतःसिक् । तद्योगस्तद्भावः श्रुतावाम्नायते । यो रेतः सिञ्चति तद्भूय एव भवति इति । अनुशयी व्रीह्याद्यन्नद्वारा पुरुषं प्रविष्ट

स्तद्भूयो भवति। तद्भावं गच्छतीत्यर्थः। न ह्यत्रानुशयिनो रेतःसिग्भावो मुख्यः संभवति। इदानीं पुरुषप्रविष्टत्वेनाप्राप्तयौवनत्वादतस्तद्भावस्तत्संसर्गो वक्तव्यः। तथाच व्रीह्यादावपि संसर्ग एव। आकाशादावपि संसर्गस्यैवाऽवगतत्वेन संदंशन्यायादिति भावः॥ २६॥

नन्वनुशयिनां सर्वत्र संसर्गस्यैवाऽङ्गीकारे मुख्यं जन्म क्वापि न स्यात्। तथाच, रमणीयां योनिमापद्येरन्नित्यादिश्रुतेर्गौणत्वप्रसङ्ग इत्यत आह—

योनेः शरीरम् ॥ २७॥

योनौ रेतसि प्रविष्टे ततः शरीरमनुशयिनामनुशयाख्यकर्मभोगाय जायते इत्याह शास्त्रं, तद्य इह रमणीयचरणा इत्यादि। तस्माद् ब्राह्मणादियोनावेवाऽनुशयिनां मुख्यं जन्म,न व्रीह्यादाविति गत्यागतिविवेककृतवैराग्यं ज्ञानसाधनमित्यनवद्यम् ॥२७॥

इति श्रीब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य प्रथमः ॥ ३ ॥ १ ॥

## तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

एवं गत्यागतिनिरूपणेन कर्मफलेभ्यो विरक्तस्य महावाक्यार्थज्ञानाय तत्त्वम्पदार्थौ शोधयितुं पादमारभमाणो गत्यागतिनिरूपणेनैव जाग्रदवस्थानिरूपितेत्यभिसन्धायात्मनः स्वयम्प्रकाशत्वसिद्धये स्वप्नाऽवस्थां वक्तुं पूर्वपक्षयति—

( १ स्वप्नसृष्टेर्मिथ्यात्वाधिकरणम् । सू० ६ )

### सन्ध्ये सृष्टिराह हि ॥ १ ॥

तथाचानयोः पादयोर्हेतुहेतुमद्भावः सङ्गतिः । सिद्धे विरक्ते अस्य पादस्य प्रवृत्तेस्तत्त्वम्पदार्थयोर्मध्ये त्वम्पदार्थस्योद्देश्यत्वान्न स्थानतोऽपीत्यतः प्राक् तस्यावस्थानिर्मुक्तत्वं प्रतिपाद्यते । ततश्चाऽऽपादसमाप्तेस्तत्पदार्थो विचार्यते । तत्र स्वप्नावस्थाया जाग्रदानन्तर्यात् स्वयञ्ज्योतिष्ट्वसिद्धौ स्पष्टसाधनत्वाच्चादौ विचारः । जाग्रदवस्थायां सूर्यादिप्रकाशसत्त्वेनाऽऽत्मनः स्वप्रकाशत्वं दुर्ग्रहम् । स्वप्ने तु सूर्याद्यभावेऽपि प्रत्यक्षतया दृश्यभानात् सुग्रहमिति स्वप्नस्य स्वयञ्ज्योतिष्ट्वसिद्धौ स्पष्टसाधनत्वं मन्तव्यम् । एवं हि स्वप्नमधिकृत्य श्रूयते । न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते इत्यादि । तत्र संशयः । किं स्वप्नसृष्टिर्व्यावहारिकी घटादिवदुत शुक्तिरजतवन्मायामात्रमिति पूर्वपक्षे, घटादिवत् सत्यस्वप्नावस्थातो जीवस्य पृथक्करणाऽयोगाद्ब्रह्माऽभेदरूपवाक्यार्थान्वयासिद्धिः फलम् । सिद्धान्ते तत्सिद्धिरिति भेदः । तत्रेदं पूर्वपक्षसूत्रम् ॥ सन्ध्ये इति ॥ सन्ध्ये जाग्रत्सुषुप्त्योः सन्धौ भवे स्वप्ने सृष्टिर्व्यावहारिक्येव हि यतः श्रुतिरेवमाह । अथ रथान् रथयोगान् पथः सृजते इति ॥ १ ॥

### निर्मातारं च तथाचैके पुत्रादयश्च ॥ २ ॥

किञ्चैके शाखिनोऽस्मिन्नेव स्वप्ने कामानां निर्मातारं तथा जीवमिव परमात्मानमामनन्ति । य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण इति । एषु चक्षुरादिकरणेषु सुप्तेषु निर्व्यापारेष्वित्यर्थः । ननु श्रुतौ कामानां बुद्धिवृत्तिविशेषाणां निर्माता परमात्मेति श्रूयते, नाऽर्थनिर्मातेत्यत आह ॥ पुत्रादयश्चेति ॥ काम्यन्ते इति व्युत्पत्त्या पुत्रादय एव कामा इत्यर्थनिर्मातृत्वं परमात्मन इत्यर्थः । तथाच स्वप्नसृष्टिः सत्या ईश्वरकर्तृकत्वात् क्षित्यादिवदित्यनेन सूत्रेणोक्तम् ॥ २ ॥

तस्माच्छ्रुत्यनुमानाभ्यां स्वप्नसृष्टिः सत्येति प्राप्ते,प्रत्याह—

मायामात्रं तु कार्त्स्न्येनाऽनभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तुः पूर्वपक्षनिरासार्थः । स्वाप्नसृष्टिर्मायामात्रं, शुक्तिरजतवत् । कुतः । कार्त्स्न्येन उचितदेशकालादिसंपत्त्या बाधाभावेन चाऽनभिव्यक्तस्वरूपत्वात् । न हि रथानामुचितो देशः स्वप्ने संभवति । देहान्तर्नाडीप्रविष्टमनोऽवच्छिन्नसाक्षिनिष्ठत्वात्।नाप्युचितः कालोऽस्ति ।घटिकामात्रवर्तिनि स्वप्ने बहुसंवत्सरसाध्यसंसरणस्य दर्शनात् । तस्मात् प्रातिभासिक एव स्वप्नप्रपञ्चः। यदुक्तम् । अथ रथान् रथयोगान् पथः सृजत इति ईश्वरकर्तृकां सृष्टिं श्रुतिराहेति सृष्टेः सत्यत्वमिति । तच्छ्रुत्यैव, न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिकया स्वप्ने रथाद्यभावबोधिकया परिहृतम् । अनुमाने चोचितदेशादिजन्यत्वमुपाधिः साध्यव्यापकत्वे सति साधनाव्यापकत्वाद्धेत्वासिद्धिश्च ।श्रुत्यन्तरे स हि कर्त्तेति स्वयं निहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपितीति च स्वप्नसृष्टेर्जीवकर्तृकत्वश्रवणात् । स्वयं निहत्य पूर्वदेहं निश्चेष्टं कृत्वा, स्वयं निर्माय अपूर्वं स्वाप्नं देहं सम्पाद्य स्वेन भासा स्वीयान्तःकरणवृत्त्या स्वेन ज्योतिषा स्वरूप-

चैतन्येन चेत्यर्थः। तथाच, कामं कामं पुरुषो निर्मिमाण इत्यत्रापि जीव एव निर्माता ज्ञेयः ॥ ३ ॥

ननु स्वप्नस्य मिथ्यात्वे सत्यशुभाऽशुभसूचकत्वं न स्यादित्यत आह—

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

स्वाप्नगजादिप्रकाशः सत्य एव वस्तुतः सत्यसूचकः। सत्यस्य साध्वसाधुसूचनस्य हेतुः । तथाहि—

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।

समृद्धिं तत्र जानीयात्तस्मिन् स्वप्नानिदर्शन इत्यादिश्रुतेरवगम्यते स्वप्नः । आचक्षते च स्वप्नाध्यायविदः शुभाशुभसूचकत्वं स्वप्नस्येत्यर्थः । यद्यपि प्रकाशस्याऽर्थोपरागेणैव सूचकत्वमिति वस्तुतः सत्यत्वमप्रयोजकं, तथापि रजतस्य सत्यहर्षादिजनकत्ववत् सत्यसूचकत्वमविरुद्धमिति तात्पर्यम् ॥ ४ ॥

ननु यथेश्वरः संकल्पमात्रेण जगत् सृजति एवं तदंशो जीवोऽपि सङ्कल्पमात्रेण निमित्तेन स्वाप्नं जगत् सृजतु तथाचोचितनिमित्ताभावान्मिथ्या स्वप्नसृष्टिरित्यसङ्गतमित्यत आह—

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥५॥

जीवेश्वरयोरभेदेऽपि माययैश्वर्यस्य तिरोहितत्वाद् न जीवस्य सङ्कल्पमात्रेण स्रष्टृत्वमिति परिहाराभिप्रायः । जीवस्य तिरोहितमीश्वरत्वं परस्याऽऽत्मनोऽभिध्यानादभेदाभ्यासरूपध्यानप्राप्तादीश्वरप्रसादादभिव्यक्तं भवति । कुतः । तत ईश्वरादज्ञाताद् बन्धो, ज्ञातात् तद्विपर्ययो मोक्ष इति श्रुतिर्दर्शयति । तस्मादीश्वरप्रसादरहितानां नेश्वरत्वाभिव्यक्तिरित्यर्थः । श्रुतिस्तु पठ्यते—

ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः। तस्याऽभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः, इति ॥

देवं स्वप्रकाशमीश्वरमहंत्वेन साक्षात्कृत्य सर्वपाशानां मिथ्याज्ञानरागादीनां क्लेशानामपहानिः क्षयो यस्मिन् सम्भवति । एवं क्षीणैः क्लेशैस्तत्कार्यजन्ममरणक्षयो भवति । निर्गुणविद्याफलमुक्त्वा सगुणविद्याफलमाह । तस्येति । तस्येश्वरस्याऽऽभिमुख्येन ध्यानादुक्तहानिद्वयाऽपेक्षया तृतीयमणिमाद्यैश्वर्यं, देहभेदे देहविशेषे सिद्धदेहे प्राप्तं भुक्त्वा निर्गुणविद्योदये, केवलोऽद्वितीय आप्तकामो निरतिशयाऽऽनन्दात्मनैवाऽवतिष्ठत इति क्रममुक्तिवाक्यार्थः ॥ ५ ॥

ननु जीवस्येश्वरत्वतिरोभावे को हेतुरित्याशङ्क्याह—

देहयोगाद्वा सोऽपि ॥ ६ ॥

जीवस्येश्वरत्वतिरोभावो देहेन्द्रियादियोगात् । यथा भस्मयोगाद्वह्नेः प्रकाशनसामर्थ्यतिरोभावस्तद्वदित्यर्थः । ननु जीवस्येश्वरत्वाभाव एवास्त्वितिशङ्कां वाशब्देन निरस्यति । अभेदस्य श्रुतिसहस्रसिद्धत्वादिति भावः । तस्मादुचितसामग्र्यभावाज्जाग्रदवसरे बाधितत्वाच्च शुक्तिरूप्यवन्मायामात्रं स्वप्नदर्शनमिति तदवस्थाविनिर्मुक्तोऽयमात्मेति सिद्धम् ॥ ६ ॥

एवं बाह्यकरणोपरमरूपं स्वप्नमात्मनः स्वप्रकाशत्वार्थं परीक्ष्यान्तःकरणोपरमरूपां सुषुप्तिं, स्वप्नानन्तरभाविनीं तस्य ब्रह्मत्वाय निरूपयति ।

( २ सुषुप्तौ जीवस्य हृत्स्थब्रह्मणैक्याधिकरणम् । सू० २ )

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

सुषुप्तेः स्वप्ननाशरूपत्वात् तदानन्तर्याच्च हेतुहेतुमद्भावः, आनन्तर्यं वा सङ्गतिः । तत्र सुषुप्तिवाक्यानि विप्रतिपन्नानि दृश्यन्ते । तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति इति । तत् तासु स्वप्नाद्यवस्थासु यत्राऽवस्थायामेतद् बाह्येन्द्रियोपरमणं यथा स्यात्तथा सुप्तः संहृतबाह्येन्द्रिय इति यावत् । समस्तः अविशेषवृत्तिः । संप्रसन्नः संहृतान्तःकरणश्च यदा स्वप्नं न विजानाति तदा नाडीषु सुप्त इत्यर्थः । क्वचिन्नाडीभिः संसरणाऽनन्तरं पुरीतति सुषुप्तिः श्रूयते । ताभिः प्रत्यवसृप्य पुरीतति शेते इति । क्वचित् परमाऽऽत्मनि सुषुप्तिः श्रूयते, य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत इति सता सोम्य तदा सम्पन्नो भवतीत्यादिभिः, तत्र संशयः । किं जीवस्य नाडीपुरीतत्परमात्मनां मध्ये यत्र कुत्रचित् सुषुप्तिरुत नाडीपुरीतत्प्रवेशानन्तरं परमात्मन्येवेति।अत्र पूर्वपक्षे सुषुप्तिस्थानविकल्पाज्जीवस्य ब्रह्मैक्याऽनियमः । सुषुप्तौ भ्रमनिवृत्तावपि ईषद्ब्रह्मैक्यप्राप्तेरनियमादिति फलम् । सिद्धान्ते तन्नियम इति भेदः । तत्रैकयागनिष्पादकत्वेन श्रुतव्रीहियववदेकशयननिष्पादकनाड्यादीनां विकल्प इति प्राप्ते ब्रूमः । तदभावः स्वप्नाऽभावः सुषुप्तिर्नाडीष्वात्मनि चेति नाड्यादीनां समुच्चय एव, न विकल्प इत्यर्थः । समुच्चयस्य नाडीपुरीतत्प्रवेशं विना सत्सम्पत्तेरभावात्तयोर्नाडीपुरीततोर्गुणत्वेन परमात्मनः प्रधानत्वेन ज्ञेयः । कुतः ॥ तच्छ्रुतेः ॥ तस्य नाड्यादीनां सुषुप्तिस्थानत्वस्य श्रुतत्वादुक्तसमुच्चयाऽनङ्गीकारे श्रुतीनां सङ्ग्रहो न स्यादिति भावः । किञ्च विभोर्जीवस्य स्वप्नानन्तरं नाडीपुरीततोः सञ्चारोऽन्तःकरणाद्युपाधेः सत्त्वात् संभवति । उपाधिसंचारं विना स्वतस्तस्य सञ्चाराभावात्।सुषुप्तौ तु उपाध्यभावाद्

नाडीपुरीततोः शयनं जीवस्य न संभवतीत्यपि द्रष्टव्यम् ॥ ७ ॥

अतः प्रबोधोऽस्मात् ॥ ८ ॥

यतः परमात्मैव सुषुप्तिस्थानम्, अत एव हेतोरस्मात् परमात्मनो जीवस्य प्रबोध उपादिश्यते । प्रबोधकाले कस्माज्जीवात्मानः समुत्तिष्ठन्तीतिप्रश्ने परमात्मनः सकाशादुत्तिष्ठन्तीति श्रवणात् । आत्मनोऽन्यस्य सुषुप्तिस्थानत्वे इदं श्रवणं बाध्येत। अन्यत्र सुप्तस्यान्यस्मादुत्थानायोगादिति भावः । तस्मात् सुप्तौ मिथ्याज्ञानाभावमात्रेणेपद्ब्रह्मसम्पत्तेः सत्त्वान्मूलाऽज्ञाननिवृत्तौ साकल्येन ब्रह्मसम्पत्तिरविरुद्धेति अस्ति जीवस्य ब्रह्मत्वानियम इति सिद्धम् ॥ ८ ॥

( ३ सुप्तस्यैव जागरणाधिकरणम् । सू० १ )

स एव तु कर्माऽनुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

सुषुप्त्यन्ते परमात्मनः सकाशाज्जीवा उत्तिष्ठन्तीति परमाऽऽत्मैव सुप्तिस्थानमित्युक्तं, तदयुक्तम् । सुप्तादन्यस्य प्रबोधसम्भवेन सुप्तस्य नाड्यादिस्थानत्वेऽप्यविरोधादित्याक्षेपात् सङ्गतिः । पूर्ववदेव फलम् । तत्र यः सुप्तो जीवः स एवोत्तिष्ठति उत सुप्तादन्य एवेति संशये जलराशौ क्षिप्तबिन्दोरिवानियम इति प्राप्ते ब्रूमः । यः सुप्तो जीवः स एवोत्तिष्ठति, नान्यः। कुतः ॥ कर्माऽनुस्मृतिशब्दविधिभ्यः पञ्चभ्यो हेतुभ्यः॥ दिनद्वयसाध्यकर्मणोऽर्द्धं कृत्वा सुप्तः पुनरुत्थायावशिष्टमर्द्धं कर्म करोति । अनुशब्देन प्रत्यभिज्ञा, योऽहं पूर्वदिने काशीनाथमद्राक्षं, सोऽहमिदानीं मणिकर्णिकायां स्थितोऽस्मीत्याद्याकारा सूच्यते । पश्चात् सेतुं गतस्य स तादृशः काशीनाथ इत्यादिस्मरणं स्मृतिशब्देनोच्यते । पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैवेत्यादिश्रुतिजातं शब्दः । अयनं

गमनमायः । प्रतिनियतगमनं प्रतिन्यायः । स यथा भवति तथा योनिं शरीरं प्रति सुप्तः पुनरागच्छति, जागरायेत्यर्थः । कर्मविद्याविधयो विधिशब्देनोच्यन्ते । यदि सुप्तस्य पुनर्नोत्थानं तदोक्तहेतवो बाध्येरन्नित्यर्थः । तस्मात् सुप्त एवोत्तिष्ठतीति सिद्धम् ॥९॥

एवमवस्थात्रयनिर्मुक्तत्वम् आत्मनस्तद्द्रष्टुरव्यभिचारिण उक्त्वा मूर्च्छाऽवस्था किं सुषुप्तावेवान्तर्भवति उताऽतिरिक्ता वेति सन्देहे, अतिरेके प्रमाणाभावात् सुषुप्तिरेव मूर्च्छेत्युपजीवकभावेन पूर्वपक्षे सिद्धान्तः—

( ४ मूर्च्छाया अवस्थान्तरताधिकरणम् । सू० १ )

मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥

पूर्वपक्षे मूर्च्छावस्थातो विवेकार्थं यत्नो न कार्य इति फलम् । सिद्धान्ते तु यत्नः कर्तव्य इति बोध्यम् । न तावत् स्वप्नजागरिते मूर्च्छावस्था, ज्ञानाभावात् । नापि मरणावस्था । प्राणोष्मणोः सत्त्वात् । नापि सुषुप्तिः । वैलक्षण्यात् । मुग्धस्य शरीरे कम्पो भयङ्करं वदनं निश्चले उन्मीलिते नेत्रे निश्चलश्च प्राणोऽवतिष्ठते । नैवं सुषुप्तौ भवति । तस्मात् परिशेषादर्द्धसम्पत्तिर्मुग्धावस्थातिरिक्तैव । ननु मुग्धेऽपि बाह्यान्तःकरणानामभावेन सत्सम्पत्तेः सुषुप्ताविवाऽविशेषात् कथमर्द्धसम्पत्तिरिति चेत्, सत्यम् । न हि ब्रह्मणार्द्धसम्पत्तिं मुग्धस्य ब्रूमः । किन्तु सुषुप्त्यऽवस्थायां ये धर्माः प्रसन्नवदनत्वनिमीलितनेत्रत्वप्राणोच्छ्वासविशेषविज्ञानराहित्यादयः । तत्र विशेषविज्ञानराहित्यादिनार्द्धेन धर्मजातेन मूर्च्छावस्थायाः सम्पन्नत्वादर्द्धेन मरणावस्थाधर्मजातेन कम्पादिना च युक्तत्वादर्द्धसम्पत्तिर्मूर्च्छेत्युच्यते इत्यनवद्यम् ॥१०

एवमुद्देश्यत्वेन प्रथमं जिज्ञास्यं त्वम्पदार्थं स्वप्रकाशं सर्वा-

वस्थानिर्मुक्तं निर्विशेषं संशोध्य तज्जिज्ञासोपरमानन्तरं जिज्ञास्यं विधेयं तत्पदार्थमवसरसंगत्या शोधयितुं तस्य निर्विशेषत्वमाह—

( ५ ब्रह्मणो नीरूपत्वाधिकरणम् । सू० ११ )

न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

सर्वकामः सर्वकर्मा सर्वगन्धः सर्वरस इत्यादिना ब्रह्मणः सविशेषत्वं श्रूयते । अस्थूलमनण्वित्यादिना निर्विशेषत्वं च । तत्र संशयः । किमुभयश्रुत्यनुसारादुभयरूपं ब्रह्म, उतैकरूपम् । एकरूपमित्यत्रापि सविशेषं निर्विशेषं वेति पूर्वपक्षे, द्विरूपं ब्रह्म-ध्येयम् । सिद्धान्ते निर्विशेषमेवेति फलभेदः । तत्र यथा मूर्च्छा-वस्थाया विरुद्धसुषुप्तिमरणावस्थोभयधर्मवत्त्वं तथा ब्रह्मणोऽपि उभयरूपत्वं भवतु । श्रुतत्वाच्चेति दृष्टान्तेन पूर्वपक्षे, सिद्धान्तः । न तावत् स्वतः परस्य ब्रह्मण उभयलिङ्गम् उभयरूपत्वं संभवति । एकस्य वस्तुनो द्वैरूप्यायोगात् । न ह्येकमेव वस्त्वेकदा तद्वत्तदभाववच्च दृष्टम् । एतेन मूर्च्छादृष्टान्तो निरस्तः । वैलक्षण्या-त् । नापि स्थानतः उपाधितः परस्योभयरूपत्वं तात्त्विकं युक्तम् । अग्निसंयोगमात्रेण जलस्योष्णस्वभावत्वादर्शनात् । तस्मादेकरूपं ब्रह्म । तदप्येकरूपत्वं निर्विशेषत्वमेव ॥ हि यतः सर्वत्र वेदान्तेषु ब्रह्मपरेषु अशब्दमस्पर्शमित्यादिषु सविशेषत्वनिरासेन ब्रह्मो-पदिश्यते । तस्मान्निर्विशेषमेवैकरूपं ब्रह्म ॥ ११ ॥

न भेदादितिचेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

ननु न निर्विशेषमेव ब्रह्म । कुतः ॥ भेदात् ॥ प्रतिविद्यं ब्रह्मण आकारभेदस्य भेदात् कस्याञ्चिद्विद्यायां चतुष्पाद्ब्रह्मोप-दिश्यते कस्याञ्चित् षोडशकलं कस्याञ्चित् त्रैलोक्यशरीरं वैश्वा-नराख्यम् । तस्मात् सविशेषमपि श्रुतिसामर्थ्यादङ्गीकर्त्तव्य-

मितिचेन्न। प्रत्येकं प्रत्युपाधि अतद्वचनात्। ब्रह्मणः परस्याऽभेदस्यैव श्रवणादित्यर्थः। यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳशारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेत्यादिश्रुतौ ब्रह्मणः सर्वोपाधिषु पृथिव्यबादिष्वभेदः श्रूयते। अस्यां पृथिव्यां तेजोमयः स्वप्रकाशो नाशरहितो यः पुरुषो यश्चात्मानं देहमधिकृत्य वर्तमानः शारीरो जीवस्तावुभौ सर्वेषां भूतानामुपकारकौ सन्तौ, मधुशरीरपृथिव्यवच्छिन्नः पुरुषोऽयमेव योऽयमात्मा सर्वकारणभूत इति श्रुत्यर्थः॥ १२॥

अपिचैवमेके॥ १३॥

किञ्चैके शाखिन एवं भेदनिन्दापूर्वकमभेदमेव ब्रह्मणः समामनन्ति। मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति शास्त्राचार्यसंस्कृतमनसैवेदं ब्रह्म ज्ञातव्यम्। ज्ञाते त्विह ब्रह्मणि किञ्चिदपि भेदजातं नास्ति। यस्त्वविद्याकृतनामरूपं सदिति पश्यति स मरणान्मरणं पुनः प्राप्नोतीत्यर्थः॥ १३॥

ननु सगुणनिर्गुणपरश्रुतिद्वये सति कथं निर्गुणे ब्रह्मणि पक्षपातस्तत्राह—

अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥

रूपादिहीनं निर्विशेषमेव ब्रह्मावधारयितव्यं, न सविशेषम्। कुतः। अस्थूलमित्यादिनिषेधशास्त्रस्य निर्गुणब्रह्मप्रधानत्वादित्यर्थः। उपासनावाक्यानां सविशेषे तात्पर्याभावात् तात्पर्याङ्गीकारे वाक्यभेदापत्तेरितरेषां सविशेषवाक्यानां प्रत्यक्षादिसिद्धप्रपञ्चानुवादकत्वेन, निर्विशेषपरत्वादनन्यत्वमित्यादिना प्रपञ्च-

मिथ्यात्वसाधनाच्च, न सविशेषत्वं ब्रह्मणः प्रामाणिकमिति भावः ॥ १४ ॥

ननु तर्हि सविशेषश्रुतीनां का गतिरत आह—

प्रकाशवच्चाऽवैयर्थ्यात् ॥ १५ ॥

यथा सूर्यादिप्रकाशो वक्रवंशाद्युपाधिना वक्र इव दीर्घ इव ऋजुरिव भवति तद्ब्रह्मापि पृथिव्याद्युपाधिवशात्तत्तदाकारमिव भवति तादृश औपाधिकाऽऽकारः, सविशेषश्रुतीनां गतिरिति तासामवैयर्थ्यान्निरर्थकत्वाऽभावान्न विरोध इत्यर्थः ॥ १५ ॥

ननु कीदृशं निर्विशेषं ब्रह्मेत्यत आह—

आह च तन्मात्रम् ॥ १६ ॥

तन्मात्रं चैतन्यैकरसं निर्विशेषं श्रुतिराह । यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति । एकरसे दृष्टान्तः । यथा लोके सैन्धवघनो लवणमूर्तिविशेषोऽन्तर्बाहिश्च विलक्षणरसशून्यः सर्वो लवणैकरसस्तथाऽयमात्माऽन्तर्बहिश्च भेदरहितः सर्वः स्वप्रकाशचिदेकतानस्तिष्ठतीति श्रुत्यर्थः ॥ १६ ॥

किञ्च प्रपञ्चनिषेधमुखेन, ब्रह्मण उपदेशाद् ब्रह्म निर्विशेषं, सविशेषत्वे सविशेषवाक्यैरेव तत्सिद्धेर्निर्विशेषोपदेशाऽनर्थक्यमेव स्यादित्याह—

दर्शयति चाऽथो अपि स्मर्यते ॥ १७ ॥

अथात आदेशो नेति नेतीत्यादिश्रुतिर्निषेधमुखेनैव ब्रह्मदर्शयति । पञ्चभूतोक्त्याऽऽनन्तर्यमथशब्दार्थः । तस्याः परब्रह्मधीहेतुत्वमतःशब्दार्थः । इतिशब्दौ पूर्वोक्तपञ्चभूतपरामर्शकौ । तन्निषेधावधिभूतः परमात्मेत्यादेश उपदेश इत्यर्थः । सूत्रगता-

ऽथोशब्दस्तथार्थः । तथा स्मर्यते च निषेधमुखेन ब्रह्मेत्यर्थः ॥

ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।

अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते, इति भगवद्गीतायाम् आदिमत् कार्यमस्य न विद्यत इत्यनादिमत् कार्यरहितमित्यर्थः। न सन्न कारणं कस्यचिन्न कार्यं स्वयं कस्याचिदित्यर्थः ॥ १७ ॥

अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यत एव परप्रतिषेधोपदेश्यो निर्विशेषोऽयमात्माऽत एवौपाधिकं सविशेषत्वमादाय जलसूर्यकादिवादित्युपमा गृह्यते ॥ यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मेति ॥

एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।

एकधा बहुधा चैव दृश्यते जलचन्द्रवद्, इति ॥

ज्योतिःस्वभावो विवस्वानेकोऽपि तत्तत्पात्रगता भिन्ना अपोऽनुगच्छन् बहुधा क्रियते एवमयमात्मा देवः स्वप्रकाशोऽजः कूटस्थनित्य एकोऽपि भिन्नेषु क्षेत्रेषु अनुगच्छन्नुपाधिना भेदरूपः क्रियते इति योजना । तथाचैतद्दृष्टान्तबलादपि ब्रह्मणो निर्विशेषत्वमिति सूत्रकृत्तात्पर्यम् ॥ १८ ॥

दृष्टान्तवैषम्यं शङ्कते—

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

ननु यथाऽम्बुसूर्यादिभ्यो मूर्तिभ्यो भिन्नं दूरस्थं प्रतिबिम्बोपाधिभूतमुपलभ्यते तद्व्द्व्यापकादात्मनो दूरस्थोपाधेरग्रहणादात्मनो मूर्त्तत्वाभावाच्च विषमो दृष्टान्त इति न तथात्वं न सूर्यादितुल्यत्वमिति शङ्कार्थः ॥ १९ ॥

तत्रोत्तरमाह—

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥२०॥

यथा सूर्यप्रतिबिम्बस्य जलान्तरर्भूतस्य जलगतवृद्धिह्रासचलनादेर्भाक्त्वं न वास्तवमेवमविकृतस्य परमात्मनो देहाद्युपाध्यन्तर्भावाद्देहगतवृद्धिह्रासादिभाक्त्वं न स्वाभाविकमित्येतावता अंशेनोभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्याद्भवति सूर्यादिदृष्टान्तः । न हि सर्वात्मना साम्यं दृष्टान्तदार्ष्टान्तिकयोः शक्यते वक्तुम् । दृष्टान्तत्वविरोधादिति भावः ॥ २० ॥

किञ्चाऽऽगमसमधिगम्येऽर्थे न चोद्यमित्याह—

दर्शनाच्च ॥ २१ ॥

परस्यैव ब्रह्मणो देहान्तरानुप्रवेशस्य प्रतिबिम्बभावरूपस्य श्रुतौ दर्शनादित्यर्थः । पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति श्रुतिः पुरः शरीराणि द्विपादयुक्तानि चतुष्पादयुक्तानि च चक्रे। कृत्वा पुरश्चक्षुराद्यभिव्यक्तेः पूर्वं स पुरुष ईश्वरः पक्षी लिङ्गशरीरं भूत्वा पुरः शरीराणि सृष्टान्याविशदित्यर्थः । तस्मान्निर्विशेषमेव चैतन्यैकरसं ब्रह्मेति सिद्धम् ॥ २१ ॥

ननु निषेधश्रुतिभिर्निर्विशेषं ब्रह्म सिद्ध्यतीति यदुक्तं तदयुक्तम् । ताभिर्ब्रह्मणोऽपि निषिद्धत्वादित्याक्षेपसङ्गत्याऽधिकरणमारभ्यते—

( ६ ब्रह्मणो निराकरणाविषयताधिकरणम् । सू० ९ )

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥२२॥

तत्र पूर्वपक्षे ब्रह्मासिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति बोध्यम्। द्वे वा व ब्रह्मणो रूपे मूर्त्तं चैवामूर्तं चेत्युपक्रम्य पञ्चभूतात्मकं रूपद्वयं तेजोऽबन्नात्मकं भूतत्रयं मूर्त्तं स्थूलात्मकं प्रत्यक्षं, वाय्वा-

ऽऽकाशात्मकं भूतद्वयं परोक्षममूर्त्तमिति द्वेधा विभज्य तत्र मूर्त्तस्य सूर्यश्चक्षुर्गोलकं च कार्यं सारः, अमूर्त्तस्य तु सूर्यान्तर्वर्त्ती कारणात्मको हिरण्यगर्भश्चक्षुर्गोलके दक्षिणे चक्षूरूपेण वर्तमानः सार इति चोक्त्वा तस्य कारणात्मकालिङ्गशरीररूपस्य हिरण्यगर्भस्य पुरुषशब्दवाच्यस्य वासनामयानि स्वाप्नरूपाणि मायामयानि दर्शयित्वा रूपद्वयवतो ब्रह्मणः स्वरूपं बोधयितुमिदमारभ्यते । अथात आदेशो नेति नेति । न ह्येतस्मादिति नेत्यन्यत् परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमिति । उपक्रमे वावशब्द एवकारार्थः । सपरिकररूपद्वयोपन्यासानन्तर्यमथशब्दार्थः । रूपद्वयोपन्यासस्य ब्रह्मज्ञानहेतुत्वं, ब्रह्मणो वक्तव्यत्वेन परिशेषो वाऽतः—शब्दार्थः । इतिशब्देन ब्रह्मणो रूपद्वयं सपरिकरं यदुपन्यस्तं तत् परामृश्यते । इतिशब्देन परामृष्टं सर्वं नञा वीप्सया निषिद्ध्यते । नेति नेतीति वीप्सया विषयजातस्य सर्वस्य निषेधे ह्यविषयः प्रत्यगात्मा निषेधावधिभूत इति निर्विचिकित्सं ज्ञानं भवति । एवं नेति नेतीति ब्रह्मोपदेशं कृत्वा नेति नेतीत्युपदेशस्य कोऽर्थ इत्याकाङ्क्षायां, तमेवोपदेशं निर्वक्ति । न ह्येतस्मादिति । हि यस्माद् एतस्मान्नेति नेतीत्यादिष्टाद् ब्रह्मणोऽन्यद्व्यतिरिक्तं नास्ति ब्रह्मैव तु परमस्ति तस्मान्नेतीत्युच्यते इति निर्वचनवाक्यस्यार्थः । यद्वा नेति नेतीति यः प्रपञ्चनिषेधरूप आदेशः कृतः स एतस्मादित्यनेन परामृश्यते । एतस्मान्नेति प्रपञ्चरूपाद्ब्रह्मोपदेशनादन्यत् परमुपदेशनं न ह्यस्तीत्यर्थः । ब्रह्मणो नामधेयकथनव्याजेनापि स्वस्वरूपमाह । अथेति । नेति नेतीति निषेधस्य ब्रह्माविषयत्वाऽभावसूचनार्थोऽथशब्दः । नामधेयमाह । सत्यस्य सत्यमिति । तद्व्याचष्टे श्रुतिः । प्राणा इति । प्राणशब्देन लिङ्गशरीरमुच्य-

ते । तस्य सत्यत्वं, स्थूलदेहापेक्षया स्थायित्वं द्रष्टव्यम् । एष परमात्मा सत्यस्यापि परं सत्यमिति वस्तुगतिः । तत्र नेति नेतीति निषेधस्य को वा विषय इति सन्दिह्यते । किं प्रपञ्चो ब्रह्म चेत्युभयमपि निषिद्ध्यते, उतैकम् । एकमित्यत्रापि किं प्रपञ्चो निषिद्ध्यते, उत ब्रह्मेति । तत्र नियामकाऽभावादुभयमपि प्रतिषिद्ध्यते इति प्राप्तम् । यद्वा निरधिष्ठाननिषेधायोगादेकं ब्रह्मैव निषिद्ध्यते । प्रपञ्चस्य प्रत्यक्षसिद्धत्वेन, निषेधायोगादिति प्राप्ते ब्रूमः। ब्रह्मणो यद्रूपद्वयं सपरिकरं प्रकृतं प्रधानमेतावत्त्वमियत्तापरिच्छिन्नं तत् प्रकृतैतावत्त्वं तदेव प्रतिषेधति, नेति नेत्यादिश्रुतिः । इतिशब्दस्य प्रधानत्वेन प्रकृतपरामर्शित्वात् । ब्रह्म तु न प्रधानत्वेन प्रकृतम् । द्वे वा व ब्रह्मणो रूपे इति रूपद्वयात्मकजगदुपसर्जनत्वेनैवोक्तत्वादितश्च ब्रह्मणो न निषेधो यस्मात्ततः प्रपञ्चनिषेधाऽनन्तरं भूयो ब्रह्मास्तीति ब्रवीति । न हीत्यादिपरमस्तीत्यन्तं,निर्वचनवाक्यम् । तस्मादित्यर्थः । ब्रह्मणो निषेधे किमस्तीति ब्रूयादिति भावः । निर्वचनवाक्यस्य द्वितीयव्याख्यायां तु ततः प्रपञ्चनिषेधस्य परस्तादथ नामधेयमित्यादिवाक्यं ब्रह्म ब्रवीत्यतो, नेत्यादिवाक्येन निषेधमात्रं न ज्ञेयं, किन्तु तेन निषेधेन भावरूपं ब्रह्म ज्ञातव्यमिति सूत्रभागस्यार्थः । न च प्रपञ्चनिषेधे प्रत्यक्षविरोधः । तस्य व्यावहारिकप्रामाण्यादित्यनवद्यम् ॥२२॥

ननु यदि ब्रह्मास्ति तर्ह्युपलभ्येत, तत्राह—

तदव्यक्तमाह हि ॥ २३ ॥

एतद् ब्रह्माव्यक्तं श्रुत्यातिरिक्तमानागोचरं, हि यतः श्रुतिराह । न चक्षुषा गृह्यते नाऽपि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यते इत्यादिना ब्रह्मणः प्रत्यक्षाद्यगोचरत्वम् । अन्यैर्देवैरिन्द्रियान्तरैरित्यर्थः ।

नेति नेतीति य आत्मा व्याख्यातः । स एषोऽगृह्यः अग्राह्यः । यस्मान्न हि गृह्यते, ग्रहणायोग्य इत्यर्थः ॥ २३ ॥

तर्हि सर्वदा ब्रह्मग्रहणाभावे मोक्षो न स्यादित्याशङ्क्याह—

अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अपिचैनमात्मानं संराधने समाध्यवस्थायां कृतार्थाः पश्यन्तीति, प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामवगम्यते । तथाहि श्रुतिः । पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन्निति । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान इति। स्वयम्भूः परमात्मा खानि श्रोत्रात्मकाऽऽकाशोपलक्षितानि इन्द्रियाणि पराञ्चि अनात्मविषयाणि व्यतृणत् हिंसितवान्। इन्द्रियाणां हिंसाऽनात्मविषयतया सर्जनमेव। तथा सर्जने गमकमाह । तस्मादिति । ननु यदीन्द्रियः पराञ्चमेवार्थं पश्यति, नान्तरात्मानं, कथं तर्ह्यात्मज्ञानं, तत्राह । कश्चिदिति । कश्चिद्धीरो विवेकी आवृत्तचक्षुः, संयतेन्द्रियो मोक्षमिच्छन् प्रत्यगात्मानं, समाधौ ईक्षितवानित्यर्थः । ज्ञानस्य करणव्युत्पत्त्या, अन्तःकरणस्य प्रसादेन रागादिराहित्येन विशुद्धसत्त्वः प्रत्यक्प्रवणान्तःकरणः, ततस्तु विशुद्धसत्त्वत्वाद्धेतोस्तमात्मानं निरवयवं ध्यायमानः पश्यति, साक्षात्करोतीत्यर्थः । स्मृतिरपि—

यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः, इति ॥

जितश्वासा इति प्राणायामपराः । योगात्मत्वं ध्यानात्मकं योगगम्यत्वम् ॥ २४ ॥

ननु जीवेश्वरयोर्ध्यातृध्येयभावाङ्गीकारे भेदः स्यादित्याशङ्क्याह—

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥२५॥

यथा सौरः प्रकाश आकाशो वाङ्गुल्याद्युपाधौ कर्मणि भिन्न इव वक्र इव भाति, वस्तुतस्त्वेकरूपस्तद्वत्प्रकाश आत्माऽपि ध्यानज्ञानादौ कर्मणि उपाधौ भिन्न इव वक्र इव भाति । वस्तुतस्त्वऽवैशेष्यमेकरूपत्वमेवाऽऽत्मनः । कुतः ? ॥ अभ्यासात् ॥ तत्त्वमसीत्याद्यभेदश्रुत्यभ्यासादित्यर्थः ॥ २५ ॥

अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥

अतो भेदस्यौपाधिकत्वाद्विद्यया भेदं निरस्य जीवोऽनन्तेन परमात्मना एकतां गच्छति । तथाहि लिङ्गमपूर्वार्थज्ञापकं श्रुतिजातं, ब्रह्मैव सन् ब्रह्माप्येतीत्यादि ॥ २६ ॥

एवं जीवब्रह्मणोः पारमार्थिकमभेदमुक्त्वा स्वमतशुद्ध्यर्थं, भेदाऽभेदपक्षमुपन्यस्यति—

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

ध्यातृध्येयभावादिना भेदस्याभेदस्य च श्रुतौ व्यपदेशाज्जीवेश्वरयोर्भेदाऽभेदौ भवतः । कुतः । तुशब्दः सिद्धान्तवैषम्यद्योतनार्थः ॥ अहिकुण्डलवत् ॥ कुण्डलमहेः संस्थानविशेषः । यथा अहिकुण्डलयोरहित्वेनाऽभेदः कुण्डलत्वेन भेदस्तद्वदित्यर्थः॥२७॥

धर्मभेदेन भेदाभेदाविति पक्षमुक्त्वा एकधर्मावच्छेदेनैव भेदाभेदाविति पक्षमाह—

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

यथा प्रकाशः सौरस्तदाश्रयश्च सविता तयोर्नात्यन्तभेदस्तेजस्त्वाऽविशेषात् । तथापि भिन्नत्वेन प्रतीयते । तथाचैक-

तेजस्त्वावच्छेदेनैव प्रमाणबलाद्भेदाभेदौ यथा, तद्वज्जीवेश्वरयोर्भेदाऽभेदावित्यर्थः ॥ २८ ॥

ननु भेदस्य पारमार्थिकत्वे ज्ञानान्निवृत्तेरसम्भवान्मोक्षो न स्यादेकावच्छेदेन तयोरेकत्राङ्गीकारे लोके विरोधकथैव न स्यादित्यादिदोषं परमते मत्वा, स्वसिद्धान्तमाह—

पूर्ववद्वा ॥ २९ ॥

प्रकाशादिवच्चावैशेष्यमित्यत्र सर्वोऽपि भेद औपाधिकः, अभेदः पारमार्थिक इति यथोक्तं स एव सिद्धान्तोऽभ्युपेयः ॥ २९ ॥

प्रतिषेधाच्च ॥ ३० ॥

नान्योऽतोऽस्ति द्रष्टेत्यादिशास्त्रेण परमात्माऽतिरिक्तस्य चेतनस्य, नेतीत्यादिवाक्यैः प्रपञ्चस्य च प्रतिषेधाद् ब्रह्माद्वितीयमित्ययमेव सिद्धान्त इत्यर्थः । तस्माच्छ्रुतिबलान्निर्विशेष एकः परमात्मेति सिद्धम् ॥ ३० ॥

ननु, नेति नेतीति ब्रह्मातिरिक्तं वस्तु निषेध्यमित्युक्तम् । तदयुक्तम् । ब्रह्मणः सेतुत्वोन्मानादिव्यपदेशेन वस्त्वन्तरसत्त्वावगमात् । द्युभ्वाद्यधिकरणे सेतुत्वस्य गौणत्वेन नीतत्वेऽप्युन्मानाऽऽदीनां गतेरदर्शनादित्याक्षिपति—

( ७ ब्रह्मातिरिक्तवस्तुनिराकरणाधिकरणम् । सू० ७ )

परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

तत्र पूर्वपक्षे पूर्वाधिकरणासिद्धान्तासिद्धिः फलम् । सिद्धान्ते तत्सिद्धिरिति बोध्यम् । अत्र ब्रह्मातिरिक्तं वस्त्वस्ति न वेति संशये, अस्तीत्याह ॥ परमिति ॥ अतो ब्रह्मणः परं वस्त्वस्ति । अथ य आत्मा स सेतुरिति ब्रह्मणः सेतुत्वव्यपदेशात् । तथाच ब्रह्म सद्वितीयं सेतुत्वाद्, रामसेतुवदित्यनुमानमुक्तम् । ब्रह्म

चतुष्पादिति श्रुतावुन्मानव्यपदेशादेतावदिदमिति परिच्छिन्नत्व-व्यपदेशाद्विश्यसमीपस्थक्रयसाधनकार्षापणादिवत् सद्वितीयं ब्रह्मे-त्युन्मानशब्दार्थः । चतस्रो दिश एकः पादः पृथिव्यन्तरिक्षं द्यौः समुद्र इति द्वितीयः पादः, अग्निः सूर्यश्चन्द्रमा विद्युदिति तृतीयः पादः, चक्षुः श्रोत्रं वाग् मन इति चतुर्थ इति श्रुतावुपासनार्थं चतुष्पाद्ब्रह्मेत्युक्तमिति मन्तव्यम् । सुषुप्तौ प्राज्ञेनात्मना शारीरः संपरिष्वक्त इत्यादिना ब्रह्मणः संबन्धव्यपदेशात्, संबन्धत्वेन हेतुना, घटादिवत् सद्वितीयत्वमिति संबन्धार्थः । आदित्ये हिरण्मयं पुरुषमीश्वरं व्यपदिश्य ततो भेदेनाऽक्षिपुरुषस्य व्यप-देशात् परमात्मा सद्वितीयः ॥ ३१ ॥

इति प्राप्ते, सेतुत्वादिहेतोरसिद्धिमाह—

सामान्यात्तु ॥ ३२ ॥

मृद्दार्वादिमये हि सेतुशब्दो रूढो लोके । न हि तादृशं, सेतुत्वं ब्रह्मणोऽस्ति । किन्तु सेतुर्यथा जलस्य व्यवस्थापक, एवं ब्रह्मणोऽपि सकलजगन्मर्यादाव्यवस्थापकत्वेन प्रसिद्धसेतुसामा-न्यात् सेतुत्वव्यपदेश इत्यर्थः । तुशब्दः पूर्वपक्षनिरासार्थः । एक-विज्ञानात्सर्वविज्ञानप्रतिज्ञाविरोधः सर्वेषामनुमानानां बोध्यः॥३२

उन्मानव्यपदेशोऽपि न मुख्य इति द्वितीयं हेतुमप्यसिद्ध्या दूषयति —

बुद्ध्यर्थः पादवत् ॥ ३३ ॥

ब्रह्म चतुष्पादितिश्रुतावुन्मानव्यपदेशो, बुद्ध्यर्थः उपासना-ऽर्थः ॥ निर्विशेषस्य बुद्धिस्थत्वायोगादुपासनाद्वारा बुधिस्थत्वा-ऽयोगादुन्मानव्यपदेशो न मुख्य इत्यर्थः ॥ पादवत् ॥ यथा ब्रह्मप्रतीकस्य मनसो वाग्घ्राणचक्षुःश्रोत्राण्युपासनार्थं पादत्वेन-

व्यपदिश्यन्ते तद्वदित्यर्थः ॥ ३३ ॥

अवशिष्टहेतुद्वयमप्यसिद्ध्या दूषयति—

स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

सुषुप्तौ ब्रह्मणो जीवेन न घटस्य पटेनेव सम्बन्धः, किन्तु, स्थानविशेषात् ॥ बुद्ध्याद्युपाधिविशेपात् । प्राप्तस्य विशेषविज्ञानस्योपाध्युपशमादुपशमेऽभिव्यक्तोपाधिप्रयुक्तभेदाभाव एव जीवपरयोः सुषुप्तौ सम्बन्ध इति व्यपदिश्यते। अक्ष्यादित्यपुरुषयोर्भेदव्यपदेशोऽप्यक्ष्यादित्यरूपस्थानविशेपापेक्षया प्रकाशादिवत् । यथा सौरः प्रकाश आकाशो वा अङ्गुलियोगाद् घटसूचिपाशाद्युपाधिविशेपादसम्बन्ध इव भिन्न इव भाति । उपाधिविगमे तदानीं सम्बद्ध इवाऽभिन्न एव व्यपदिश्यते तद्वदित्यर्थः । तस्माज्जीवपरयोः सम्बन्धो भेदश्चोपाधिनिमित्तो न स्वाभाविकः॥३४॥

ननु मुख्य एवाऽस्तु तत्राह—

उपपत्तेश्च ॥ ३५ ॥

न मुख्यः सम्बन्धो जीवपरयोः सुप्तौ सम्भवति । स्वमपीतो भवतीति स्वरूपस्यैव सम्बन्धत्वव्यपदेशात् स्वरूपस्य च सदातनत्वात् सुषुप्तौ गौणसम्बन्धत्वमेव । एवं भेदोऽपि न मुख्यः । श्रुतिसहस्रविरोधादित्युपपत्तिवशान्नैमित्तिक एवेत्यर्थः ॥ ३५ ॥

एवं सेत्वादीन् हेतून्निराकृत्य ब्रह्मणोऽद्वितीयत्वं हेत्वन्तरेणाऽऽह—

तथान्यप्रतिषेधात् ॥ ३६ ॥

यथा सेतुत्वादिहेतुभ्यो न वस्त्वन्तरप्रमा तथा, अहमेवाऽधस्तादात्मैवाऽधस्तादित्यादिवाक्यैरन्यस्य वस्तुनः प्रतिषेधाद्द्वितीयमेव ब्रह्मेत्यर्थः ॥ ३६ ॥

ननु ब्रह्मणोऽद्वितीयत्वे सर्वगतत्वं कथमत आह—

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

अनेन सेतुत्वादिव्यपदेशमुख्यत्वस्य वस्त्वन्तरस्य च प्रतिषेधेन ब्रह्मणः सर्वगतत्वं सिद्धम् । अप्रतिषेधे प्रसिद्धसेतुवद्ब्रह्मणोऽसर्वगतत्वं प्रसज्ज्येत । सर्वगतत्वे मानमाह॥आयामेति॥ आयामशब्दो व्यापकत्ववाचकः । आकाशवत् सर्वगतश्च नित्य इत्यादिः शब्दः । आदिपदेन, नित्यः सर्वगतः स्थाणुरित्यादिस्मृतिरुक्ता । तस्मादद्वितीयस्य ब्रह्मण आविघ्नकं सर्वमादाय श्रुतिस्मृतिभ्यां सर्वगतत्वं सिद्धम् ॥ ३७ ॥

ननु ब्रह्मातिरिक्तवस्तुनो निषेधे ब्रह्मणो निर्विशेषत्वेन कर्मफलदातृत्वं न स्यादित्याक्षेपे व्यावहारिकफलदातृत्वमविरुद्धमित्याह—

( ८ कर्माराधितेश्वरस्यैव फलदातृत्वाधिकरणम । सू० ४ )

फलमत उपपत्तेः ॥ ३८ ॥

पूर्वं निर्विशेषं तत्पदलक्ष्यं ब्रह्मोक्तमिदानीं तत्पदवाच्यं विचार्यत इति पादसङ्गतिः । पूर्वपक्षे कर्मण एव फलदातृत्वाद्ब्रह्मणोऽकिञ्चित्करत्वसिद्धिः फलम् । सिद्धान्ते ईश्वरस्यैव फलदातृत्वसिद्धिरिति भेदः ॥ किं सर्वस्य जन्तोः कर्मण एव फलं भवति, उत ईश्वरादितिसन्देहे, अग्रे पूर्वपक्षं निराकरिष्यन् सिद्धान्तमाह ॥ फलमिति॥ अतः परमात्मनः फलं सर्वस्य लोकस्य भवितुमर्हति । क्षणिकात् कर्मणः, फलासम्भवेनेश्वरस्यैव फलदातृत्वोपपत्तेरित्यर्थः ॥ ३८ ॥

श्रुतत्वाच्च ॥ ३९ ॥

स वा एष महानज आत्माऽन्नादो वसुदान इतीश्वरफल-

हेतुत्वस्य श्रुतत्वाच्चेश्वरः फलदातेत्यर्थः । अन्नम् आसमन्तात् प्राणिभ्यो ददातीत्यन्नादः । वसुदानो धनदाता ॥ ३९ ॥

शङ्कते—

धर्मं जैमिनिरत एव ॥ ४० ॥

यतः श्रुत्युपपत्तिभ्यामीश्वरं फलदातारं मन्यते सिद्धान्ती। अत एव श्रुत्युपपत्तिभ्यां धर्मं फलदातारं जैमिनिराचार्यो मन्यते । तथाहि । स्वर्गकामो यजेतेति विधिविषयस्य यागस्य स्वर्गसाधनत्वं श्रुतम् । तन्निर्वाहाय श्रुतिप्रमाणकैरपूर्वाख्यो व्यापारो यागस्योत्तराऽवस्थारूपः कल्पनीय इति यागादिधर्म एव फलदाता । ईश्वरस्य सर्वसारणस्य विचित्रफलदातृत्वाऽनुपपत्तेरिति ॥ ४० ॥

समाधत्ते-

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

बादरायणस्त्वाचार्यः पूर्वोक्तमीश्वरं फलदातारं मन्यते । तुरुक्तशङ्कानिरासकः । कर्मापूर्वं वा स्वस्वरूपस्वविनियोगसाक्षात्कारवदाधिष्ठितं भवितुमर्हति, अचेनत्वाद् मृदादिवदित्यनुमानेन सम्भाविते़ऽर्थे श्रुतिस्मृती प्रमाणयति । हेतुव्यपदेशादिति ॥ एष एव साधु कर्म कारयति, अन्नादो वसुदान इत्यादिश्रुत्या, लभते च ततः कामान् मयैव विहितान् हि तानित्यादिस्मृत्या चेश्वरस्य धर्माधर्मयोस्तत्फले च हेतुत्वेन व्यपादिष्टत्वादित्यर्थः । तस्मात्तत्तत्कर्मसापेक्षादीश्वरादेव सर्वेषां फलसिद्धिरिति सिद्धम् ॥ ४१ ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

## तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

एवन्तत्पदलक्ष्यवाच्यात्मकं निर्गुणं सगुणं ब्रह्म ज्ञेयं ध्येयं व्याख्यातमिदानीं तज्ज्ञानं किम्प्रकारकमित्यपेक्षायां तद्विचाराय पादान्तरमारभ्यते—

( १ सर्ववेदान्तज्ञानोपासनाया एकत्वाधिकरणम्। सू० ४ )

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥**

पूर्वपादे वाक्यार्थज्ञाने कारणीभूततत्त्वम्पदार्थनिरूपणं कृतम्। अस्मिन् पादे वाक्यार्थो निर्धार्यत इत्यनयोः पादयोर्हेतुहेतुमद्भावः सङ्गतिः। सगुणविद्यायाः सत्त्वशुद्धिद्वारा वाक्यार्थज्ञानोपयोगित्वात्तद्वाक्यार्थचिन्ता क्रियते इति मन्तव्यम्। तत्र तावत्सगुणब्रह्मप्राणपञ्चाग्न्यादिविषयेषूपासनेषु भेदाभेदचिन्ताऽऽरभ्यते। किं प्रतिवेदान्तं प्राणोपासनं पञ्चाग्न्युपासनमित्येवञ्जातीयकमुपासनं भिद्यते, न वेति पूर्वपक्षे, उपासनानां भेदादेकवेदान्तोक्तोपासनस्थगुणानां वेदान्तान्तरोक्तोपासनेऽनुपसंहारः। सिद्धान्ते उपासनैक्याद् गुणोपसंहारे तदुपासनात्। सत्त्वशुद्धिद्वारा वाक्यार्थज्ञाने मुक्तिरिति फलिष्यति। द्रव्यदेवते यथा यागस्वरूपं तथोपासनस्य उपास्यं रूपम्। तथाच यथा आमिक्षावाजिनयागयोर्द्रव्यरूपभेदाद् भेदः। एवमुपासनानामुपास्यरूपभेदाद्भेदो न्याय्यः। तथाहि। क्वचित् पञ्चाग्निविद्यायां षष्ठोऽग्निरुपास्यः श्रूयते, क्वचित्तु शाखायां पञ्चैवाऽग्नय इत्येवंरूपेण तत्र तत्रोपासने रूपभेदावगमादुपासनं भिद्यते इति प्राप्ते, ब्रूमः। सर्वैर्वेदान्तैः प्रत्ययं प्रतीयमानान्युपासनानि न भिद्यन्ते। कुतः। चोदनाद्यविशेषात्। आदिपदेन कर्मभेदे हेतुत्वेनोपन्यस्ताः संयोगरूपाः समाख्या गृह्यन्ते। चोदना-

सँय्योगरूपसमाख्यानामविशेषादित्यर्थः । यथा सर्वशाखास्व-ऽग्निहोत्रं जुहोतीति चोदनाया अविशेषान्नित्याऽग्निहोत्रमेकं तथा यो ह वै ज्येष्ठं च श्रेष्ठं च प्राणं वेदेत्यादिचोदनायाश्छन्दोगानां वाजसनेयिनां चाविशिष्टत्वादेकैव प्राणविद्या सर्वेषां शाखिनामिति गम्यते । यः प्राणोपासकः स ज्येष्ठश्च श्रेष्ठश्च स्वानां भवतीति फलसंयोगस्य सर्वत्राविशिष्टत्वाच्च न विद्याया भेदः । ज्येष्ठत्वादिगुणकप्राणस्योपास्यरूपस्य सर्वत्राविशिष्टत्वाच्च । तथा प्राणविद्येतिसमाख्यायाः सर्वत्राविशेषाच्च विद्यैक्यमिति ॥ १ ॥

भेदान्नेतिचेन्नैकस्यामपि ॥ २ ॥

ननु वाजसनेयिनः पञ्चाग्निविद्यायां, षष्ठं प्रसिद्धमाग्निमुपास्यत्वेनाऽऽमनन्ति । तस्य मृतस्य यजमानस्य ऋत्विग्भिररण्यं प्रापितस्य प्रसिद्धाग्निरेवाऽग्निर्भवतीति । छन्दोगास्तु पञ्चाऽग्नीन् वेदेत्यामनन्ति, न तु षष्ठमग्निम् । तथाच रूपभेदादामिक्षावाजिनयागयोरिव शाखाद्वये पञ्चाग्निविद्याया भेदो न्याय्य इत्युक्तमितिचेन्न । यत एकस्यामपि विद्यायामयं रूपभेद उपपद्यते । तथाहि । ये हि द्युलोकादयः पञ्चाग्नयो वाजसनेयिशाखायामुक्तास्त एव छान्दोग्ये प्रत्यभिज्ञायन्ते । तथाच न विद्याभेदो युक्तः । न च षष्ठाग्नितदभावाभ्यां भेदः । एकस्मिन्नेवातिरात्रे षोडशीग्रहणतदभावयोर्दर्शनात् । यद्वाऽनेकगुणप्रत्यभिज्ञाऽनुरोधाच्छान्दोग्ये षष्ठाग्नेरुपसंहारः कर्त्तव्यः । नचाऽग्निषु पञ्चत्वसंख्याश्रवणविरोधः । तस्य स्वबुद्ध्या सम्पादिताऽग्निपरत्वादिति भावः ॥ २ ॥

ननु ब्रह्मविद्याप्रतिपादकमुण्डकाध्ययने शिरस्यङ्गारपात्रधारणरूपं व्रतं कर्त्तव्यत्वेनोपदिश्यते । इतरोपनिषदध्ययनकाले तु शिरोव्रतं नापेक्ष्यते, तथाच मुण्डकस्थविद्यापेक्षया इतरोप-

निषन्निष्ठविद्याया भेदो युक्तः । न ह्येकैव विद्या शिरोव्रतरूप-धर्ममपेक्षते नापेक्षते चेति युक्तम् । अतो धर्मभेदाद्विद्याभेद इत्या-शङ्क्याह—

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च
सववच्च तन्नियमः ॥ ३ ॥

स्वाध्यायस्यैवैष शिरोव्रताख्यो धर्मोऽङ्गं, न विद्यायाः । कुतः । हि यतस्तथात्वेन स्वाध्यायाङ्गत्वेन समाचारे वेदव्रतोप-देशपरे ग्रन्थे शिरोव्रतमपि वेदव्रतत्वेनाथर्वणिकाः समामनन्ति । तथाच यथा गोदानरूपं वेदव्रतं, वेदाध्ययनाङ्गमेवं शिरोव्रतमपि मुण्डकाध्ययनाङ्गमेव, न मुण्डकोक्तविद्याङ्गमित्यर्थः ॥ अधिका-राच्च ॥ नैतदचीर्णव्रतोऽधीत इत्यत्रत्यादधिकृतमुण्डकग्रन्थजात-परादेतच्छब्दाच्चकारादधीत इत्यध्यनशब्दाच्च शिरोव्रतमध्ययन-स्यैवाङ्गमित्यर्थः । अचीर्णव्रतः अननुष्ठितशिरोव्रतः । तस्य शिरोव्रतस्य मुण्डकाध्ययने नियम इत्यत्र दृष्टान्तः ॥ सववच्चेति॥ यथा सवाः सप्तहोमाः, सौर्यादयः शतौदनान्ताः, शाखान्तरोक्त-त्रेताग्न्यसम्बन्धाद् अथर्वणोक्तैकाऽग्निसम्बन्धाच्चैकाग्नीनामाथर्व-णिकानामेव नियम्यन्ते तद्वदेतच्छब्दादधीत इतिशब्दाच्च मुण्डका-ध्ययन एव शिरोव्रतस्य नियम इत्यर्थः । तस्मात् सर्वत्र विद्यैक्यम् ॥ ३ ॥

दर्शयति च ॥ ४ ॥

सर्वे वेदा यत् पदमामनन्तीत्यादिवाक्यं निर्गुणस्य ब्रह्मणो वेद्यस्य सर्ववेदान्तेष्वेकत्वेन तद्विद्यायाः सर्वत्रैकत्वं दर्शयति । तथा वाजसनेयिके सगुणस्य ब्रह्मणो वैश्वानरस्य प्रादेशमात्र-त्वेन सम्पादितस्य छान्दोग्ये सिद्धवदुपादानम् । यस्त्वेतमेवं

प्रादेशमात्रं वैश्वानरमुपास्त इति, तदपि सर्वत्र वैश्वानरविद्याया एकत्वं दर्शयति । तथाच यथा निर्गुणस्य सगुणस्य वा ब्रह्मण एकत्वेन सर्वत्र श्रूयमाणत्वात्तत्तद्विद्याया एकत्वं, तथा शस्त्रविशेषरूपोक्थ्यादीनां सर्वत्र श्रूयमाणत्वादिदमवगम्यते, सर्वत्रोपास्त्यर्थं तेषां श्रवणमिति । ततश्चोपास्योक्थादीनामेकत्वात्तदुपासनानामप्यैक्यमिति तत्समभिव्याहारादितरेषामप्युपासनानामभेदासिद्धिरित्यर्थः ॥ ४ ॥

उपासनैक्यविचारस्य प्रयोजनमाह—

( २ शाखान्तरोक्तस्याप्युपसंहाराधिकरणम् । सू० १ )

उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥

सर्वत्रोपासनानामेकत्वेऽप्येकशाखास्थविद्यायां कतिपयगुणयुक्तायां शाखान्तरस्थाऽधिकगुणानामुपसंहारोऽस्ति न वेति संदेहे यत्र यावन्तो गुणाः श्रुतास्तैरेवाकाङ्क्षाशान्तेर्नोपसंहार इति प्राप्ते, ब्रूमः । समाने उपासने गुणोपसंहारो युक्तः । कुतः ॥ अर्थाभेदात् ॥ उपास्यगुणैर्निर्वर्त्यस्योपासनरूपार्थस्य सर्वशाखास्वभिन्नत्वात् । न ह्येकमेवोपासनं गुणान्तरमपेक्षते, नापेक्षते चेति युक्तम् ॥विधिशेषवत्॥ यथाऽग्निहोत्रस्य सर्वत्रैकत्वात्तच्छेषाणामुपसंहारस्तद्वदित्यर्थः । अत्र पूर्वपक्षे पूर्वाधिकरणप्रयोजनस्य गुणोपसंहारस्याऽसिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । तस्माच्चोदनाद्यविशेषेण हेतुना कृतस्योपासनैक्यविचारस्य फलत्वं सिद्धम् ॥ ५ ॥

इदानीं चोदनाद्यविशेषस्योपासनैक्यसाधकत्वाऽपवादार्थमाह—

( ३ उद्गीथविद्याया भिन्नताधिकरणम् । सू० ३ )

अन्यथात्वं शब्दादितिचेन्नाविशेषात् ॥ ६ ॥

बृहदारण्यके श्रूयते उद्गीथब्राह्मणं, क्षेत्रज्ञस्य यास्तामस-

वृत्तयस्ते असुराः याश्च सात्त्विकवृत्तयस्ते देवास्तेषां देवासुराणा-मन्योन्यं स्पर्द्धा तामसवृत्त्युद्भवे सात्त्विकवृत्त्यनुद्भवः, सात्त्विक-वृत्त्युद्भवे च तामसवृत्त्यनुद्भव इत्येवंरूपां श्रावयित्वा, तत्र देवाः सामभक्तिरूपेणोद्गीथेनोद्गातृकर्मणा असुरजयं करिष्याम इति बुद्ध्या वाचं घ्राणं चक्षुः श्रोत्रं मनश्चोचुः । त्वमस्माकमौद्गात्रं कर्मोद्गीथं कुर्विति । ते च वागादयस्तथास्त्वित्युक्तवन्तः कर्मणि प्रवृत्तास्तानुद्गातॄन् असुरा एभिरुद्गातृभिर्देवा अस्मज्जयं करिष्यन्तीति बुद्ध्या ताडितवन्तः। ते च वागादयस्ताडिता इति वागादीन्निन्दित्वा मुख्यप्राणमुद्गातृत्वेन श्रावयति, अथ हेमं मुख्यं प्राणं देवा ऊचुस्त्वमस्माकमुद्गाता भवेति स प्राणस्तथास्त्वित्युक्त्वा कर्मणि प्रवृत्तस्तं चोद्गातारं प्राणं प्राप्य हन्तुकामा असुराः पाषाणं प्राप्य वेगवान् लोष्ठ इव विशीर्णावयवा अभूवन्निति प्राणस्तुतिं कृत्वोद्गीथकर्त्तारं प्राणमुपास्यं दर्शयतीति । एवमेव छान्दोग्ये श्रूयते । तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः । तत् तत्र पूर्ववद्देवासुरस्पर्द्धायां देवा उद्गीथोपलक्षितमौद्गात्रं कर्माऽऽहृतवन्तोऽनेन कर्मणैनान् तामसवृत्तिलक्षणानसुरानाभिभविष्याम इत्युपक्रम्य पूर्ववदेव वागादिनिन्दां कृत्वा, अथ ह य एवाऽयं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे देवा इति सर्वत्र वागादिशब्दास्तदभिमानिदेवतापरा बोध्याः । तत्र संशयः । किमनयोर्विद्ययोरभेद उत भेद इति । अत्र पूर्वपक्षे गुणोपसंहारः फलं सिद्धान्ते विद्ययोर्भेदान्नोपसंहार इति भेदः । चोदनाद्यविशेषादित्यत्र समाख्याया अविशेषाद्विद्यैक्यमित्युक्तम् । तद्वत्राप्युद्गीथविद्येति समाख्याया अविशेषाद्विद्यैक्यमेवेति दृष्टान्तसङ्गत्या प्राप्तम् । तदाक्षिपति सिद्धान्ती— अन्यथात्वं शब्दादितिचेदिति ॥ छान्दोग्यबृहदारण्यकवाक्याभ्यां प्राणस्यान्यथात्वं भिन्ना-

कारत्वं बृहदारण्यके उद्गीथकर्तृत्वं, छान्दोग्ये उद्गीथकर्मात्मकत्व-मित्येवंरूपं गम्यते । तथाच कर्तृकर्मणोर्भेदेनोपास्यभेदान्न विद्यै-क्यमिति शङ्कार्थः । पूर्वपक्षी परिहरति ॥ नेति ॥ कुतः ॥ अवि-शेषात् ॥ देवासुरस्पर्द्धोपक्रमादीनां बहूनामर्थानामुभयत्राविशे-षाच्छान्दोग्ये तमुद्गीथमुपासाञ्चक्रिरे इति प्राणस्योद्गीथकर्मात्मक-त्वश्रवणं लक्षणयोद्गीथकर्तृत्वेनैव व्याख्येयमिति विद्यैक्यमिति प्राप्ते सिद्धान्तयति ॥ ६ ॥

न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

नैवाऽत्र विद्यैक्यं युक्तम् ॥ प्रकरणभेदात् ॥ उपक्रमभेदा-दित्यर्थः । तथाहि । ॐमित्येतदक्षरमुद्गीथमुपासीतेत्योङ्काराद्य-ऽनेकवर्णरूपावयवविशिष्टस्य सामभक्तिविशेषस्योद्गीथस्यावयव-भूतमोङ्कारमुपास्यमुपक्रम्य तस्यैवोङ्कारस्य पृथिव्यादिभ्यः सार-तमत्वादिगुणानुक्त्वा पुनरुद्गीथावयवमोङ्कारमनुवर्त्य देवासुरा-ख्यायिकारूपेण, प्राणमुद्गीथमुपासाञ्चक्रिरे देवा इत्याह । अत्रत्योद्गीथशब्देनोद्गीथाऽवयव ॐङ्कार एव स्वीकर्त्तव्यः । उपक्रमे उद्गीथपदेन तस्यैवोक्तत्वादन्यथोद्गीथपदेन सकलसाम-भक्तिग्रहणे उद्गीथकर्तृलक्षणायां चोपक्रमो बाध्येत । तस्मादत्रो-द्गीथावयवे ॐङ्कारे प्राण उपास्यः । बृहदारण्यके तु उद्गीथकर्त्ता प्राण उपास्य इत्यनयोर्विद्ययोर्भेद इति ॥ परोवरीयस्त्वादिवत् ॥ यथोद्गीथोपास्तित्वसाम्येऽप्येकत्रोद्गीथे परमात्माध्यासेन प्राणा-द्यपेक्षया परत्ववरीयस्त्वादिगुणकमुपासनं, स एष परोवरी-यानुद्गीथ इत्यादिवाक्याविहितमक्ष्यादित्यपुरुषगतहिरण्यश्मश्रु-त्वादिगुणविशिष्टोद्गीथोपासनाद्भिद्यते, तद्वदित्यर्थः ॥ ७ ॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

ननूद्गीथविद्येति संज्ञाया एकत्वाच्छाखाद्वये विद्यैक्यमित्युक्तमितिचेत् । तत्रोत्तरमुक्तं, न वा प्रकरणभेदादिति ॥ सूत्रे संज्ञाकरणस्य पौरुषेयत्वान्न विद्यैक्यसम्पादकत्वमिति भावः । किञ्च तत् संज्ञैकत्वं परोवरीयस्त्वाद्युपासनयोर्भिन्नयोरप्यस्ति । उद्गीथविद्येति सूत्रस्थाऽपिशब्देनाऽन्योऽपि दृष्टान्तः सूच्यते । यथैकास्मिन् काठकग्रन्थे चोदितानां भिन्नानां कर्मणां काठकैकसंज्ञत्वमस्त्यतः पौरुषेयसंज्ञैक्यं विद्यैक्ये अप्रयोजकमिति भावः । तस्माच्छन्दोग—वाजसनेयिशाखयोः प्रकृतविद्ययोर्भेद इति सिद्धम् ॥ ८ ॥

नन्वोमित्येतदक्षरमुद्गीथमुपासीतेत्युपक्रमे उद्गीथपदस्योङ्कारपरत्वनिर्द्धारणेन सिद्धान्तः कृतः । तदयुक्तम् । उपक्रमवाक्यस्यान्यथापि योजनासंभवेन निर्द्धारणायोगादित्याक्षेपे, समाधत्ते—

( ४ उद्गीथस्योङ्कारविशेषणत्वाधिकरणम् । सू० १ )

व्याप्तेश्च समञ्जसम् ॥ ९ ॥

ॐमित्येतदक्षरमुद्गीथमित्योङ्कारत्वोद्गीथत्वयोः सामानाधिकरण्यप्रतिभासोऽस्ति । स किं नाम्नि ब्रह्मदृष्टिवदध्यास उत यद् रजतं सा शुक्तिरितिवदपवादः । किं वा भूसुरो ब्राह्मण इतिवत्तुल्यधर्मावभासः, आहोस्विन्नीलमितिवदुद्गीथोङ्कारयोर्विशेषणविशेष्यभावावभास इति संशयः । तत्र पूर्वपक्षे निर्द्धारणे कारणाभावादनिर्द्धारितार्थकमिदमुपक्रमवाक्यमप्रमाणमिति तन्मूलकस्य पूर्वाधिकरणसिद्धान्तस्याऽसिद्धिः फलम् । सिद्धान्ते त्वोङ्कारस्य प्रत्यृचं प्रत्यनुवाकं प्रतिसाम चाद्यन्तेषु व्याप्तेर्व्यापित्वात् को वा ॐङ्कार उपास्यइत्याकाङ्क्षायामुद्गीथाऽवयवत्वेनोङ्कारो विशेष्यते। ॐमित्येतदक्षरमुद्गीथमुपासीतेति। तथाचोद्गीथमित्योङ्कारस्य विशेषणमित्येव समञ्जसमुत्पलस्य नीलत्वमिव,

नत्वध्यासादिपक्षग्रहणं युक्तमित्युपक्रमवाक्यस्य निर्द्धारितार्थत्वात्तन्मूलकस्य सिद्धान्तस्य सिद्धिरिति बोध्यम् ॥

सूत्रे त्वर्थचशब्देनाऽध्यासादिपक्षाणामसम्भवः सूचितः । तथाहि । उद्गीथे ॐकारस्योङ्कारे चोद्गीथस्याऽध्यासेनोपास्यत्वे उत्तरत्र विधीयमानादोङ्कारे प्राणदृष्टिरूपादुपासनाद्भिन्नमिदम् उपासनमिति वक्तव्यम् । तथाच पृथक्फलकल्पनाप्रसङ्गः । सिद्धान्ते तु प्राणाश्रय ॐकारोऽत्र विशिष्य समर्प्यत इति नायं दोषः । नापि द्वितीय पक्षः । ॐकारोद्गीथयोरन्यतरज्ञानस्यान्यतरज्ञानबाधकत्वादर्शनात् । नाऽपि तृतीयः पक्षः । ॐकारोद्गीथशब्दयोः पर्यायत्वाऽभावादिति । तस्मात् पटैकदेशे दग्धे पटो दग्ध इत्यादिवदुद्गीथपदं स्वावयवमोङ्कारं लक्षयतीति सिद्धम् ॥ ९ ॥

( ५ वसिष्ठत्वादीनामाहार्यताधिकरणम् । सू० १ )

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

वाजसनेयके छान्दोग्ये च प्राणसंवादे मुख्यप्राणस्य श्रैष्ठ्यगुणकस्योपास्यत्वमुक्तम्, वाक्चक्षुःश्रोत्रमनोरेतांसि क्रमेण वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वाऽऽयतनत्वजानिमत्त्वरूपगुणयुक्तानि सङ्कीर्त्य, ते च वागादयः प्राणाधीनस्थितिकत्वं स्वेषु निश्चित्य स्वनिष्ठान् वसिष्ठत्वादिगुणान् प्राणे समर्पितवन्त इत्युक्तम् । वाचो हि वसिष्ठत्वं, वाग्मिनो लोके सुखेन वासदर्शनात् । चक्षुषः प्रतिष्ठात्वं, चक्षुष्मतः सुखेन पादप्रतिष्ठादर्शनात् श्रोत्रसम्पत्त्वं, श्रुतात्मनिर्द्धारणेन परमसम्पत्तिदर्शनात् । मनो हि भोग्याकारवृत्तिद्वारा भोग्यानामायतनम् । पुरुषाद्याकारेण परिणममानं रेतो जनिमन्मन्तव्यम् । एवं कौशीतक्यादिशाखास्वपि प्राणसंवादेषु, अथातो निःश्रेयसदानम् एता वै देवता अहंश्रेयसे विवदमाना इत्यादिना प्राणस्य श्रैष्ठ्यमुक्तम् । वसिष्ठत्वा-

दिगुणास्तु नोक्ताः । निःश्रेयसं, श्रैष्ठ्यं, तस्य दानं निर्द्धारणम् । ताद्विनोपास्तेरयोगात् । तदाऽऽरभ्यत इत्याह । अथेति । एता वागाद्यभिमानिन्यो देवता अहंश्रेयसे स्वकीयश्रेष्ठत्वायेत्यर्थः । तत्र किं वसिष्ठत्वादिगुणानां क्वचिदुक्तानामन्यत्रोपसंहारोऽस्ति,न वेति सन्देहे पूर्वमोङ्कारस्य समीपस्थगुणैरेवोपास्यत्ववद् अत्रापि यत्र ये गुणाः श्रुतास्तैरेवोपास्यत्वं प्राणस्येति नोपसंहार इति दृष्टान्तेन प्राप्ते ब्रूमः। अन्यत्र वसिष्ठत्वादिगुणानामश्रवणस्थले इमे वसिष्ठत्वादयो गुणा उपसंहर्तव्याः । कुतः । सर्वाऽभेदात् ॥ सर्वासु शाखासु प्राणोपासनस्य प्राणसंवादस्थस्याऽभिन्नत्वादित्यर्थः । एकस्यामेव विद्यायां वासिष्ठत्वाद्यऽपेक्षातदभावयोर्विरोधादिति भावः ॥ १० ॥

ननु प्राणस्य सविशेषत्वाद् भवतु शाखान्तरीयतदीयगुणोपसंहारो, ब्रह्मणस्तु निर्विशेषत्वेन स्वशाखागतधर्मैरेव ज्ञानसम्भवान्नान्यशाखाश्रुतानाम् आनन्दादीनामुपसंहार इति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

( ६ आनन्दादीनामुपसंहाराधिकरणम् । सू० ३ )

आनन्दादयः प्रधानस्य ॥ ११ ॥

निर्गुणब्रह्मपरासु श्रुतिष्वानन्दस्वरूपत्वविज्ञानघनत्वापरिच्छिन्नत्वाद्वितीयत्वादयो धर्माः क्वचित् क्वचिच्छ्रूयन्ते । तत्र संशयः । किं यत्र ये धर्माः श्रुतास्त एव तत्र ज्ञेयाः, उत सर्वे धर्माः सर्वत्रोपसंहर्त्तव्या इति । अत्र पूर्वपक्षे केषाञ्चिद्धर्माणामनुपसंहारायावत्तत्त्वस्वरूपज्ञानासिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति बोध्यम्, तत्रानन्दादीनां नोपसंहार इति प्राप्ते ब्रूमः ॥ प्रधानस्य ब्रह्मण आनन्दस्वरूपत्वादयो धर्माः सर्वत्रोपसंहर्त्तव्याः । वेद्यैक्येन, विद्यैक्यादिति पूर्वसूत्रोक्तहेतोरित्यर्थः ॥ ११ ॥

ननु तैत्तिरीयके, आनन्दमयं परमात्मानं प्रस्तुत्य तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः, आनन्द आत्मेति प्रियशिरस्त्वादयो धर्माः श्रूयन्ते । तेषामप्यानन्दस्वरूपत्वादिधर्माणामिव सर्वत्रोपसंहारः स्यात् । ब्रह्मधर्मत्वाऽविशेषादित्यत आह—

प्रियशिरस्त्वाद्यप्राप्तिरुपचयाऽपचयौ हि भेदे ॥ १२ ॥

प्रियशिरस्त्वादिधर्माणां न सर्वत्र प्राप्तिः । हि यतः प्रियमोदप्रमोदानन्दाः परस्परापेक्षयोपचितापचितस्वरूपाः । उपचयापचयवन्तौ हि धर्मौ धर्मिणि भेदे सत्येव स्वाभाविकौ सम्भवतः । ब्रह्मणस्त्वद्वितीयत्वान्नोपचितापचितप्रियादिधर्मस्वभावत्वम् । अस्वभावधर्माणां ब्रह्मज्ञानार्थं नोपसंहार इत्यर्थः । चन्दनजं सुखं प्रियं, पुत्रप्राप्तिजं मोदः । स एव प्रकृष्टः प्रमोदः । सुखसामान्यमानन्द इति तेषां तारतम्यं बोध्यम् । अत्र श्रीमद्भिः सूत्रकारैरानन्दमयस्य ब्रह्मत्वं, प्रियादीनां तद्धर्मत्वं चाऽङ्गीकृत्येयं चिन्ता कृता । तस्या अन्यत्र फलं बोध्यम् । तथाहि वेद्यैक्ये विद्यैक्यादानन्दादिधर्माणां सर्वत्रोपसंहारे सगुणब्रह्मोपासनेषु भिन्नेष्वपि वेद्यस्य सगुणस्य ब्रह्मण एकत्वेनोपासनैक्यापत्तावन्योन्यं गुणोपसंहारः स्यादिति शङ्कानिरासः फलम् । उपासनानां विधिपारतन्त्र्यात्तत्र यावद्गुणविशिष्टमुपासनं विधीयते । तत्र तावद्गुणविशिष्टमेव कर्त्तव्यं, तत्तत्फलस्य तेनैव सिद्धिः । वस्तुपरतन्त्रनिर्गुणविद्याफलस्याविद्यानिवृत्तेर्यावत्स्वरूपज्ञानमन्तरेणासम्भवात् सर्वत्राऽऽनन्दादिगुणानामुपसंहार इति शङ्कानिरासप्रकारः ॥ १२ ॥

उपास्यब्रह्मधर्माणां सर्वत्र न प्राप्तिरित्युक्तम् । तदपेक्षया

ज्ञेयधर्माणामानन्दादीनां सर्वत्र प्राप्तिरिति विशेषमाह—

इतरे त्वर्थसामान्यात् ॥ १३ ॥

उपास्यधर्मापेक्षया इतरे त्वानन्दादयो धर्मा ज्ञानैकफलकाः सर्वत्रोपसंह्रियन्ते । अर्थस्य प्रतिपाद्यस्य ब्रह्मणः सामान्याद् एकत्वादित्यर्थः । उपसंहारं विना यथावत्स्वरूपविषयकमहावाक्यार्थज्ञानसाध्याविद्यानिवृत्तेरसम्भवादिति भावः ॥ १३ ॥

( ७ पुरुषस्यैव ज्ञेयताधिकरणम् । सू० २ )

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

कठवल्लीषु पठ्यते । इन्द्रियेभ्यः परा ह्यर्था इत्यारभ्य पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरिति । तत्र संशयः । किमिमानि वाक्यानि भिन्नान्युताऽऽत्मपरमेकमेव वाक्यमिति पूर्वपक्षे इन्द्रियादिपरत्वविशिष्टस्याऽर्थादेरुपास्यस्य प्रतिवाक्यं भेदाद्विद्याया भेदः फलं, सिद्धान्ते निर्विशेषात्मप्रदर्शनपरमेकमेव वाक्यमिति विद्यैक्यं फलम् । अत एव पूर्वोत्तरपक्षयोर्विद्याभेदाभेदयोः पर्यवसानादस्याऽधिकरणस्य पादसङ्गतिः । पूर्वं ब्रह्मस्वरूपाणामानन्दादीनामुपसंहार्याणां ब्रह्मज्ञानोपायत्वं चिन्तितमिदानीमब्रह्मस्वरूपस्याऽनुपसंहार्य्यस्याऽर्थादिपरत्वरूपधर्मस्य ब्रह्मज्ञानोपायत्वमुच्यते इति एकफलकत्वमवान्तरसङ्गतिः। तत्रेमानि वाक्यानि भिन्नानि इति प्राप्ते, ब्रूमः । आध्यानाय ध्यानसाध्यसाक्षात्काराय पुरुष एवाऽर्थादिभ्यः सर्वेभ्यः परत्वेन प्रतिपाद्यते इत्येकमेव वाक्यं, नत्विन्द्रियादिपरत्वेनार्थादयः प्रतिपाद्याः । प्रयोजनाभावात् । न हि इन्द्रियपरत्वेनार्थज्ञानं स्वतः किञ्चित् फलं साधयति । अतः प्रतिपाद्यभेदाभावाद् न वाक्यभेदः । पुरुषज्ञानं तु फलहेतुरिति तत्रैवोक्तम् । निचाय्य

तं मृत्युमुखात् प्रमुच्यते इति ॥ १४ ॥

एवं वाक्यस्यात्ममात्रपरत्वे फलवत्त्वं लिङ्गमुक्त्वाऽपूर्वत्वमपि लिङ्गमाह—

आत्मशब्दाच्च ॥ १५ ॥

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ॥

दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति प्रकृतपुरुषे आत्मशब्दश्रवणाच्चात्मपरमेवेदं वाक्यम् । तस्यात्मनः श्रुत्या मानान्तरावेद्यत्वरूपापूर्वत्वप्रतिपादनादिति भावः ॥१५॥

( ८ ईश्वरस्यैवात्मशब्दवाच्यत्वाधिकरणम् । सू० २ )

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

ऐतरेयके श्रूयते । आत्मा वा इदमेक एवाऽग्र आसीन्नाऽन्यत्किञ्चन मिषत् स ऐक्षत लोकाऽनुसृजा इति । स इमाँल्लोकानसृजताऽम्भोमरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आप इति लोकानेवादोऽम्भ इति । तद्व्याचष्टे श्रुतिरदोऽम्भ इति । तदम्भः यत् परेण दिवं दिवः परस्ताद्वर्त्तते तस्य च परस्ताद्वर्तमानस्य द्यौः प्रतिष्ठा आश्रयः । साप्यम्भःशब्दवाच्या । दिवम् आरभ्योपरितनलोकाश्चान्द्रमसैरम्भोभिर्व्याप्तत्वादम्भ इत्युच्यन्त इत्यर्थः । अन्तरिक्षलोकाः सवितृकिरणव्याप्तत्वान्मरीचयः । स्थानभेदापेक्षया बहुवचनम् । म्रियन्तेऽस्मिन् भूतानीति पृथिवीलोको मरः । यानि पृथिव्या अधस्तात् पातालान्यऽब्बहुलानि ता आप इत्यर्थः । तत्र संशयः । किमात्मपदेन हिरण्यगर्भ उच्यते, उत परमात्मेति । पूर्वपक्षे आत्मपदस्य परमात्मपरत्वाऽभावात्तत्प्रमित्यर्थे, नानन्दादीनां धर्माणामत्रोपसंहार इति फलं, सिद्धान्ते परमात्मन एवात्रोक्तत्वात्तत्प्रमित्यर्थमऽस्त्या-

नन्दादिधर्मोणामत्रोपसंहार इति मन्तव्यम् । तत्र पूर्वं वाक्य-भेदभियार्थादीनां पृथक्प्रतिपाद्यत्वं नास्तीत्युक्तम्। तर्हि प्रजापते रेतः कार्यं देवा इत्यादिपूर्ववाक्ये हिरण्यगर्भस्य प्रकृतत्वात् स एवात्मशब्देनोच्यते इति युक्तम् । अन्यथा वाक्यभेदप्रसङ्गा-दिति दृष्टान्तसङ्गत्या प्राप्ते ब्रूमः । अस्मिन् सृष्टिवाक्ये आत्म-शब्देन परमात्मन एव गृहीतिः, नान्यस्य इतरवत्। यथा इतरेषु सृष्टिवाक्येषु आत्मन आकाशः सम्भूत इत्यादिषु आत्मशब्देन, परमात्मन एव ग्रहणं, तद्वदत्रापि। कुतः ॥ उत्तरात् ॥ स ऐक्षत लोकाऽनुसृजा इति स इमाँल्लोकानसृजतेति ईक्षणपूर्वकस्रष्टृत्व-रूपोत्तरविशेषणादित्यर्थः । तच्च विशेषणं परमात्मन्येव मुख्य-त्वेन श्रुत्यन्तरेष्ववगतमिति भावः ॥ १६ ॥

अन्वयादितिचेत् स्यादवधारणात् ॥ १७ ॥

पूर्ववाक्यादिपर्यालोचनया प्रजापतावेव वाक्यस्याऽन्वय-दर्शनान्न परमात्मग्रहणं युक्तमितिचेत् । अत्रोच्यते ॥ स्यादव-धारणादिति ॥ अत्र परमात्मन एव ग्रहणं युक्तं स्यात् । आत्मा वा इदमेक एवाऽग्र आसीदिति सृष्टेः प्रागेकत्वावधारणस्य पर-मात्मन्येवाञ्जसत्वादित्यर्थः । न चास्मिन् वाक्ये लोकस्रष्टृत्वं श्रूयमाणं हिरण्यगर्भमेव गमयति । अन्यथा परमात्मग्रहणे महा-भूतसृष्टिः श्रूयेतेति वाच्यम् ।छान्दोग्ये तेजआदिसृष्टिश्रवणेऽपि यथाकाशवायुसृष्ट्युपसंहारस्तद्वदत्रापि महाभूतसृष्टेरुपसंहारात् । तस्मादस्मिन् वाक्ये आत्मनः परस्यैव ग्रहणमिति सिद्धम् ॥१७॥

सूत्रद्वयस्यापरा व्याख्या—आत्मगृहीतिरितरवदुत्त-रात् ॥ १६ ॥ बृहदारण्यके कतम आत्मेति प्रश्ने योऽयं वि-ज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्यात्मशब्देनोपक्रम्य त-स्यैवाऽऽत्मनोऽसङ्गत्वादिकमुक्त्वा, स वा एष माहानज आत्मेति

ब्रह्मात्मतामुपसंहरति इति । छान्दोग्ये तु सदेव सोम्येदमग्र-आसीदेकमेवाद्वितीयमिति विनैवात्मशब्दं सन्मात्रमुपक्रम्यान्ते स आत्मा तत्त्वमसीति ब्रह्मात्मत्वमुपसंहरति । तत्र संशयः । कि-मनयोर्वाक्ययोस्तुल्यार्थत्वमुत भिन्नार्थत्वमिति पूर्वपक्षे । अनयो-र्वाक्ययोरुपक्रमवैषम्यादर्थभेदेन विद्ययोर्भेदान्नान्योन्यं गुणोपसं-हारः, किन्तु बृहदारण्यके निर्गुणविद्या, छान्दोग्ये उपक्रान्त-सत्तासामान्ये ब्रह्मत्वोपासनेति फलम् । सिद्धान्ते छान्दोग्ये सत्पदेनाऽऽत्मन एव गृहीतिरितरवत्।बृहदारण्यके आत्मपदेनात्म-ग्रहणवत् ॥ उत्तरात् तत्त्वमसीत्युपसंहारबलादित्युभयत्र विद्यै-क्यादस्त्यन्योन्यं गुणोपसंहार इति पूर्वाधिकरणे वाक्यैक्यबला-दर्थादिपरत्वं परित्यज्य विद्यैक्यमुक्तम् । तर्हि प्रकृते उपक्रम-भेदेन वाक्यभेदाद्विद्यैक्यं न स्यादिति प्रत्युदाहणसङ्गतिरस्या-धिकरणस्य बोध्या ॥ १६ ॥

**अन्वयादितिचेत् स्यादवधारणात्** ॥१७॥ ननूपसं-हारबलात् सत्पदेनात्मगृहीतिरित्यसङ्गतम् । उपसंहारस्योप-क्रमान्वयादुपक्रमपरतन्त्रत्वादित्याक्षेपांशार्थः । परिहरति ॥ स्यादवधारणादिति ॥ सत्पदेनाऽऽत्मन एव गृहीतिर्युक्ता स्यात् । सदेवेत्यद्वितीयत्वाऽवधारणात् । सत्तासामान्यस्य च सद्वितीयत्वादवधारणाऽनुपपत्तेरित्यर्थः।अयं भावः। आरम्भणा-ऽधिकरणे ब्रह्मातिरिक्तवस्तुजातस्य मिथ्यात्वसाधनादात्मनो-ऽन्यस्य सत्पदार्थत्वानुपपत्तेः सत्पदेनात्मन एवोपक्रमः । सदुप-क्रमस्य ब्रह्मसत्तासामान्यपरत्वसंदेहेऽपि तत्त्वमसीतिवाक्य-शेषाद्ब्रह्मपरत्वानिर्णयः।न च शाखाद्वये, आत्मसच्छब्दाभ्यां जीव-ब्रह्मणोरुपक्रमाद्वैषम्यम् । उभयोर्लक्ष्यैक्येनावैषम्यादिति। तस्मा-दनयोर्वाक्ययोरेकार्थत्वमिति सिद्धम् ॥ १७ ॥

( ९ प्राणविद्यायामनग्नताबुद्धेरेव विधेयत्वाधिकरणम् । सू० १ )

कार्याख्यानादपूर्वम् ॥ १८ ॥

वाजसनेयके प्राणसंवादे प्राणो वागादीन् पप्रच्छ, मम किमन्नं किं वास इति । ते प्रत्यूचुः । यदिदं किञ्चाऽऽश्वभ्य आक्रिमिभ्य आकीटपतङ्गेभ्योऽन्नं तत्ते अन्नमापो वास इति । तदनन्तरं श्रूयते, तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाऽऽचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते । तस्मादेवं विद्ऽशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते इति । यस्मात् प्राणस्यापो वासस्तस्मादित्यस्मिन्नर्थे तच्छब्दः । विद्वांसः प्राणविदः । श्रोत्रियाः यथेष्टचेष्टाशून्या भोजनात् पूर्वोत्तरकालयोराचमनं कुर्वन्ति । तेनाऽऽचमनसंबन्धिना,अब्वाससैतमेवाऽनं प्राणमनग्नमाच्छादितं कुर्वन्तो मन्यन्ते चिन्तयन्ति पूर्वे जनास्तस्मादिदानीन्तनोऽपि प्राणविदेवं कुर्यादित्यर्थः । छान्दोग्येऽप्येवमेव श्रूयते । तस्माद्वा एतदाशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाऽद्भिः परिदधतीति । तस्मात् प्राणं प्रत्यपां वासस्त्वादित्यर्थः । अन्नमशिष्यन्तः प्राणविदः, आचमनं कुर्वन्त एतत् कुर्वन्ति । किमेतत् । यद् भोजनात् पूर्वमूर्ध्वं चाऽद्भिः प्राणं परिदधति आच्छादयन्तीत्यर्थः । तत्राऽऽचमनीयास्वप्सु प्राणवासस्त्वध्यानमाचमनं च प्रतीयते । तत्रोभयविधाने वाक्यभेदभयादेकमेव विधेयम् । तदेकं किमाचमनं विधेयम् । उत वासस्त्वध्यानमिति संशयः । पूर्वपक्षे प्राणविद्याङ्गत्वेनापूर्वस्याऽऽचमनस्य विधेयत्वात् तस्याचमनस्याऽन्यत्र प्राणविद्यायामुपसंहारः फलं, सिद्धान्ते त्वनुपसंहार इति मन्तव्यम् । तत्र सान्दिग्धसदुपक्रमस्य वाक्यशेषान्निर्णयवदाचामन्तीति वर्त्तमानोपदेशस्य विधित्वसंदेहे आचमेदिति वाक्यशेषाद् विधित्वानिर्णयइति दृष्टान्तसङ्गत्या

प्राप्ते, ब्रूमः । वासस्त्वध्यानमेवाऽपूर्वं प्राणविद्याङ्गत्वेन विधेयम्, यथा प्राणविद्याङ्गत्वेन श्वादिमर्यादस्याऽन्नस्य प्राणं प्रत्यन्नत्वेन ध्यानं विधीयते, तद्वत् । न त्वाचमनमत्र विधेयम् । कुतः ॥ कार्याख्यानात् ॥ द्विजो नित्यमुपस्पृशेदित्यादिना स्मार्त्तविधिना सकलाऽनुष्ठानाङ्गत्वेन शुद्ध्यर्थं कार्यस्याऽऽचमनस्य प्राणविद्यायामपि प्राप्तस्याख्यानात् । तदीयास्वप्सु वासस्त्वविधानार्थमनुवादादित्यर्थः ॥ १८ ॥

( १० शाण्डिल्यविद्यायाः समानताधिकरणम् । १ )

## समान एवञ्चाभेदात् ॥ १९ ॥

वाजसनेयिशाखायामग्निरहस्ये शाण्डिल्यविद्या श्रुता । तत्र गुणाः श्रूयन्ते । स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमित्यादिना तस्यामेव शाखायां बृहदारण्यके पुनः श्रूयते । शाण्डिल्येन दृष्टा विद्या, मनोमयोऽयं पुरुषो भाः सत्यः, तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याऽधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्चेति । भाः प्रकाशात्मकः । सत्यः परमार्थः । तस्मिन्मनोमयपदप्रकृतिभूतमनःशब्देन प्रस्तुते हृदये, अन्तः यथा व्रीह्यादि तथा तावत्परिमाणः, पुरुषोऽस्ति स एष सर्वस्येशान इत्यादिगुणक इत्यर्थः । तत्र संशयः । किमग्निरहस्यबृहदारण्यकस्थयोरनयोर्विद्ययोर्भेद, उतैक्यमिति । पूर्वपक्षे विद्ययोर्भेदाद् गुणाऽनुपसंहारः फलं, सिद्धान्ते विद्यैक्याद् गुणोपसंहार इति बोध्यम् । पूर्वं प्राप्ताचमनानुवादेन वासस्त्वध्यानं विधेयमित्युक्तमिह तूक्तवाक्ययोरेकस्याऽनुवादकत्वमेकस्य विधायकत्वमित्यत्र नियामकाभावादुभयोरपि स्वनिकटस्थगुणविशिष्टविद्याविधायकत्वमित्यनयोर्विद्ययोर्भेद इति प्रत्युदाहरणेन प्राप्ते ब्रूमः । यथा भिन्नासु शाखासु विद्यैक्यं गुणोपसं-

हारश्च भवति, एवं समाने च एकस्यामपि शाखायां भवितुं युक्तम् । कुतः । अभेदात् । उपास्यस्य मनोमयत्वादिगुणकस्योभयत्राऽप्यभेदेन प्रत्यभिज्ञानादित्यर्थः । यत्तु एकस्याऽनुवादकत्वम् । एकस्य विधायकत्वमित्यत्र नियामकाऽभाव इति । तन्न । अग्निरहस्ये बहूनां गुणानां श्रवणेन तत्रैव विद्योत्पत्तिविधिकल्पनात्। बृहदारण्यके तु विद्यैक्यप्रत्यभिज्ञानार्थं तत्रोक्तमनोमयत्वाद्यल्पगुणानुवादेन सर्वेशानत्वादयो गुणा विधीयन्ते इति न किञ्चिद् बाधकम् । तस्मादुभयत्र शाण्डिल्यविद्यैक्यमिति सिद्धम् ॥१९॥

( ११ नाम्नोर्व्यवस्थाधिकरणम् । सू० ३ )

सम्बन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके, सत्यं ब्रह्म हिरण्यगर्भाख्यं सत्यं महदित्युपक्रम्य, तद्यत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चाऽयं दक्षिणेऽक्षन् पुरुष इति । तत्रैवं सति, यत्तत्सत्यं हिरण्यगर्भाख्यं, सोऽसावादित्यः, किं मण्डलमेवाऽऽदित्यो, नेत्याह । य एष इति । अक्षन् अक्षिणि तस्य सत्यस्य स्थानभेदेन आदित्यचाक्षुषपुरुषात्मना अवस्थानमुक्त्वा आदित्यपुरुषस्य भूरिति शिरः भुव इति बाहू स्वरिति प्रतिष्ठा पादाविति व्याहृतिदेहत्वं संपाद्य तस्योपनिषदहरिति, अहर्नामत्वमुक्तम् । तदनन्तरं चाक्षुषपुरुषस्य सत्यस्य पूर्ववद्व्याहृतिदेहत्वं संपाद्य तस्योपनिषदहमित्यहंनामत्वमुक्तम्।उपनिषच्छब्देन देवताप्रकाशकं रहस्यं नामोच्यते । अहःशब्दः प्रकाशवाची । अहंशब्दः प्रत्यगात्मवाची।तावहरहंशब्दौ क्रमेणाऽऽदित्यचाक्षुषपुरुषयोर्नामनी इति स्थितिः । तत्र संशयः । किमस्यां सत्यविद्यायां नाम्नोर्व्यवस्थया ध्यानं कर्त्तव्यमुत नामद्वयस्य पुरुषद्वयेऽप्युपसंहार इति ।पूर्वपक्षे उपसंहारः फलं, सिद्धान्ते त्वनुपसं-

हार इति । तत्र दृष्टान्तसङ्गत्या पूर्वपक्षयति ॥ सम्बन्धादिति ॥ यथा शाण्डिल्यविद्यायामेकशाखायां विभागेनाऽधीतायामेकविद्यात्वसम्बन्धादन्योन्यं गुणोपसंहारः पूर्वमुक्त एवमन्यत्रापि सत्यविद्यायां भवितुं युक्तः,एकविद्यात्वसम्बन्धादित्यर्थः ॥२०॥

समाधत्ते—

न वा विशेषात् ॥ २१ ॥

नैव नामद्वयस्य पुरुषद्वये उपसंहारः। विद्यैक्येऽप्यक्ष्यादित्यरूपस्थानविशेषादित्यर्थः । तथाहि । य एष एतस्मिन्मण्डले पुरुषस्तस्याऽहरितिनामेत्युक्ते, तस्येति तच्छब्देनादित्यमण्डलावच्छिन्नस्यैव परामर्शात् तस्यैवाऽहर्नामत्वं युक्तम् । एवमहंनामत्वं चाक्षुषपुरुषस्यैव । चक्षूरूपस्थानविशेषाऽवच्छिन्नस्यैव तच्छब्देन परामर्शादिति । तस्मादनयोर्नाम्नोर्व्यवस्थितिः ॥ २१ ॥

दर्शयति च ॥ २२ ॥

किञ्च विद्यान्तरे हिरण्यश्मश्रुरित्यादिनादित्यपुरुषस्य रूपमुक्त्वा तद्रूपमक्षिपुरुषेऽतिदिशति। तस्यैतस्य तदेव रूपं,यदमुष्य रूपमिति । अयमतिदेश इतरत्र सत्यविद्यास्थले, स्थानभेदान्नोपसंहार इति दर्शयति ॥ अन्यथा स्थानभेदेऽपि गुणोपसंहाराङ्गीकारेऽयमतिदेशो निरर्थक एव स्यादिति । तस्मान्नाम्नोर्व्यवस्थेति सिद्धम् ॥ २२ ॥

( १२ संभृत्यादीनामनुपसंहाराधिकरणम्। सू० १ )

संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

परिशिष्टोपदेशात्मकखिलग्रन्थेषु श्रूयते । ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततानेति वीर्या वीर्याणि पराक्रमविशेषरूपाणि वियदादीनि ब्रह्मैव ज्येष्ठम् अनन्यापेक्षं कारणं

येषां तानि ब्रह्मज्येष्ठानि । लौकिकेश्वरवीर्याणां बलवद्भिर्मध्ये भङ्गः सम्भवति । ब्रह्मवीर्याणां तु नैवमित्याह । संभृतानीति । सर्वाधिकेन ब्रह्मणा निर्विघ्नं समृद्धानीत्यर्थः। तच्च ज्येष्ठं ब्रह्माऽग्रे इन्द्रादिजन्मनः प्रागेव दिवं स्वर्गमाततान व्याप्नवत् । नित्यमेव सर्वव्यापकमित्यर्थः । एवं सम्भृतिद्युव्याप्त्यादयो गुणा ब्रह्मणः श्रूयन्ते । तत्र संशयः। किं तेषां गुणानां तदीयोपनिषद्विहितशाण्डिल्यादिब्रह्मविद्यासूपसंहारः,उत तद्गुणविशिष्टोपासनं पृथगेवात्र विधीयते इति । तत्रोपसंहार इति प्राप्ते, पूर्वोक्तन्यायमतिदिशति ॥ संभृतीति ॥ संभृतिश्च द्युव्याप्तिश्च संभृतिद्युव्याप्ती । यथा स्थानभेदान्नाम्नोर्व्यवस्था, एवं संभृत्यादयोऽपि शाण्डिल्यादिविद्यासु नोपसंह्रियन्ते । अत एव स्थानभेदादित्यर्थः । शाण्डिल्यादिविद्यासु हृदयायतनत्वं ब्रह्मणः श्रुतम् । नैवमत्र । तस्मात् संभृत्यादिगुणविशिष्टमुपासनाऽन्तरमिति सिद्धम् । अस्याऽतिदेशान्न पृथक् संगत्याद्यपेक्षा ॥ २३ ॥

( १३ पुरुषविद्याया विभिन्नताधिकरणम् । सू० १ )

पुरुषविद्यायामिव चेतरेषामनाम्नात् ॥ २४ ॥

आस्ति ताण्डिनां पैङ्गिनां रहस्यब्राह्मणे पुरुषविद्या । तत्र पुरुषो यज्ञत्वेन कल्पितस्तदीयमायुस्त्रेधा विभज्य सवनत्रयं कल्पितम् । तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनं, ततः पराणि चतुश्चत्वारिंशद्वर्षाणि माध्यन्दिनं सवनं, ततः पराण्यष्टाचत्वारिंशद्वर्षाणि तृतीयं सवनम् । पुरुषविद्याविदः षोडशोत्तरशतवर्षजीवित्वादिति पिपासादिकं दीक्षात्वेन कल्पितम् । तैत्तिरीयकेऽपि तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः, श्रद्धा पत्नी शरीरमिध्ममित्यादिना पुरुषयज्ञः श्रूयते । तत्र संशयः । किमनयोर्विद्ययोरन्योन्यं गुणोपसंहारोऽस्ति, न वेति । तत्र पूर्व

यदुक्तं, सम्भृत्यादिगुणाः शाण्डिल्यादिविद्यासु नोपसंह्रियन्ते इति, युक्तं हि तत् । साधारणगुणप्रत्यभिज्ञानाऽभावात् । इह तु मरणस्याऽवभृथत्वेन कल्पितस्य गुणस्योभयत्र सत्त्वेन प्रत्यभिज्ञानाद् गुणोपसंहारो युक्त इति प्रत्युदाहरणसङ्गत्या प्राप्ते ब्रूमः। नान्योन्यं गुणोपसंहारः । उपास्यरूपभेदात् ॥

तदाहाऽऽचार्यः ॥ पुरुषविद्यायामिति ॥ ताण्ड्यादिशाखास्थपुरुषविद्यायां यथा गुणाम्नानं तथेतरेषां तैत्तिरीयकाणां पुरुषविद्यायां गुणाम्नानाभावाद्भिन्नेत्यर्थः । अन्यत्र पुरुष एव यज्ञत्वेन उपास्यः । तैत्तिरीयके तु विदुषः पुरुषस्य प्रसिद्धो यो यज्ञस्तस्य पुरुषात्मादिषु यजमानत्वादिकल्पनयोपास्यत्वादेवं बहुतर उपास्यभेदो दृश्यते । तद्भेदाच्च विद्याभेदान्नान्योन्यं गुणोपसंहार इति । यत्त्ववभृथगुणस्योभयत्र सत्त्वात् प्रत्यभिज्ञानमिति । तन्न बहुगुणभेदे एकस्य प्रत्यभिज्ञापकत्वाभावादिति। किञ्च तैत्तिरीयके श्रूयते । पूर्वमात्मविद्यामुपदिश्य तच्छेषत्वेन पुरुषयज्ञ उपदिश्यते । तस्यैवं विदुष इति तत्सांनिधौ श्रवणात् । अन्यत्र त्वायुर्वृद्धिफलकः पुरुषयज्ञः स्वतन्त्र इत्यनयोर्भेद एव न्याय्य इति ॥ २४ ॥

( १४ वेधाद्यधिकरणम् । सू० १ )

## वेधाद्यर्थभेदात् ॥ २५ ॥

अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रपठनं सर्वं प्रविध्य हृदयं प्रविध्य धमनीं प्रवृज्य शिरोऽभितोवृज्ज्य त्रिधा विभक्त इत्यादि । ताण्डिनां, देवसवितः प्रसुव यज्ञमित्यादिः। शाकल्यायनिकानां, श्वेताश्वो हरितनीलोऽसीत्यादि । तैत्तिरीयकाणां, शन्नो मित्र इत्यादि । वाजसनेयिनां तूपनिषदारम्भे, प्रवर्ग्यब्राह्मणं पठ्यते। देवा ह वै सत्रं निषेदुरित्यादि । कौशीतकिना-

मग्निष्टोमब्राह्मणं, ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ते ब्रह्मोपयन्ति, तेऽमृतत्वमाप्नुवन्ति य एतदहरुपयन्ती-त्यादि। अयमर्थः। आभिचारिककर्मदेवतामभिचारकः प्रार्थय-ते। हे देवते, मद्रिपोः सर्वमङ्गं प्रविध्य विदारय हृदयं च विदा-रय, धमनीः शिराः प्रवृज्य भिन्धि, तस्य शिरश्चाऽभितो भिन्धि। एवं मद्रिपुस्त्रिधा विभक्तो विश्लिष्टो भवत्वित्यर्थः। हरित इन्द्र-नीलस्तद्वन्नीलोऽसीतीन्द्रः सम्बोध्यते। मित्रः सूर्यः शं सुखङ्करो भूयादिति विद्यार्थ्याशास्ते। अग्निष्टोमो ब्रह्म स यस्मिन्नहनि क्रियते तदहरपि ब्रह्म, ततो य एतदहरुपयन्ति अहर्निर्वर्त्यं कर्माऽनुतिष्ठन्ति ते ब्रह्मणैव साधनेन ब्रह्म परिह्रियेरन्न वेति। तत्र पूर्वं यथा पुरुषयज्ञस्यात्मविद्यासन्निधानात्तच्छेपत्वं तथा मन्त्राणां कर्मणां च तमुपयन्ति ते क्रमेणामृतत्वं मुक्तिमाप्नुवन्तीत्यर्थः। तत्र संशयः। किमिमे सर्वं प्रविध्येत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि तत्तदुपनिषदुक्तविद्यामूपसंह्रियेरन्न वेति। तत्र पूर्वं यथा पुरुषयज्ञस्यात्मविद्यासन्निधानात्तच्छेपत्वं तथा मन्त्राणां कर्मणां च तत्तद्विद्यासन्निधानात्तच्छेपत्वेनोपसंहारोऽस्तीति दृष्टा-न्तेन प्राप्ते, ब्रूमः। नैषामुपसंहारो विद्यासु। कुतः॥ वेधाद्यर्थभेदात्॥ सर्वं प्रविध्येत्यादिमन्त्रप्रकाशितानां वेधादीनामर्थानामभिचार-कर्मादिसमवेतानां भेदाद्विद्यास्वसमवेतत्वादित्यर्थः। तथाचाभि-चारकर्मादिसमवेतार्थप्रकाशनसामर्थ्यलक्षणलिङ्गं संनिधिं दुर्बलं तिरस्कृत्य मन्त्राणामभिचारादिकर्माङ्गत्वं संपादयतीति, नविद्या-शेपत्वं प्रवर्ग्यादिकर्मणाम्। संनिधेर्बलीयसा श्रुत्यादिना, ज्योति-ष्टोमादौ विनियुक्तानां न विद्याशेषत्वमिति भावः॥ २५॥

(१९ ज्ञानिनः कर्मणां हान्युपायनाधिकरणम्। सू० १)

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युप-

गानवत्तदुक्तम् ॥ २६ ॥

ताण्डिनां रहस्ये श्रूयते। अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीति । तथैवाथर्वणश्रुतिः, तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति । यथाऽश्वो जीर्णानि रोमाणि रजोभिः सह त्यक्त्वा स्वच्छो भवत्येवमहमपि पापं सर्वं विधूय निर्मलः सन्, यथा वा चन्द्रो राहोर्मुखात् प्रमुच्य भास्वरो भवत्येवमकृतं प्रवाहरूपेण अनादिसिद्धशरीरं धूत्वा त्यक्त्वा अतिस्वच्छः सन् कृतात्मा कृतकृत्यो ब्रह्मात्मकं लोकमभिसम्भवाम्याऽऽभिमुख्येन प्रत्यक्त्वेन प्राप्नोमीत्यर्थः । तथा शाक्यायनिनः पठन्ति । तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति । तस्य मृतस्य विदुष इत्यर्थः । तथैव कौशीतकिनः पठन्ति । तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति, अप्रिया दुष्कृतमिति । तत्तेन विद्याबलेन विद्वान् सुकृतदुष्कृते विधूनुते त्यजति। त्यक्तयोस्तयोर्विनियोगमाह । तस्येति । तस्मादुपासको न द्वेष्य इति श्रुतितात्पर्यम् । तत्र शाक्यायनिश्रुतावुपादानमात्रं पुण्यपापयोः श्रुतम् । तच्च विदुषस्त्यागं विना न सम्भवतीति पुण्यपापत्याग आक्षिप्यते। यत्र तु ताण्ड्याथर्वणवाक्यद्वये पुण्यपापत्यागमात्रं श्रुतं, तत्र किं त्यक्तयोरुपादानमन्यत्र श्रुतमत्रोपसंह्रियते न वेति सन्दिह्यते । पूर्वपक्षे विद्यायाः स्तुतिप्रकर्षाऽसिद्धिः फलं, सिद्धान्ते तूपादानस्यात्रोपसंहाराद्विद्यास्तुतिप्रकर्षसिद्धिः। उपासककृतविद्यास्तुत्यर्थं हि श्रुतावुपासकः पुण्यपापे त्यजति, ते चान्यैरुपादीयेते इत्युच्यते । सा च स्तुतिः सता गुणेन । तथाचोपास्यगुणोपसंहारप्रसङ्गेन स्तुत्यर्थं गुणोपसंहारो विचार्य्यते इति प्रासङ्गिकी

पादसङ्गतिः, तत्र यथा पूर्वं विद्यासन्निधौ श्रुतस्यापि मन्त्रादेर्विद्यायामसामर्थ्यादनुपसंहार उक्तः, एवं क्वचित् कौशीतकिरहस्ये हानसन्निधौ श्रुतस्याप्युपादानस्योपादानमन्तरेणाऽपि तूष्णीं हानसम्भवेन हानस्योपादानोपपादनसामर्थ्याभावान्नोपसंहार इति दृष्टान्तेन प्राप्ते, ब्रूमः । तुः कैवल्यवाची । तथाच केवलहानौ श्रुतायां सत्यां तत्रोपादानमुपसंहर्तव्यम् । कुतः । उपायनशब्दशेषत्वादश्वरोमविधूननदृष्टान्तेनोक्तस्य पुण्यपापहानस्य नाशत्वाभावेन विधूतयोः पुण्यपापयोरन्यत्राऽवस्थानरूपोपायनसापेक्षत्वादुपायनं क्वचिदपि हानसन्निधौ श्रूयमाणं केवलहानश्रवणे आयाति । पुण्यपापहानेनापेक्षितस्योपादानात्मकस्योपायनस्य तद्धानशेषत्वादित्यर्थः । ज्ञानात् पूर्वयोः पुण्यपापयोर्नाशः उत्तरयोरश्लेष इति फलाध्याये वक्ष्यते । अतो हानं विद्वद्भोज्यत्वाभावः । तत्तुल्यकर्मप्राप्तिरुपादानमिति फलतो द्रष्टव्यम् । तत्र अमूर्त्तयोः पुण्यपापयोरन्यत्र सञ्चारात्मकोपादानस्य मुख्यस्यायोगात् सूत्रे शब्दपदेन हानावुपायनोपसंहारस्याऽस्तुत्यर्थत्वं सूचितमिति बोध्यम् । शाखान्तरस्थो विशेषः शाखान्तरेऽप्यपेक्षित उपसंहरणीय इत्यत्र दृष्टान्तमाह ॥ कुशाच्छन्द इत्यादिना ॥ तत्र कुशदृष्टान्तो यथा, कुशा वानस्पत्याः स्थेत्यादौ भाल्लविनां श्रुतौ, हे कुशाः समिद्रूपा यूयं वानस्पत्याः स्थ मां यजमानं रक्षतेति यजमानप्रार्थने वनस्पतियोगित्वेन सामान्यसमिच्छ्रवणे शाकट्यायनिनाम् औदुम्बरा इति शाखान्तरीयो विशेष आश्रितः । औदुम्बराः कुशा इति । आछन्दोदृष्टान्तो यथा, छदोभिः स्तुवीतेत्यत्र देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे देवच्छन्दांसि पूर्वाणीति, पैङ्गिश्रुत्या निर्णयः । स्तुतिदृष्टान्तो, यथा षोडशिनः पात्रविशेषस्य ग्रहणे अङ्गभूतं स्तोत्रं

कदा कदा कर्त्तव्यमित्याकाङ्क्षायां छन्दोगानां कालविशेषप्राप्तौ समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोतीति तैत्तिरीयकवाक्यात् कालविशेषधीर्भवति एवम्भूताया आर्च्यानां श्रुतेर्वा कालविशेषधीरित्युपगानदृष्टान्तः । यथा ऋत्विज उपगायन्तीति सामान्यवाक्यं, शाखान्तरीयं, नाध्वर्युरुपगायतीति विशेषमपेक्ष्याध्वर्युवर्जिता ऋत्विज उपगायन्तीत्येतदर्थपरतया निश्चीयत इति । तथा च यथा कुशादिषु श्रुत्यन्तरगतविशेषाऽन्वयस्तथा हानौ उपायनान्वय इत्यर्थः । कुशादिसामान्यश्रवणं शाखान्तरीयविशेषसापेक्षमित्यङ्गीकर्तव्यम् । निरपेक्षत्वेऽष्टदोषदुष्टविकल्पः स्यात् । इदं च सामान्यवाक्यस्य विशेषसापेक्षत्वं जैमिनेरपि संमतमित्याह ॥ तदुक्तमिति ॥ पूर्वमीमांसायां जैमिनिना तदुक्तमित्यर्थः । तथाहि । अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यादिति जैमिनिसूत्रम् । अस्यार्थः । ओ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये जामहे इति पञ्चाक्षरं, द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त इत्यनारभ्याऽधीतवाक्यं श्रुतं, नानुयाजेषु ये यजामहे करोतीति विशेषवाक्यं तस्य वाक्यस्य शेषः स्यात् । तथाच नञः पर्युदासार्थतया अनुयाजव्यतिरिक्तेषु यज्ञेषु सप्तदशाक्षरगणः प्रयोक्तव्य इत्येको विधिर्भवति । यदि नञो निषेधकत्वेन सामान्यवाक्यं विशेषाऽनपेक्षं तदा सामान्यवाक्येन विहितस्य गुणस्य निषेधादनुयाजेषु तस्य विकल्पः स्यात् । स चान्याय्यो विधीनामित्येकदेश एव स्यादिति प्रजापतिरिति स्तुतिः । स हि लिङ्गात्मा सप्तदश इति । अथवा उदाहृतश्रुतिष्वेव किं पुण्यपापयोर्विधूननं हानमभिप्रेतम्, उत तयोः फलतश्चालनमि[illegible]विशये, फलतश्चालन-

मेवेति न पुरुषान्तरे तयोः फलहेतुत्वमिति प्राप्ते ब्रूमः। हानावेवायं विधूननशब्दो वर्तितुमर्हति। उपायनशब्दशेषत्वादुपायनशब्दसन्निधौ विधूननशब्दस्य श्रुतत्वादित्यर्थः। उपादानात्मकोपायनस्य हानं विना असम्भवात्। विधूननशब्देन, धूञ् कम्पने इति धातुजन्येन चलनवाचकेनापि हानमेव लक्ष्यमिति भावः। ननूपायनशब्दसन्निधौ श्रूयमाणविधूननशब्दस्य हानिलक्षकत्वेऽपि केवलविधूननशब्दस्य न हानलक्षकत्वमिति शङ्कां, कुशाच्छन्द इत्यादिना निराकरोति। यथा कुशादिस्थले शाखान्तरीयविशेषश्रवणं निर्णायकं, तथेहापि क्वचिद्विधूननसान्निधौ श्रूयमाणमुपायनं सर्वत्र विधूननस्य निर्णायकमित्यर्थः। तदुक्तमिति पूर्ववद् व्याख्येयम्॥ २६॥

(१६ उपासकानां कर्मत्यागव्यवस्थाधिकरणम्। सू० २)

साम्पराये तर्तव्याभावात्तथा ह्यन्ये॥ २७॥

पूर्वं विद्यायाः कर्महानिहेतुत्वं सिद्धं कृत्वा केवलहानश्रवणे उपायनस्योपसंहार उक्तः। इदानीं विद्यायाः कर्महानिहेतुत्वं नास्तीत्याक्षेपात् सङ्गतिः। पर्यङ्कस्थब्रह्मोपासकस्य देहत्यागानन्तरं देवमार्गेण ब्रह्मलोकं प्रति पर्यङ्कस्थब्रह्मप्राप्त्यर्थं गच्छतो मार्गमध्ये विरजानदीतरणानन्तरं कर्महानिः श्रूयते। विरजां नदीं मनसैवाऽत्येति, तत् सुकृतदुष्कृते विधूनते इति। तत्र संशयः। किं विरजानदीतरणाऽनन्तरं कर्महानिरुत देहत्यागात् प्राक्काल इति। पूर्वपक्षे मरणप्राक्कालीनविद्यां विना नदीतरणस्यैव कर्महानिहेतुत्वमिति विद्याया हानिहेतुत्वाऽसिद्धिः फलम्। सिद्धान्ते विद्यासामर्थ्याज्जीवत एव कर्महानिरिति तत्सिद्धिरिति भेदः। तत्र तत् सुकृते इत्यत्रत्येन तदिति सर्वनाम्ना तस्मादर्थकत्वेन हेतुत्ववाचिना नदीतरणस्यैवाऽव्यवहितस्य

कर्महानिहेतुत्वमिति गम्यते । तथाच नदीतरणानन्तरमेव कर्महानिरिति प्राप्ते, ब्रूमः । सांपराये परलोकसाधनीभूतविद्याकाल एव कर्महानिर्युक्ता । कुतः । तर्त्तव्याऽभावान्नदीतरणाऽनन्तरं पुण्यपापकर्मणा तर्त्तव्यस्य निर्वर्त्यस्य फलस्याभावादित्यर्थः । अत्राऽयं विकल्पः । किं नदीतरणानन्तरं कर्मणा निर्वर्त्यफलसत्त्वात्तावत्पर्यन्तमक्षीणत्वं कर्मण उच्यते, उत नदीतरणं विना कर्मक्षयहेतोरभावाद्वा । आद्ये सूत्रोक्तो हेतुर्बोध्यः । द्वितीयस्त्वसिद्धः । कर्मक्षयहेतोर्विद्यायाः सत्त्वात् । कर्मक्षयं विना नदीतरणाऽनुपपत्तेश्च । नच सर्वनाम्ना नदीतरणस्य हेतुत्वप्रतीतिर्युक्ता । सर्वनाम्नः प्राधान्येन प्रकृतविद्यापरामर्शित्वादिति । तस्मात् पूर्वं जात एव कर्मक्षयो नदीतरणाऽनन्तरं पठ्यत इति मन्तव्यम् । तथा ह्येके शाखिनस्ताण्ड्यादयो जीवद्दशायामेव कर्मक्षयमश्व इव रोमाणीत्यादावधीयते । अतश्च जीवत एव विद्यासामर्थ्यात् कर्मक्षय इति ॥ २७ ॥

ननु कर्मक्षयस्य विद्याफलत्वे ब्रह्मप्राप्तेरिव देहत्यागोत्तरकालीनत्वं स्यादत आह—

छन्दत उभयाविरोधात् ॥ २८ ॥

छन्दतः स्वेच्छया विद्याऽनुष्ठानं जीवत एवेति तद्धेतुकः, कर्मक्षयो जीवत एव युक्तः । सति हेतौ कार्ये विलम्बायोगात् । एवं सति विद्याकर्मक्षययोर्निमित्तनैमित्तकभावे ताण्ड्यादिश्रुत्योरुभयोराविरोधो भवतीत्यर्थः । ब्रह्मप्राप्तेर्देहत्यागं विनाऽनुपपत्तेः । कृते चानुपपत्त्यभावात् तज्जीवत एव कर्मक्षय इति भावः । तस्माद् विद्याफलत्वं कर्मक्षयस्येति सिद्धम् ॥ २८ ॥

एवं प्रसङ्गागतं विद्योदयानन्तरमेव कर्महानमिति निरूप्य यथा हानसन्निधौ क्वचिच्छ्रूयमाणमुपायनं सर्वत्रोपसंह्रियते

तथा हानसन्निधौ क्वचिच्छ्रूयमाणो देवयानः पन्थाः सर्वत्रोपसंहर्त्तव्य इति दृष्टान्तेनाक्षिप्य समाधत्ते—

( १७ उपासनया ब्रह्मलोकगन्तॄणामेव मार्गव्यवस्था- )
( ऽधिकरणम् । सू० २ )

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

कर्महानसन्निधौ क्वचिद्देवयानः पन्थाः श्रुतः, क्वचिन्न श्रुतो निर्गुणविद्यास्थले । तत्र किं देवयानोपसंहारोऽस्ति न वेति संदेहे, अस्तीति प्राप्ते, ब्रूमः । गतेर्देवयानस्यार्थवत्त्वम् उभयथा विभागेन भवितुमर्हति । क्वचित्सगुणविद्यायां देवयानमार्गोऽस्तीति, क्वचिन्निर्गुणविद्यायां नेति । अन्यथा सर्वत्र देवमार्गोपसंहाराङ्गीकारे, विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यं प्रत्यगभिन्नं ब्रह्मलक्षणं नित्यशुद्धमुपैतीति श्रुतिविरोधः स्यादित्यर्थः ॥ २९ ॥

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

क्वचिद्विद्यायां गतिरस्ति, क्वचिन्नास्तीति, गतेरुभयथाभाव उपपन्नः । कुतः ॥ तल्लक्षणार्थोपलब्धेः ॥ सा गतिर्लक्षणं कारणं यस्य, सगुणविद्याफलस्य पर्यङ्कस्थब्रह्मप्राप्तिरूपस्य लोकान्तर्वर्त्तिनोऽर्थस्य तस्य श्रुतिषूपलब्धेरित्यर्थः । निर्गुणविद्यायां मार्गसाध्यफलाऽभावान्न तस्योपसंहारः ॥ लोकवत् ॥ यथा लोके रामसेतुवासिनां गङ्गाप्राप्त्यर्थं पन्था अपेक्षितो न गङ्गास्थानां, तद्वदित्यर्थः । तस्मान्न निर्गुणविद्यायां मार्गोपसंहार इति सिद्धम् ॥ ३० ॥

( १८ सर्वास्वेवोपासनासु मार्गकल्पनाधिकरणम् । सू० १ )

अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

सगुणविद्यासु क्वचित् पञ्चाग्निविद्यादिषु मार्गः श्रूयते । क्वचित्तु वैश्वानरविद्यादिषु न श्रूयते । तत्र किं क्वचिच्छ्रुतमार्गस्याऽन्यत्रोपसंहारोऽस्ति न वेति संदेहे, यद्विद्याप्रकरणे मार्गः श्रुतः, स तत्रैवेति प्रकरणबलान्नियम एव, नोपसंहार इति पूर्वाधिकरणदृष्टान्तेन प्राप्तावुच्यते । सर्वेषां सगुणोपासनानां मार्गस्याऽनियमः । क्वचिच्छ्रुतस्य सर्वत्रोपसंहार इति यावत् । ननु प्रकरणबलान्नियमो युक्तः । अन्यथा प्रकरणविरोध इतिचेत् । उच्यते । प्रकरणेनाविरोध एवानियमस्य । कुतः ॥ शब्दानुमानाभ्याम् ॥ श्रुतिस्मृतिभ्यामित्यर्थः । य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवन्तीत्याद्या श्रुतिः । ये अधिकृता एतद् द्युलोकादिपञ्चकमेवमाग्नित्वेन ये विदुस्तेऽर्चिरभिसंभवन्तीति सबन्धः । तद्वद् येऽप्यमी अरण्ये सत्यं ब्रह्म श्रद्धां तपः पूर्वमुपासते तेऽप्यर्चिरभिसंभवन्तीत्यर्थः । तथाच पञ्चाग्निविद्याविदामिव विद्यान्तरशीलानां वाक्येनैव प्रकरणाद् बलीयसा देवमार्गोऽवगतेः, प्रकरणं बाध्यमिति भावः ॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।

एकया यात्यनावृत्तिमन्यया वर्त्तते पुनरित्याद्या स्मृतिरप्युपासकस्याऽविशेषेण मार्गं दर्शयति । जगतो विद्यायां कर्मणि वाऽधिकृतस्य जनस्येत्यर्थः ॥ ३१ ॥

( १९ तत्त्वज्ञानिनां मुक्तिनैयत्याधिकरणम् । सू० १ )

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

पूर्वं निर्गुणविद्यायां न मार्गः, सगुणविद्यायां तु सर्वत्र मार्ग इति व्यवस्था कृता । इदानीं निर्गुणविद्यायां मोक्षहेतुत्वाऽनुपपत्तेः स्वर्गादिफलकत्वं वक्तव्यम् । तच्चामुष्मिकं फलं, मार्गमन्तरेण

न सम्भवतीति कृतव्यवस्थाया आक्षेपात् सङ्गतिः। अपान्तरतमवसिष्ठसनत्कुमारादीनां निर्गुणब्रह्मविदां पुनःपुनरुत्पत्तिः स्मर्यते। अपान्तरतमः कलिद्वापरयोः सन्धौ विष्णुनियोगात् कृष्णद्वैपायनः सम्बभूवेत्यादिना। तत्र संशयः। विदुषो वर्त्तमानदेहपातानन्तरं देहान्तरप्राप्तिरस्ति न वेति? अत्र पूर्वपक्षे वसिष्ठादिनिष्ठब्रह्मविद्याया इवेतरविद्वन्निष्ठब्रह्मविद्याया अपि मोक्षहेतुत्वाभावेनैश्वर्यादिफलप्राप्त्यर्थं देहान्तरप्राप्तिरस्त्येवेति निर्गुणविद्यायामपि मार्गोपसंहार इति फलम्। सिद्धान्ते तु अपान्तरतमप्रभृतीनामाधिकारिकाणां वेदप्रवर्त्तनादिषु लोकव्यवस्थाहेतुष्वऽधिकारेषु परमात्मना नियुक्तानां यावदधिकारमवस्थितिर्यावत्प्रारब्धकर्मावस्थितिस्तस्य प्रारब्धकर्मणः प्रतिबन्धकस्यानेकशरीरभोग्यफलहेतोस्तस्य फलस्य भोगेन नाशे प्रतिबन्धकान्तराऽभावात्। अनादौ संसारे सञ्चितकर्मणां च ज्ञाननाश्यत्वेनाऽप्रतिबन्धकत्वादप्रतिबद्धः साक्षात्कारो वर्त्तमानदेहपातानन्तरं कैवल्यं संपादयतीति, न देहान्तरप्राप्तिरप्रतिबद्धसाक्षात्कारवतः। तथैव श्रुतिः। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये इत्थं प्रतिबद्धसाक्षात्कारवतो वर्तमानदेहपातावधिं कैवल्यस्य श्रावयति। तथाच न विदुषो मार्गापेक्षेति न मार्गस्य निर्गुणविद्यायामुपसंहार इति सिद्धम्॥ ३२॥

बृहदारण्यके श्रूयते याज्ञवल्क्यस्य गार्गीं स्त्रियं प्रत्युत्तरम्। एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमित्यादि। एवमाथर्वणेऽप्यक्षरमधिगम्यत इत्यक्षरं ब्रह्मोपक्रम्य श्रावयति। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुरित्यादि। एवं तत्र तत्र निर्गुणब्रह्मप्रमित्यर्था निषेधाः श्रूयन्ते। तत्र संशयः। क्वचिन्निषेधश्रुतावश्रुतनिषेधानां श्रुत्यन्तरादुपसंहारोऽस्ति? न

वेति । तत्र यथा पूर्वमाधिकारिकाणां वसिष्ठादीनां प्रारब्धकर्मण एव देहान्तरसंबन्धसिद्धेर्न सञ्चितकर्मणो देहान्तरसंबन्धहेतुत्वमित्युक्तम् । तथेहापि तत्तद्वाक्योक्तैरेव निषेधैरुपलक्षणतया सर्वद्वैतनिषेधसिद्धेर्न शाखान्तरीयनिषेधानां तत्र ब्रह्मप्रमितिहेतुत्वमित्यनुपसंहार इति दृष्टान्तेन प्राप्ते, ब्रूमः—

( २० निषेधोपसंहाराधिकरणम् । सू० १ )

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

अक्षरे धर्मिणि द्वैतनिषेधधियोऽक्षरधियस्तासां सर्वत्र निषेधप्रकरणेष्ववरोध उपसंहारो न्याय्यः । कुतः ? ॥ सामान्यतद्भावाभ्याम् ॥ द्वैतप्रपञ्चनिरासेन ब्रह्मप्रतिपादनस्य सर्वत्र समानत्वात् तस्य ब्रह्मणः प्रतिपाद्यस्य सर्वत्र भावादेकत्वेन प्रत्यभिज्ञायमानत्वाच्च तच्छेषाणां निषेधशब्दप्रत्ययानां सर्वत्रोपसंहार इत्यर्थः ॥ औपसदवत् ॥ तथाहि यजुर्वेदे जमदग्निः पुष्टिकामश्चतूरात्रेण यजेतेत्युत्पन्ने जामदग्न्याऽहीने पुरोडाशिन्य उपसदो भवन्तीति पुरोडाशयुक्तास्तुपसत्स्वाष्टिपूपदिष्टासु पुरोडाशप्रधानकमन्त्राणामुद्गातृवेदोत्पन्नानामग्नेर्वेहोत्रं वेरध्वरमित्यादीनामुद्गात्रा प्रयोगे प्राप्ते अध्वर्युकर्तृकेषु, पुरोडाशप्रदाने तेषां मन्त्राणां विनियोगाद्विनियोगविधेश्च सार्थक्यसम्पादकस्य स्वरूपमात्रबोधकोत्पत्तिविध्यपेक्षया मुख्यत्वान्मुख्याऽनुरोधेन अध्वर्युणैव प्रयोगो, न गौणोत्पत्तिविध्यनुरोधेनोद्गात्रा प्रयोग इति यथाऽध्वर्युकर्तृकपुरोडाशशेषाणां मन्त्राणां यत्र क्वचिच्छ्रुतानामप्यध्वर्युणा सम्बन्धः । एवमक्षरप्रमितिशेषाणां निषेधानां यत्र क्वचिच्छ्रुतानामप्यक्षरेण सर्वत्र

सम्बन्ध इत्यर्थः । अस्मिन्नेवाऽर्थे उदाहरणान्तराविवक्षया जैमिनि-सूत्रमुदाहरति ॥ तदुक्तमिति ॥ गुणमुख्यव्यतिक्रमे तदर्थत्वा-न्मुख्येन वेदसंयोग इति जैमिनिसूत्रम् । य एवं विद्वान् वार-वन्तीयं गायति, य एवं विद्वान् यज्ञायज्ञीयं गायति, य एवं विद्वानग्निमाधत्त इति यजुर्वेदविहिताऽऽधाने अङ्गत्वेन, य एवं विद्वान् वामदेव्यं गायतीति यजुर्वेद एव सामानि विहितानि विषयः । वारवन्तपदयुक्तं साम वारवन्तीयम् । एवमग्रेऽपि उच्चैः साम्नोपांशु यजुषेति सामयजुषोः स्वरभेदोऽस्ति । तत्र संश-यः । किमेतानि सामानि सामवेदोत्पन्नत्वात्तदीयेनोच्चैःस्वरेणा-ऽऽधाने प्रयोक्तव्यानि, उत येन यजुर्वेदेन विनियुज्यन्ते त-दीयेनोपांशुस्वरेणेति । तत्रोत्पत्तिविधिवलादुच्चैःस्वरेण, प्रयोगे प्राप्ते सिद्धान्तः ॥ गुणमुख्येति ॥ गुणमुख्ययोरुत्पत्तिविनियोग-विध्योर्व्यतिक्रमे स्वरविषये विरोधे मुख्येन विनियोगविधिना वारवन्तीयादेर्वेदस्य संयोगो ग्राह्यः । साम्नां विनियोजक-वेदस्वरसंयोग इति यावत् । कुतः ॥ तदर्थत्वात् ॥ उत्पत्तिविधे-र्विनियोगार्थत्वादित्यर्थः । एतत्समानन्यायत्वेनौपसदमन्त्राः, पूर्व-मुदाहृता इति मन्तव्यम् ॥ ३३ ॥

( २१ मन्त्रद्वयस्य विद्यैकताधिकरणम् । सू० १)

इयदामननात् ॥ ३४ ॥

द्वा सुपर्णा सयुजेत्यादिमन्त्र आथर्वणादौ श्रूयते । काठकेऽपि, ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्ध इत्यादि श्रूयते । तत्र संशयः । किमनयोर्मन्त्रयोर्विद्याभेदः, उत विद्यै-क्यमिति । पूर्वपक्षे विद्याभेदादन्योऽन्यं गुणाऽनुपसंहारः फलं, सिद्धान्ते विद्यैक्यादुपसंहार इति । तत्र पूर्वं वेद्यस्याक्षरस्या-ऽभिन्नत्वेन विद्यैक्यादक्षराधियाम् उपसंहार उक्तः । तर्हि प्र-

कृते द्वा सुपर्णेति मन्त्रे एकस्यैव भोक्तृत्वम्। ऋतं पिबन्तावित्यत्र उभयोरपि भोक्तृत्वं श्रूयते इत्युभयत्र वेद्यभेदाद्विद्याया भेद इति प्रत्युदाहरणेन प्राप्ते, ब्रूमः। मन्त्रद्वये विद्यैक्यमेव। कुतः। इयत्तावच्छिन्नस्य द्वित्वावच्छिन्नस्य, वेद्यस्योभयत्राप्याभिन्नत्वेनामननादित्यर्थः। अत्र हि मन्त्रद्वयेभोक्तृजीवानुवादेन परमात्माभेदः प्रतिपाद्यः। पिबन्ताविति प्रयोगस्तु भोक्तृजीवसाहचर्यादभोक्तुरीश्वरे, छत्रिणो गच्छन्तीतिवद् उपपद्यते इत्युक्तं गुहाधिकरणे। तथाच प्रातिपाद्यैक्यान्निर्गुणविद्यैक्यमित्यविरोधः॥ ३४॥

( २२ उपस्तकहोडब्राह्मणयोर्विद्यैकताधिकरणम्। सू० २ )

## अन्तरा भूतग्रामवत् स्वात्मनः॥ ३५॥

बृहदारण्यके उपस्तो याज्ञवल्क्यं पप्रच्छ, यत्साक्षादपरोक्षाद् ब्रह्म, य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति। स्वतोऽपरोक्षं ब्रह्मैव प्रत्यगात्मेत्याह। य आत्मेति। एतत्प्रश्नोत्तरे, यः प्राणेन प्राणिति स त आत्मा सर्वान्तर इत्यादिना कार्यकारणरहित आत्मा प्रतिपादितः। एवमेव तदनन्तरब्राह्मणे पूर्ववत् कहोडप्रश्ने योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीत्यशनायाद्यतीत आत्मा प्रतिपादितः। तत्र संशयः। किमनयोर्ब्राह्मणयोर्विद्याभेदः, उत विद्यैक्यमिति। फलं पूर्ववत्। पूर्वं, पिबन्तावित्यस्य पदस्य लाक्षणिकत्वेन वेद्याऽभेदाद्विद्यैक्यमुक्तम्। इह तु वेद्यैक्येऽपि न विद्यैक्यम्। समिधो यजतीत्यादौ यजत्यभ्यासवत् प्रकृते आत्माऽभ्यासाद्विद्याया भेदसिद्धेरिति मुख्यः पूर्वपक्षः। एकत्र कार्यादिरहितात्मन उपास्यत्वादन्यत्राऽशनाद्यतीतात्मन उपास्यत्वादुभयत्र वेद्यभेदाद्विद्याभेद इति गौणः पूर्वपक्षः। तत्र गौणं पूर्वपक्षं दूषयति॥ अन्तरेति॥ पूर्वसूत्रस्थस्यामननादितिपदस्यानुषङ्गः। ब्राह्मणद्वयेऽपि स्वात्मनः सर्वा-

न्तरत्वामननाद्वेद्यस्यात्मन एकत्वमेव । उभयोरेकस्मिन् देहे सर्वान्तरत्वायोगात् ॥ भूतग्रामवत् ॥ यथा भूतसमूहात्मके स्थूलदेहे पृथिव्यपेक्षया जलमान्तरं जलापेक्षया तेज इत्यादिक्रमेणापेक्षिकं भूतानामान्तरत्वं न मुख्यं सर्वान्तरत्वम् । तद्वद् ब्राह्मणद्वये वेद्यभेदाङ्गीकारे वेद्यात्मद्वयस्यापि स्यादित्यर्थः । यद्वा भूतग्रामवदिति श्रुत्यन्तरदृष्टान्तार्थम् । यथा, एको देवः सर्वभूतेषु गूढ इत्यादिश्रुत्यन्तरे सर्वेषु भूतेषु सर्वान्तर एक एवात्माम्नायते, तद्वदनयोर्ब्राह्मणयोरित्यर्थः । तथाच वेद्यैक्याद्विद्यैक्यं सिद्धम् ॥ ३५

मुख्यं पक्षमनूद्य दूषयति—

अन्यथा भेदाऽनुपपत्तिरितिचेन्नोपदेशान्तरवत् ॥ ३६ ॥

अन्यथा विद्याभेदाऽनङ्गीकारे आम्नानभेदस्याऽभ्यासस्याऽनुपपत्तिः प्रयोजनाऽभावादितिचेन्न । उपदेशान्तरवदभ्यासस्योपपत्तेरित्यर्थः । तथाहि छान्दोग्ये तत्त्वमसीत्युपदेशे नवकृत्वोऽभ्यस्यमानेऽपि न विद्या भिद्यते।उपक्रमोपसंहारयोरविशेषात् ।तद्वद् ब्राह्मणद्वयेऽपि प्रश्नरूपेणोपक्रमस्यातोऽन्यदार्तमित्युपसंहारस्य चाऽविशेषात् । द्वितीयप्रश्ने यदेव साक्षादपरोक्षाद्ब्रह्मेत्येवकारेण विद्याभेदनिरासाच्च न विद्याभेदः । अभ्यासस्याऽऽदरार्थत्वेन अशनायाद्यतीतत्वादिविशेषप्रतिपादनार्थत्वेन चोपपत्तेरिति ॥३६

( २३ देहादित्यमण्डलवर्त्युपासनायाविद्याभेदाधिकरणम् । सू० )

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

ऐतरेयिन आदित्यपुरुषमधिकृत्य समामनन्ति । तद्योऽहं सोऽसौ योऽसौ सोऽहमिति । तथैव जाबाला अपि, त्वं वा अहमस्मि भगवो अहं वै त्वमसीति । तत्र संशयः । किमात्मन ईश्वरेणैकत्वविषयमेकरूपमेव चिन्तनं विधीयते, उत जीवेश्वर-

योरन्योन्यानुवादेन अन्योन्यात्मकत्वरूपव्यतिहारेण उभयविषयं चिन्तनमिति। अत्र पूर्वपक्षिमते एकरूपत्वाल्लाघवं, सिद्धान्तिमते उभयरूपत्वाङ्गीकारेण व्यतिहारसार्थक्यमितिभेदः। तत्राऽभ्यासस्यादरार्थत्ववद् व्यतिहारोपदेशस्याप्यादरार्थत्वात् तदनुरोधेन न चिन्तनस्योभयरूपत्वं, किं त्वेकरूपत्वमेवेति दृष्टान्तेन प्राप्ते ब्रूमः। व्यतिहार एवात्रोपास्यत्वेनोपदिश्यते, न त्वात्मन ईश्वरेण एकत्वमात्रम् ॥ इतरवत् ॥ यथेतरे सर्वात्मत्वादयो गुणा उपास्यत्वेनोपदिश्यन्ते तद्वत्। प्रतिज्ञातेर्थे हेतुः— विशिंषन्ति हीति ॥ समाम्नातारो जीवपरमात्मानौ व्यतिहारेण विशिंषन्ति, तद्योऽहमित्यादिना। तच्च व्यतिहारेण विशेषणं व्यतिहारस्य उपास्यत्वे सार्थकं स्यात्। अन्यथा जीवस्येश्वरेणैकत्वमात्रस्य उपास्यत्वे तत्प्रतिपादकश्रुत्यंशस्यैवाऽर्थवत्त्वं न त्वीश्वरस्य जीवेनैकत्वप्रतिपादकांशस्येति। तस्मादुभयांशसार्थक्यायोभयरूपं चिन्तनं विधेयमिति सिद्धम्। पूर्वसूत्रे, उपदेशान्तरवदिति दृष्टान्तत्वेन तत्त्वमसीत्येकत्ववाक्यकथनप्रसङ्गेनैकत्ववाक्यस्य तद्योऽहमित्यादेर्विचारात् प्रासङ्गिकी पादसङ्गतिर्बोध्या। यद्वा अस्यामहङ्ग्रहोपास्तौ व्यतिहारस्यानुपास्यत्वान्न सर्वत्राहङ्ग्रहोपास्तौ तस्य व्यतिहारस्योपसंहार इति पूर्वपक्षे फलम्। सिद्धान्ते तस्योपास्यत्वात् सर्वत्रोपसंहार इति साक्षादेव पादसङ्गतिः ॥ ३७ ॥

( २४ सत्यविद्याधिकरणम्। सू० १ )

सैव हि सत्यादयः ॥ ३८ ॥

वाजसनेयके हृदयाख्यं हिरण्यगर्भं प्रस्तुत्य, स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकानिति सत्यविद्यां विधाय तदङ्गत्वेन तदेतत् त्र्यक्षरꣳ सत्यमिति। सइत्येकमक्षरं, तीत्येकमक्षरं, यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्य-

तोऽनृतम् । तदेतदनृतमुभयतः सत्येन परिगृहीतं सत्यभूयमेव भवतीति सत्यनामाक्षराणामुपासनमुक्त्वानन्तरं श्रावयति । तद् यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष इत्यादि । अयमर्थः । हशब्द उपास्यप्रसिद्ध्यर्थः । एतादिति हिरण्यगर्भाख्यं ब्रह्मोपास्यं परामृशति । महद् व्यापकं यक्षं पूज्यं प्रथमजं भौतिकाऽपेक्षयेति शेषः। वेदनाप्रकारमाह । सत्यं ब्रह्मेति । सच्च त्यच्चेति । सत्यं पञ्चभूताऽऽत्मकं हिरण्यगर्भाख्यं ब्रह्म यो वेद उपास्ते स इमाँल्लोकाञ्जयतीत्यर्थः । तीत्येकमक्षरमित्यत्र तकारोपरितन ईकार उच्चारणाऽर्थः । निरच्कस्तकारो बोध्यः।अत्र हि प्रथमोत्तमे अक्षरे सत्यम् । मृत्युसाम्याभावात् । मध्यतो मध्यस्थमक्षरमनृतं मृत्युः मृत्य्वऽनृतयोस्तकारसाम्यात् । तदेतदनृतं मृत्युरूपमुभयतः सत्येन परिगृहीतमन्तर्भावितमतोऽकिञ्चित्करं तत् सत्यभूयं सत्यबाहुल्यमेव भवतीत्यर्थः । तत्त्र हृदयात्मकत्वे सत्यात्मकत्वे च ब्रह्मणः सिद्धमित्यर्थः । यत्तत्सत्यमित्यादिकं, सम्बन्धादेवमन्यत्रापीत्यधिकरणे व्याख्यातम् । तत्र संशयः । किं तद्यत्सत्यमसौ स आदित्य इत्यादिना श्रुतविद्या पूर्वसत्यविद्यातो भिद्यते नवेति पूर्वपक्षे विद्याभेदाद् गुणानुपसंहारःफलं, सिद्धान्ते तदुपसंहार इति बोध्यम् । तत्र पूर्वं जीवब्रह्मणोर्व्यतिहारोक्तिभेदाद्विद्याया द्विरूपत्वमुक्तम् । तद्वदिहापि सत्यविद्यायां लोकजयस्य फलत्वादनन्तरविद्यायां च हन्ति पाप्मानमित्यादिना पापनिवृत्तेः फलत्वात् फलोक्तिभेदाद्विद्याभेद इति दृष्टान्तेन प्राप्ते, ब्रूमः । इयमनन्तरविद्या सैव सत्यविद्यैव, न ततो भिद्यते । कुतः । तद्यत्तत्सत्यमिति प्रकृतस्यैवोपास्यस्य हिरण्यगर्भस्याऽऽकर्षणादिति, हिशब्दसूचितो हेतुर्बोध्यः । न हि वेद्याभेदे विद्याभेदो

युक्तः । न च फलभेदाद्विद्याभेदः । सत्यविद्याप्रकरणे पठितस्य फलस्य सर्वस्यापि सत्यविद्याफलत्वादिति । तस्माद्विद्यैक्यात् पूर्वापरवाक्यस्थाः सर्वे सत्यादयो गुणा उपसंहर्तव्या इति सिद्धम् ॥ ३८ ॥

( २५ दहरहार्दाकाशयोरुपसंहाराधिकरणम् । सू० १ )

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

दहरविद्यायां दहराकाशमात्मानं प्रकृत्य छन्दोगा आमनन्ति, एष आत्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प इत्यादि । तथा वाजसनेयिनोऽपि,स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदये आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशान इत्यादि । तत्र संशयः । किमन्योन्यं गुणोपसंहारोऽस्ति न वेति। तत्र पूर्वं वेद्याभेदेन विद्यैक्याद्गुणोपसंहार इत्युक्तम् । तर्हि प्रकृते छान्दोग्ये दहराकाशस्यैवोपास्यत्वाद्वाजसनेयिके आकाशनिष्ठस्यात्मनो ज्ञेयत्वाद्वेद्यभेदेन सगुणनिर्गुणविद्ययोर्भेदान्नोपसंहार इति प्रत्युदाहरणेन प्राप्ते, ब्रूमः । कामादि सत्यकामादिगुणजातमितरत्र वाजसनेयिके उपसंहर्तव्यम् । यच्च सर्ववशित्वादिकं तदपि तत्र छान्दोग्ये उपसंहर्त्तव्यम् । कुतः ॥ आयतनादिभ्यः॥ हृदयस्याऽऽयतनस्य ब्रह्मणश्चोपास्यस्य ब्रह्मणः सेतुत्वव्यपदेशस्य चोभयत्राविशेषादित्यर्थः । अयं भावः । दहराधिकरणे दहराकाशस्य ब्रह्मत्वसमर्थनान्न वेद्यभेदः । ननु तथापि सगुणनिर्गुणविद्ययोरनयोर्भेदो दुर्वार इतिचेत् । सत्यमस्ति भेदः । कथं तर्हि गुणोपसंहार इति चेद्, न ह्यत्रोपासनार्थं गुणोपसंहारं ब्रूमः । किन्तु विद्यास्तुत्यर्थम् । स्तुत्यर्थगुणोपसंहारश्च विद्याभेदेऽपि सम्भवति । स्तुतेरुभयत्राऽविशेषादिति ॥ ३९ ॥

( २६ उपवासे प्राणाहुतिलोपाधिकरणम् । सू० २ )

आदरादलोपः ॥ ४० ॥

छान्दोग्ये वैश्वानरविद्यायां प्राणाग्निहोत्रं श्रूयते । तद्य-द्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेत्यादिना भक्तमन्नम् । जाबालश्रुतौ पूर्वो-ऽतिथिभ्योऽश्नीयादिति वैश्वानरोपासकस्यातिथिभ्यः पूर्वं भोजनं विधायातिथिभोजनप्राथम्यनिन्दया पूर्वभोजनं स्तौति । यथा ह वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तदिति । यथा स्वाग्निहोत्राकरणेन पराग्निहोत्रकरणमयुक्तमेवं तदतिथिभ्यः पूर्वं भोजनदानमित्यर्थः । तत्र संशयः । किं भोजनलोपे प्राणा-ऽग्निहोत्रस्य लोप उताऽलोप इति । अलोपसिद्धिः पूर्वपक्षे फलं, सिद्धान्ते तु लोपसिद्धिरिति । उपास्तिविचारप्रसङ्गेन तदङ्गपूर्व-भोजनाश्रितप्राणाग्निहोत्रविचारादस्ति पादसङ्गतिः। उपास्तिलोपे-ऽपि स्तुत्यर्थत्वेन गुणोपसंहारवद्भोजनलोपेऽपि पूर्वभोजनस्तुत्युप-पत्त्यर्थं प्राणाग्निहोत्रलोप इत्यवान्तरसङ्गतिः । तत्र पूर्वपक्षसूत्र-म् ॥ आदरादलोप इति ॥ भोजनलोपेऽप्यग्निहोत्रस्यालोपः । पूर्वभोजनस्य प्राथम्यरूपधर्मलोपमसहमानया जाबालश्रुत्या प्राणाग्निहोत्रे आदरकरणात् । न हि धर्मलोपमसहमाना श्रुतिः प्राणाग्निहोत्रस्य धर्मिणो लोपं सहते । तस्माद् भोजनलोपेऽप्य-ऽन्येन भक्ष्यद्रव्येण प्राणाग्निहोत्रं कर्त्तव्यमित्येवं प्राप्ते ॥ ४० ॥

सिद्धान्तयति—

उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

भोजने उपस्थिते, अतोऽस्मादेव भोजनद्रव्यात् प्राणाग्नि-होत्रं कर्त्तव्यम् अनुपस्थिते भोजने प्राणाग्निहोत्रं न कर्त्तव्यमेव

कुतः ॥ तद्वचनात् ॥ तद्धोमीयमिति वचनात् । सन्निहितसाकाङ्क्षात्तद्यद्भक्तं प्रथमागच्छेदित्यनेन सन्निहितस्य भोजनार्थप्राप्तद्रव्यस्य होमसाधनत्वप्रतीतेरित्यर्थः । तथाच भक्तागमनस्य भोजनप्रयुक्तस्य भोजनद्रव्यलोपेऽग्निहोत्रस्य लोप एव । आदरवचनं तु भोजनप्रसक्तिदशायां द्रष्टव्यम् ॥ ४१ ॥

सन्ति कर्माङ्गेषूद्गीथादिषु प्राणाद्युपासनानि । तानि किं पर्णतावत् कर्माङ्गानि नित्यवदनुष्ठेयानि, उत गोदोहनवत् स्वतन्त्रफलसाधनान्यनित्यानीति संशयः । पूर्वोत्तरकोटिसिद्धिरेव पूर्वोत्तरपक्षयोः फलम् । उपासनाविचारात्मकत्वादस्य पादसङ्गतिः । अनित्यभोजनाङ्गाऽऽश्रितप्राणाग्निहोत्रस्यानित्यत्ववन्नित्यकर्माश्रितोपासनानां नित्यत्वमित्यवान्तरसङ्गतिः । तत्र यस्य पर्णमयी जुहूर्भवतीति कश्चित् क्रतुमनारभ्याधीतस्य पर्णमयीत्वस्याऽव्यभिचरितक्रतुसंबन्धिजुहूद्वारा क्रत्वङ्गवदनारभ्याऽधीतानाम् उद्गीथाद्युपासनानामप्युद्गीथादिद्वारा क्रत्वङ्गत्वमिति प्राप्ते, ब्रूमः—

( २७ अङ्गावबद्धोपास्त्यनैयत्याधिकरणम् । सू० १ )

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥**

तन्निर्द्धारणानियम इति ॥ तेषां कर्माङ्गाश्रितानां निर्द्धारणानामुपासनानामनियमः नित्यवदनुष्ठानाभावः । कुतः ॥ तद्दृष्टेः ॥ तस्यानियमस्य श्रुतौ दर्शनादित्यर्थः । तथाहि । तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च न वेदेत्यनुपासकस्यापि कर्मणि कर्तृत्वं वदन्ती श्रुतिरुपासनस्यानियतत्वं दर्शयति । उपासनस्य पृथक्फलश्रवणादपि पशुप्राप्तिफलकगोदोहनवन्न कर्माङ्गत्वमित्याह । पृथग्घीति । हि यतः पृथगप्रतिबन्धः कर्मणो वीर्यवत्तरत्वात्मकसमृद्धिरूपफलमुपलभ्यते । अतोऽपि न कर्माङ्गत्वमुपासनस्येत्यर्थः । तथा ह्युपासनस्य पृथक्फलत्वे श्रुतिः । तेनोभौ कर्म

कुरुतो यश्चैतदेवं वेद, यश्च न वेद नाना तु विद्याचाऽविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति । तेनोङ्कारेणोभावपि कर्म कुरुतः । यश्चैतदोङ्काराख्यमक्षरम् एवं रसतमत्वादिगुणकं वेद यश्च न वेद तावुभाविति संबन्धः । एवमनभिप्रेतपक्षमुक्त्वा स्वाभिप्रेतमाह श्रुतिः ॥ नाना त्विति ॥ तुः पूर्वपक्षनिरासार्थः । कर्माङ्गोङ्कारमात्रज्ञानापेक्षया रसतमत्वादिगुणकोङ्कारज्ञानं नानैव पृथक्फलकम् । दृष्टो हि मणिविक्रये शबरवणिजोः सामान्यविशेषज्ञानाभ्यां फलभेदः । तस्माद्यदेव कर्म विद्ययोद्गीथादिविषयया श्रद्धयाऽऽस्तिक्यबुद्ध्योपनिषदा तत्तद्देवताध्यानेन युक्तं करोति तदेव कर्म वीर्यवत्तरं भवतीत्यर्थः। अनेन विद्याहीनं कर्म वीर्यवन्मात्रं, विद्यासहितं तु वीर्यवत्तरमिति गम्यते । न हीदं विद्यायाः कर्माङ्गत्वे संभवति । अङ्गहीनस्य कर्मणो वीर्यवन्मात्रत्वस्य फलजनकत्वलक्षणस्याऽनुपपत्तेः । तस्मात् पर्णताया अक्रियात्मकत्वेन क्रतुसंबन्धं विना स्वातन्त्र्येण फलसाधनत्वाभावेन विषमत्वाद्विद्यायाः क्रियात्मकत्वेन स्वातन्त्र्येण फलसाधनत्वसंभवाद्गोदोहनवत् स्वातन्त्र्यमेवेति सिद्धम् ॥ ४२ ॥

( २८ वायुप्राणोपासनयोः प्रयोगभेदाधिकरणम् । सू० १ )

प्रदानवदेव तदुक्तम् ॥ ४३ ॥

बृहदारण्यके छान्दोग्ये च संवर्गविद्यायां वागादिभ्यः प्राणः श्रेष्ठः, अग्न्यादित्यादिदेवताभ्यः श्रेष्ठो वायुरित्यवधारितम् । तत्र संशयः । किमस्यां विद्यायां वायुप्राणयोः प्रयोगैक्यम्, उत प्रयोगभेद इति फलपादसङ्गती पूर्ववत् । पूर्वं फलभेदात् कर्माङ्गानां तदाश्रितोपासनानां च नित्यत्वानित्यत्वलक्षणः प्रयोगभेद उक्तः । तर्हि प्रकृते वायुप्राप्तिलक्षणफलैक्याद्वायुप्राणयोः स्वरूपत

एकत्वेन वेद्याभेदेन विद्यैक्याच्च प्रयोगैक्यमिति प्रत्युदाहरणेन प्राप्ते, ब्रूमः। यथैकस्मिन्नग्निहोत्रे दधितण्डुलादिभिर्गुणैः प्रयोगभेद एवमेकस्यामपि विद्यायां वायुप्राणयोः स्वरूपाभेदेऽप्याधिदैविकत्वाध्यात्मिकत्वरूपावस्थाभेदेन गुणभेदात् प्रयोगभेद इति प्रदानवदेवेदं द्रष्टव्यम्। तथाहि। इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञ इति पुरोडाशत्रयवत्यामिष्टौ श्रुतायां किं त्रयाणां पुरोडाशानां सहप्रदानमुत प्रदानभेद इति विशये देवतैक्यात् सहप्रदाने प्राप्ते, राजाधिराजस्वराजगुणभेदेन तत्तद्विशिष्टदेवताभेदात् पुरोडाशानां प्रदानस्य प्रक्षेपस्य भेद इति यथा तद्वत् प्रकृते वेद्यभेदात् प्रयोगभेद इत्यर्थः। तदुक्तं देवताकाण्डे, नाना वा देवता पृथग् ज्ञानादिति वाशब्दो देवतैक्यनिरासार्थः। नानादेवतेत्यत्र हेतुमाह। पृथगिति। उत्पत्तिवाक्ये एष राजाधिराजस्वराजगुणानां पृथग्ज्ञानात्तद्विशिष्टदेवतानां नानात्वं युक्तमित्यर्थः॥ ४३॥

( २९ मनश्चिदादीनां स्वतन्त्रताधिकरणम्। सू० ९ )

लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि॥ ४४॥

वाजसनेयिनोऽग्निरहस्ये, नैव वा इदमग्रे सदासीन्नाप्यसदित्युपक्रम्य मनसः प्रादुर्भावमुक्त्वा, तन्मन आत्मनोऽग्नीनपश्यदिति मनोऽधिकृत्य पठन्ति। षट्त्रिंशत्सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चित इत्यादि। तथैव वाक्चितः प्राणश्चितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित इत्यन्यानग्नीनामनन्ति। अयमर्थः। पुरुषस्यायुष्ट्वेन क्लृप्तशतवर्षाणामहोरात्राणि षट्त्रिंशत्सहस्राणि। तैरवच्छिन्ना मनोवृत्तयोऽपि षट्त्रिंशत्सहस्राणि भवन्ति। एकस्मिन्नहोरात्रे उत्पन्नसर्वमनोवृत्तिष्वहोरात्रगतैकत्वारोपात्ता एतावत्संख्याका मनोवृत्तय इष्टकात्वेनाग्नि-

त्वेन च सम्पाद्यन्ते, षट्त्रिंशत्सहस्राणीत्यादिना मन एव स्ववृत्तिरूपानग्नीनर्कानर्च्यान् अत एव मनोविकारान् मनश्चितः। मनसा चीयन्ते सम्पाद्यन्ते इति मनश्चितः । तानपश्यदित्यर्थः । एवमेव वागादयोऽपि स्वस्ववृत्तीरग्नित्वेनाऽपश्यन्निति प्रतीन्द्रियवृत्त्येकैकमग्निचयनं सम्पाद्यम् ॥

प्राणो घ्राणम् । कर्मपदमनुक्तकर्मेन्द्रियपरम् । एतेऽग्नयः कर्मप्रकरणे पठिताः । तत्र संशयः । किमेते मनश्चिदादयोऽग्नयः । कर्माङ्गभूताः, उत स्वतन्त्रा इति पादसङ्गतिफले पूर्ववत् ।पूर्वमेकप्रयोगायोगाद्वायुप्राणयोः प्रयोगभेद इत्युक्तम् । तर्हि मनश्चिदादीनां प्रकरणात् कर्माङ्गत्वेनैकप्रयोगसम्भवात् प्रयोगैक्यमिति प्रत्युदाहरणेन प्राप्ते, सिद्धान्तमुपक्रमते ॥ लिङ्गेति ॥ मनश्चिदादयोऽग्नयः स्वतन्त्रा एव । कुतः ॥ लिङ्गभूयस्त्वात् ॥ स्वातन्त्र्यज्ञापकलिङ्गानां भूयसां सत्त्वादित्यर्थः । तथाहि । यत्किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिरिति तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपत इत्यादीनि लिङ्गानि सन्ति । अयमर्थः । सर्वाण्यपि भूतानि, जन्तवो यत्किमपि मनसा सङ्कल्पयन्ति, तेषामेवाग्नीनां सा कृतिः सम्पादनं सर्वजन्तुमनआदिवृत्तीनामग्नित्वेन ध्येयत्वादित्येकं लिङ्गम् । न हि यत्किञ्चित्करणं कर्माङ्गं सम्भवतीति । एवंविदे स्वपते जाग्रतेऽपि सर्वदा सर्वाणि भूतानि तानेतानग्नीन् चिन्वन्तीति लिङ्गान्तरम् । न हि कर्माङ्गं सर्वदाऽनुष्ठीयमानं दृष्टम्। कालविशेष एव तद्विधानादिति। तद्धि लिङ्गप्रकरणाद् बलीयः। तदपि बलीयस्त्वमप्युक्तं पूर्वकाण्डे, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति ॥ एतत्सूत्रार्थो विस्तरेण वाचस्पतिमिश्रैरेतत्पादादौ

वेधाऽधिकरणे वर्णित इतीह विस्तरभयान्नोच्यते इति ॥ ४४ ॥

एवं सिद्धान्तमुपक्रम्य पूर्वपक्षयति—

पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥

सङ्कल्पात्मका मनश्चिदादयोऽग्नयो न स्वतन्त्राः, किन्तु इष्टकाभिरग्निं चिनुते इति प्रकृतस्य पूर्वस्य क्रियामयस्याग्नेरयं विकल्पः सङ्कल्पात्मकोऽग्निः प्रकरणात् स्यात्। न च लिङ्गादग्नीनां स्वातन्त्र्यम् । प्रकृते तु उक्तलिङ्गस्यार्थवादादिकार्यदर्शनलक्षणस्य अर्थवादस्थत्वेन विहितमानसिकाग्निस्तुतिपरत्वेन विध्येकवाक्यतया स्वार्थपरत्वाऽभावात्। सिद्धे हि स्वार्थे तद्दर्शनं लिङ्गमग्नीनां स्वातन्त्र्यं गमयेत् । न ह्यस्ति स्वार्थसिद्धिः । तस्मात् क्रियानुप्रवेशिन एवैते मानसिकाग्नयः । एतेन सौत्रं क्रियापदं व्याख्यातम् ॥ मानसवत् ॥ तथाहि द्वादशाहे श्रूयते । अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णामीति। त्वा त्वां समुद्रमनया रसया पृथिव्या पात्रेण प्रजापतिदेवताकं मनोग्रहं ध्यानमयं ग्रहमापाद्य गृह्णामीत्यर्थः। तत्र किमिदं मानसं द्वादशाहादहरन्तरम्। उत तन्मध्यपातिनो दशमस्याह्नोऽङ्गमिति संदेहे, वाग् वै द्वादशाहो मनो मानसमिति भेदव्यपदेशादहरन्तरमिति प्राप्ते, मानसस्याहरन्तरत्वे मानाभावाद् भेदव्यपदेस्याऽङ्गाङ्गिभावेनाप्युपपत्तेरहरन्तरत्वे द्वादशाहसंज्ञाया गौणत्वप्रसङ्गान्मुख्ये सम्भवति गौणत्वायोगाद् द्वादशाहमध्यपातिनो दशमस्याह्नोऽङ्गं मानसमिति यथा तथेमे मानासिकाऽग्नयः प्रकृतकर्मशेषा इत्यर्थः ॥ ४५ ॥

अतिदेशाच्च ॥ ४६ ॥

मानसिकाग्नीनां मध्ये एकैकोऽग्निस्तावान् यावानसौ पूर्व

इति पूर्वेणेष्टकाचितेनाऽग्निना मानसिकाग्नीनां सादृश्योपदेशाच्च तच्छेषत्वमेकक्रियानुप्रवेशातिरिक्तसादृश्याभावादित्यर्थः ॥ ४६॥

सिद्धान्तयति—

विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुरुक्तपक्षनिरासार्थः । विद्यात्मका एते मनश्चिदादयः स्वतन्त्रा एव, न कर्मानुप्रवेशिनः । कुतः । ते हैते विद्याचिता एवेत्यवधारणादित्यर्थः । एवकारश्रुत्या कर्मप्रकरणं बाध्यमिति भावः ॥ ४७ ॥

लिङ्गादपि तद्बाध्यमित्याह—

दर्शनाच्च ॥ ४८ ॥

मानसिकाऽग्नीनां स्वातन्त्र्यज्ञापकलिङ्गस्य दर्शनाच्च प्रकरणं बाध्यमिति भावः । लिङ्गं पूर्वं दर्शितम् ॥ ४८ ॥

नन्विदं लिङ्गं न साधकमित्युक्तमित्यत आह—

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

श्रुतिरेवकारः । आदिपदेन लिङ्गवाक्ययोर्ग्रहणम् । लिङ्गमुक्तमेव । विद्यया हैवैत एवंविदश्चिता भवन्तीत्येतेषां मानसिकाऽग्नीनां पुरुषसम्बन्धमाचक्षाणं वाक्यं स्वातन्त्र्यबोधकम् । तथाचैतेषां श्रुतिलिङ्गवाक्यानां बलीयस्त्वाद् दुर्बलेन कर्मप्रकरणेनाऽग्नीनां न स्वातन्त्र्यं बाध्यमित्यर्थः । न च लिङ्गस्याऽर्थवादस्थत्वेनाऽसाधकत्वम् । लिङ्गप्रदर्शनार्थमुदाहृतवाक्यानां विधिप्रत्ययसामीप्याभावादपूर्वार्थबोधकत्वाच्च विधायकत्वेनाऽर्थवादत्वाऽभावादिति भावः ॥ ४९ ॥

इतोऽपि मनश्चिदाद्यग्नीनां स्वातन्त्र्यमित्याह—

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्॥५०।

ते मनसैवाऽऽधीयन्त मनसाऽचीयन्त मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवन्मनसाऽशंसन् यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव तन्मनोमयेषु मनश्चित्सु मनोमयमाक्रियत इत्यादिना मन आदिवृत्तिषु कर्माऽङ्गानामनुबन्धात् सम्पादनादग्नीनां स्वातन्त्र्यम्। कर्माङ्गत्वेऽङ्गानां प्रत्यक्षसिद्धत्वेन सम्पादनवैयर्थ्यात् । आदिशब्देनातिदेशो गृह्यते । अतिदेशो हि क्रियामयस्याग्नेर्माहात्म्यमेकैकस्य मानसिकाऽग्नेर्दर्शयन् स्वातन्त्र्यमेषां दर्शयति । यत्त्वयमतिदेशः पूर्वपक्षानुकूल इति । तन्न । अग्निसादृश्येनास्यातिदेशस्य सिद्धान्तेऽप्युपपत्तेः । सूत्रे बहुवचनसिद्ध्यर्थं पूर्वोक्तश्रुतिलिङ्गादिकं बोध्यम् । उक्तश्रुत्यर्थस्तु, तेऽग्नयो मनसैवाऽऽधीयन्त आधानकर्मणा सम्पादिता अचीयन्त, चिता एष्वग्निषु ग्रहाः पात्राण्यगृह्यन्त । गृहीता अस्तुवन् स्तोत्रं कृतवन्त उद्गातारः, अशंसन् शंसनं कृतवन्तो होतारः । किं बहुना, यत्किञ्च कर्माऽऽरादुपकारकं, यत्किञ्च यज्ञीयं, यज्ञनिष्पत्त्यर्थं, सन्निपत्योपकारकं च क्रियते तद्विदुषो मनसैवाऽक्रियत कृतमिति । एवमनुबन्धादिभ्यो हेतुभ्यः स्वातन्त्र्यं मनश्चितादीनाम् ॥ प्रज्ञान्तरपृथक्त्ववत् ॥ यथा प्रज्ञान्तराणां शाण्डिल्यादिविद्यानां स्वातन्त्र्यं तद्वत् ॥ नन्वग्नीनां स्वातन्त्र्ये कर्मप्रकरणादुत्कर्षः क्वाप्यदृष्टः कल्पितः स्यादत आह ॥ दृष्टश्चेति ॥ राजा स्वाराज्यकामो राजसूयेन यजेतेति राजसूयं प्रकृत्य, आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणेत्यादिना श्रुताया अन्तेष्टेर्ब्राह्मणादिकर्तृकाया राजमात्रकर्तृकराजसूयप्रकरणादुत्कर्षो दृष्टः। तद्वदत्रापि अग्नीनां कर्मप्रकरणादुत्कर्ष इत्यर्थः । इदं सर्वं परमततन्त्रे उक्तमित्याह ॥ तदुक्तमिति ॥ ५० ॥

यदुक्तं मानसवदग्नीनां क्रियाशेषत्वमिति तद् दूषयति—

नसामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥

मनश्चिदादीनां मानसेन मानसिकत्वसामान्यादपि क्रियाशेषत्वं न कल्प्यम् । उक्तश्रुत्यादिभ्यः स्वातन्त्र्योपलब्धेर्मृत्युवत् ॥ यथा स एव मृत्युर्य एष एतस्मिन्मण्डले पुरुष इति, अग्निर्वै मृत्युरिति वाऽऽदित्यपुरुषस्याऽग्नेश्च मृत्युशब्दत्वसाम्येऽपि परस्परवैषम्यम् । यथा वा द्युलोकोऽग्निस्तस्यादित्यः समिदित्यादौ समिदादिसाम्यान्न हि द्युलोकस्याऽग्नित्वापत्तिः । किन्तु परस्परवैषम्यं, तद्वन्मानसमानसिकग्न्योर्मानसिकत्वसाम्येऽपि परस्परवैषम्यामित्यर्थः ॥ ५१ ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

मानासिकाग्निब्राह्मणात् परस्मिन् ब्राह्मणे, अयं वा व लोक एषोऽग्निश्चित इत्यादिशब्दस्य ताद्विध्यम् । चितेऽग्नौ पृथिवीदृष्टिरूपस्वतन्त्रविद्याविधित्वमेव लक्ष्यते, न कर्माङ्गविद्याविधित्वम् । तथा यदेतन्मण्डलं तपतीति पूर्वस्मिन्नपि ब्राह्मणे विद्याप्राधान्यं दृश्यते इति चकारार्थः । तथाच तत्समभिव्याहारादस्मिन्नपि ब्राह्मणे विद्यायाः प्राधान्यमिति भावः । नन्वस्मिन् ब्राह्मणे मानासिकाऽग्निविद्यायाः प्रधानत्वे किमर्थं कर्मोपक्रमस्तत्राह ॥ भूयस्त्वादिति ॥ कर्माङ्गानां मानसिकाग्निविद्यायां सम्पाद्यानां वहुत्वाद्विद्यायास्तदुपक्रमेणानुबन्धः प्रतिपादनमित्यर्थः । तस्मादियं मानसिकाग्निविद्या स्वतन्त्रपुरुषार्थहेतुरिति सिद्धम् ॥ ५२ ॥

ननु विद्यायाः पुरुषार्थहेतुत्वमयुक्तम् । देहाऽतिरिक्तस्य पुरुषस्याऽभावादित्याक्षिपति—

( ३० आत्मनो देहातिरिक्तत्वाधिकरणम् । सू० २ )

एक आत्मनः शरीरे भावात् ॥ ५३ ॥

प्रसङ्गादस्य पादसङ्गतिर्बोध्या । अत्र किमात्मा देह उत तदतिरिक्त इति संशयः । पूर्वपक्षे देहातिरिक्तात्माभावात् स्वर्गाऽपवर्गादिशास्त्रवैयर्थ्यं, सिद्धान्ते तत्सार्थक्यमिति विभागः । तत्र एके देहात्मवादिनो लोकायतिका देहातिरिक्तस्यात्मनोऽसत्त्वं मन्यमाना देहात्मेति वदन्ति। कुतः। शरीरे सति चैतन्यसुखादीनां भावात् तदभावे चाभावादित्यन्वयव्यतिरेकाभ्यां तेषां देहधर्मत्वेनातिरिक्तात्मसिद्ध्यभावादिति प्राप्ते ॥ ५३ ॥

सिद्धान्तयति—

व्यतिरेकस्तद्भावाऽभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

न त्वात्मनो देहादव्यतिरेकः,किन्तु व्यतिरेक एव न्याय्यः। कुतः। चैतन्यादीना मात्मधर्माणां तस्य शरीरस्य मरणाऽवस्थायां भावेऽप्यभावित्वाद् देहधर्मत्वासम्भवात् । यथा देहभावे भावाद् देहधर्मत्वं तथा देहभावेऽप्यभावाददेहधर्मत्वमेव कुतो न स्यादित्यर्थः । किञ्च निश्चितान्वयव्यतिरेकाभ्यां देहधर्मत्वं वक्तव्यम् । नचाऽत्र देहाऽभावे अभाव इति व्यतिरेकनिश्चयः सम्भवति । एतद्देहाऽभावेऽपि देहान्तरावच्छेदेन तद्धर्मसत्त्वसम्भवादिति ॥ उपलब्धिवत् ॥ तथाहि । अस्ति तावद् घटाद्युपलब्धिः । सा च न देहधर्म इत्युक्तम् । किञ्च देहधर्मत्वे तस्याः प्रकाशत्वाऽनुपपत्तिः । देहरूपादिवदिति । यथा देहादिविषयाया उपलब्धेः सत्त्वमङ्गीक्रियते तथा तस्या देहादिव्यतिरेकोऽप्यङ्गीकार्यः । सैव चोपलब्धिर्नः आत्मेति । तस्माद् देहाऽतिरिक्तस्यात्मनोऽस्तित्वमिति सिद्धम् ॥ ५४ ॥

( ३१ उक्थादिधियोः शाखान्तरेऽनुवृत्त्यधिकरणम् । सू० २ )

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

सन्ति कर्माङ्गाश्रिता उपासनाः । उद्गीथाऽवयवोङ्कारे प्राणदृष्टिः, उक्थे पृथिवीदृष्टिः, लोकेषु पञ्चविधं सामोपासीतेति च । लोकशब्दः पृथिव्यग्न्यन्तरिक्षादित्यद्युलोकपरः । पृथिव्यादिविषयकदृष्ट्या पञ्चविधं सामोपासीतेत्यर्थः । पृथिवीहिङ्कारः, अग्निः प्रस्तावः, अन्तरिक्षमुद्गीथः, आदित्यः प्रतिहारः, द्यौर्निधनमिति हिङ्कारादिपञ्चविधे साम्नि पृथिव्यादिदृष्टिरिति विभागः । अत्र संशयः। किमेता उपासना यत्र शाखायां विहितास्तच्छाखागतोद्गीथाद्यालम्बना उतसर्वशाखागतोद्गीथाद्यालम्बना इति पूर्वोत्तरपक्षयोःपूर्वोत्तरकोटिसिद्धिःफलम् । उपासनाविचारात्मकत्वात् साक्षादस्य पाद सङ्गतिः । तत्र यथा शरीरात्मनोर्भेदादात्मधर्माणां शरीरे न सम्भवस्तद्वदेकशाखागतोद्गीथाद्यपेक्षया शाखान्तरगतोद्गीथादेः स्वरभेदेन भेदादेकशाखागतोद्गीथादिधर्माणामुपासनानां शाखान्तरगतोद्गीथादौ न सम्भव इति दृष्टान्तेन प्राप्ते, ब्रूमः ॥ अङ्गावबद्धास्त्विति । तुः पूर्वपक्षनिरासार्थः । एता अङ्गाश्रिता उपासनाः प्रतिवेदं स्वस्वशाखासु विद्यमानोद्गीथाद्यालम्बना एव न भवन्ति, किन्तु शाखान्तरीयोद्गीथाद्यालम्बना अपि । कुतः । उद्गीथमुपासीतेत्यादौ उद्गीथादिश्रुतेराविशेषादिति हिशब्दसूचितो हेतुर्बोध्यः ॥ ५५ ॥

इममर्थं दृष्टान्तमुखेनापि साधयति—

मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

एकशाखाविहितोपासनानां शाखान्तरोद्गीथादिषु प्राप्तेरविरोधः । मन्त्रादिवत् । तथाहि । यथा तण्डुलपेषणार्थमश्मा-

दानमन्त्रः कुटुरुरसीत्येकत्राम्नातः शाखान्तरेऽपि प्राप्नोति ॥ यथा वा प्रयाजा एकत्राऽऽम्नाताः शाखान्तरेऽपि प्राप्नुवन्ति । तद्वदत्राऽप्यविरोधः । वाशब्दो दृष्टान्तप्रदर्शनरूपहेत्वन्तरसूचनाऽर्थः । तस्मादेकत्र विहितानामप्युपासनानां शाखान्तरीयोद्गीथादिषु प्राप्तिरिति सिद्धम् ॥ ५६ ॥

( ३२ वैश्वानरविद्यायां समस्तोपासनाधिकरणम् । सू० १)

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥

वैश्वानराख्यायिकायां प्राचीनशालादिषड्ऋषीणां राज्ञा सह प्रश्नप्रतिवचनाभ्यां द्युलोकसूर्यवाय्वादिषु व्यस्तेषु वैश्वानरोपास्तिः श्रुता । तथा समस्तेष्वपि वैश्वानराधिकरणे लिखिताख्यायिकाऽत्राप्यनुसन्धेया । तत्र संशयः । किमिहोभयथाऽप्युपास्तिर्विवक्षितोत समस्तोपास्तिरेवेति । फलं पूर्वपक्षे वाक्यभेदः सिद्धान्ते तदैक्यमिति बोध्यम् । तत्रोद्गीथादिश्रुत्या सन्निधिप्राप्तव्यवस्थां बाधित्वोद्गीथाद्युपास्तीनां सर्वशाखास्वऽव्यवस्थावदत्रापि व्यस्तोपास्तीनां विधिश्रुत्या समस्तोपास्तिसन्निधिप्राप्तस्तुत्यर्थत्वं बाधित्वा विधेयत्वं युक्तमिति दृष्टान्तेन प्राप्ते, ब्रूमः । भूम्नः समस्तोपासनस्यैवाऽस्मिन् वाक्ये ज्यायस्त्वं प्राधान्येन प्रतिपाद्यत्वं, न व्यस्तोपास्तीनामपि ॥ क्रतुवत् ॥ यथा दर्शपूर्णमासादेः क्रतोः साङ्गप्रधानस्यैव प्रयोगो विवक्ष्यते, न व्यस्तानामपि प्रयाजादीनां तद्वत् ॥ ननु भूम्न एव ज्यायस्त्वं कुत इत्यत आह ॥ तथाहीति ॥ प्राचीनशालादिभिरुक्तानि व्यस्तोपासनानि निन्दित्वा कैकेयेन राज्ञा अव्यस्तोपासनस्योक्तत्वादेकवाक्यताश्रुतेरवगम्यते । तथाचैकवाक्यतामापन्नेयं श्रुतिर्भूम्न एव ज्यायस्त्वं दर्शयतीत्यर्थः । ननु तर्हि राज्ञः प्राचीनशालादीन् प्रति, हे औपमन्यव, कंत्वमात्मानं वैश्वानरमुपास्स इति प्रश्ने, हे राजन,

सुतेजा द्युलोको वैश्वानरो यं त्वं वैश्वानरमुपास्स इत्यादौ व्यस्तोपास्तिषु, विधिश्रुतीनां का गतिरितिचेत् प्राचीनशालादिभिरवगतव्यस्तोपास्त्यनुवादेन समस्तोपासनस्य विधेयत्वादनुवादत्वमेव विधिश्रुतीनां गतिरिति । तस्मात् समस्तोपासनमेव ज्याय इति सिद्धम् ॥ ५७ ॥

( ३३ शाण्डिल्यादिविद्यानां भिन्नताधिकरणम् । सू० १ )

नाना शब्दादिभेदात् ॥ ५८ ॥

एकसगुणब्रह्मोपास्यकाः शाण्डिल्यदहरादिविद्याः सन्ति । एवमेकमुख्यप्राणविद्या अपि सन्ति । तत्र संशयः । किमेकोपास्यकविद्यानां भेदोऽस्ति, न वेति । पादसङ्गतिफले पूर्ववत् । तत्र व्यस्तोपास्तिषु विधिश्रुतीनां सत्त्वेऽपि समस्तोपास्तेरेव ज्यायस्त्ववदेकोपास्यकोपास्तिषु प्रत्येकं विधीनां सत्त्वेऽपि समस्तोपास्तेरेव ज्यायस्त्वान्नास्तिविद्यानां भेद इति दृष्टान्तेन प्राप्ते, ब्रूमः। एकोपास्यकाविद्या नानैव । कुतः । शब्दादिभेदात् । वेदे, उपासीत, स क्रतुं सङ्कल्पं कुर्वीतेत्यादिशब्दभेदात् । आदिशब्देन उपास्यगुणभेदाच्चेत्यर्थः । यथा यागदानहोमानां कर्मणां, यजेत दद्याज्जुहुयादिति शब्दभेदाद्भेदस्तद्वदिति द्रष्टव्यम् ॥ ५८ ॥

( ३४ अहङ्ग्रहविद्यायां विकल्पनियमाधिकरणम । सू० १ )

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

याः सगुणब्रह्मादिविद्या उपास्यसाक्षात्करणेन फलहेतवस्तासां किं स्वेच्छया विकल्पसमुच्चयाभ्यामनुष्ठानम् ? उत विकल्प एवेति संशयः । पूर्वपक्षे स्वेच्छया विद्यासु प्रवृत्तेर्याकाचिदेकैव विद्या, यावज्जीवमनुष्ठेयेति विकल्पोऽपि नास्ति, द्वित्र्यादयो विद्याः समुच्चयेनानुष्ठेया इत्यपि नास्तीत्यनियमः फलम् ।

सिद्धान्ते विकल्प एवेति नियम इति भेदः । पूर्वाधिकरणेन विद्याया नानात्वे सिद्धे अयं विचारः प्रवर्त्तते, नोचेन्नास्तीति हेतुहेतुमद्भावः सङ्गतिः । तत्राऽनुष्ठाननियमे हेत्वभावाद्यथेष्टमनुष्ठानमिति प्राप्ते, ब्रूमः । विकल्प एवासां विद्यानां युक्तः। कुतः॥ अविशिष्टफलत्वात् ॥ अविशिष्टं ह्यासां विद्यानामुपास्यसाक्षात्काराख्यं फलम् । तत्रैकया विद्ययोपास्ये साक्षात्कृते विद्यान्तरमफलं, विरुद्धोपास्यद्वयसाक्षात्कारस्य युगपदयोगाच्च विद्यान्तरं व्यर्थम् । तं तमेवैति कौन्तेय सदा तद्भावभावितइतिभगवद्गीता स्पष्टमेकविद्याया एवानुष्ठेयत्वं दर्शयति । तस्मादुपास्यसाक्षात्कारद्वारा फलहेतुभूता विद्यैकैवानुष्ठेयेति सिद्धम् ॥ ५९॥

( ३५ लौकिकप्रतीकेषु याथाकाम्याधिकरणम् । सू० १ )

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥

याश्च प्रतीकोपास्तयो नाम ब्रह्मेत्युपासीत, तस्य यथाकामचारो भवति इत्याद्याः काम्या उपास्यसाक्षात्कारानपेक्षा एवादृष्टद्वारा फलहेतवः । तासु पूर्ववत् सन्देहे उपास्तित्वाऽविशेषात् पूर्ववद्विकल्पनियम इति प्राप्ते, ब्रवीति ॥ काम्यास्त्विति ॥ काम्यास्त्वदृष्टद्वारा फलहेतवो विद्या यथाकामं समुच्चीयेरन् वा, न वा । समुच्चीयेरन् पूर्वहेतोरविशिष्टफलत्वस्य विकल्पनियमप्रयोजकस्यात्राभावादित्यर्थः । तथाच प्रतीकोपास्तयो विकल्पेनैवानुष्ठेयाः, उपास्तित्वात् पूर्वोक्तविद्यावदित्यनुमाने उपास्यसाक्षात्कारहेतुत्वमुपाधिरिति भावः ॥ ६० ॥

( ३६ कर्माङ्गप्रतीकेषु याथाकाम्याधिकरणम् । सू० १ )

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

कर्माङ्गेषूद्गीथादिषु या आश्रिता विद्यास्तासां किं समुच्चयेनैवाङ्गवदनुष्ठानमुत यथाकाममिति संशयः । पूर्वपक्षे समुच्चयेनानुष्ठानात् फलबाहुल्यं, सिद्धान्ते यथाकाममनुष्ठानात् प्रयोगसौकर्यमिति बोध्यम् । तत्र प्रतीकोपास्तीनां स्वतन्त्रत्वाद्यथाकाममनुष्ठानं युक्तम् । अङ्गाश्रितोपास्तीनामङ्गतन्त्रत्वाद्यथाश्रयभावो, यथाश्रयाणामङ्गानामनुष्ठानस्य भावस्तद्वदनुष्ठानस्य भाव इति प्रत्युदाहरणेन पूर्वपक्षः ॥ ६१ ॥

शिष्टेश्च ॥ ६२ ॥

[illegible]ः शासनं विधानमित्यर्थः । यथाङ्गानां प्रतिवेदं विधानं तथा तदाश्रितोपास्तीनां विधानाविशेषाच्चाङ्गवत् समुच्चयनियम इत्यर्थः ॥ ६२ ॥

इतश्चैवमेवेत्याह—

समाहारात् ॥ ६३ ॥

ऋग्वेदोक्तप्रणवस्य सामवेदोक्तोद्गीथस्य च ऐक्योपासने उद्गात्रा कृते फलमाह श्रुतिः । होतृषदनाद्धैवाऽपि दुरुद्गीथमनुसमाहरतीति होतृषदनशब्देन होतृशंसनस्थानवाचिना होतृकृतं शंसनाख्यं कर्म लक्ष्यते । उद्गाता प्रणवोद्गीथयोरैक्यज्ञानमाहात्म्यात् स्वेन कृतं दुरुद्गीथमपि स्वरादिप्रमादाद् दुष्टमप्युद्गानं होत्रा सम्यक्कृतशस्त्रसहायादनुसमाहरत्येव । ह प्रति समादधात्येव खलु । होतृकर्मसम्बद्धोङ्कारस्य ऋग्वेदोक्तस्य सामवेदोक्तोद्गीथस्य चैक्येन चिन्तितत्वादित्यर्थः । तथाच वेदद्वयोक्तप्रणवोद्गीथयोरैक्यज्ञानस्येदृशं फलं ब्रुवद्वाक्यं सर्ववेदोक्तानामप्यङ्गाश्रितोपासनानां समुच्चयं सूचयति । सर्वोपासनेषु वेदान्तरोक्तोपासनस्य वेदान्तरोक्तोद्गीथादिना सम्बन्धस्य च समान-

त्वादिति सूत्रकृत्तात्पर्यम् ॥ ६३ ॥

गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

उद्गीथोपासनायां गुणभूतस्योपास्यस्योङ्कारस्य तेनेयं त्रयीविद्या वर्त्तते । तेनोङ्कारेण वेदत्रयोक्तं कर्म भवतीति सर्वकर्मणि साधारण्यस्य श्रवणात्तदाश्रितोपासनानामपि साधारण्यं समुच्चित्यानुष्ठानमित्यर्थः । यद्वा कर्मगुणानामुद्गीथादीनां सर्वेषां समुच्चित्यानुष्ठानात्मकसाधारण्याभावे हि तदाश्रितोपासनानां समुच्चयो न भवेत् । नैतदस्ति । प्रयोगवचनेन सर्वाङ्गग्राहिणा तेषां साधारण्यश्रुतेः । तथाच तदाश्रितानामुपासनानामपि समुच्चय इत्यर्थः ॥ ६४ ॥

एवं प्राप्ते सिद्धान्तयति—

न वा तत्सहभावाऽश्रुतेः ॥ ६५ ॥

वाशब्दस्त्वर्थः पूर्वपक्षव्यावर्त्तनार्थः । नाङ्गाश्रितोपासनानामङ्गवत् समुच्चयनियमः ॥ तत्सहभावाऽश्रुतेः ॥ यथाङ्गानां सहभावः श्रूयते । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादित्यादिना । तथा तेषामुपासनानां सहभावस्याश्रुतेरित्यर्थः । न चाङ्गतन्त्रत्वादुपासनानां समुच्चयनियमः । अङ्गतन्त्रस्यापि गोदोहनस्यानुष्ठानानियामात् । यदुक्तं, शिष्टेश्चेति सूत्रे अङ्गवद्विधानाऽविशेषात् समुच्चय इति । तेन हीदमनुमानं लभ्यते । उपासनानि समुच्चित्याऽनुष्ठेयानि । विहितत्वादङ्गवादिति । तत्र च क्रत्वर्थत्वमुपाधिः । परं च सूत्रद्वयोक्तं लिङ्गद्वयमप्रयोजकत्वेन दूषणीयम् ॥ ६५ ॥

दर्शनाच्च ॥ ६६ ॥

दर्शयति च श्रुतिरङ्गाश्रितोपासनानामसमुच्चयम् । एवंविद् ह

वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षतीति । ऋग्वेदादि-विहिताङ्गलोपे व्याहृतिहोमप्रायश्चित्ताऽभिज्ञत्वं ब्रह्मण एवंविच्त्वं सर्वोपासनानां समुच्चये हि विज्ञानवता ब्रह्मणा परिपाल्यत्वम् इतरेषाम् ऋत्विजां नस्यात्। सर्वेषां सर्वविच्त्वात् । अस्ति च परि-पाल्यत्वकीर्त्तनम् । तस्मान्न सर्वोपासनासमुच्चय इति सिद्धम् ॥६॥

इति श्रीब्रह्मसूत्रवृत्तौ तृतीयस्याऽध्यायस्य
तृतीयः पाद ॥ ३ ॥ ३ ॥

## तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

( १ आत्मज्ञानस्य स्वतन्त्रताधिकरणम् । सू० १७ )

### पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

पूर्वस्मिन् पादे पराऽपरब्रह्मविद्यानां गुणोपसंहारोक्त्या परिमाणमवधारितम् । इह तासां कर्माऽनपेक्षणामेव पुरुषार्थसाधनत्वं निरूप्यते । तत्र कर्मानपेक्षाणामासां विद्यानां कान्यङ्गानीत्याकाङ्क्षायां यज्ञादीनि बहिरङ्गानि शमादीन्यन्तरङ्गानि च निरूप्यन्ते इत्येकविद्याविषयकत्वमनयोः पादयोः सङ्गतिः । तत्र परब्रह्मविद्यामाश्रित्य विचार्यते । किमौपनिषदात्मविद्या कर्मकर्तृद्वारा क्रत्वनुप्रवेशिनी, उत स्वतन्त्रैव पुरुषार्थसाधनमिति । अत्र पूर्वोत्तरपक्षयोः पूर्वोत्तरकोटिसिद्धिः फलम् । पूर्वपादान्त्याऽधिकरणे कर्माङ्गविद्योक्तिप्रसङ्गाद्ब्रह्मज्ञानस्य कर्माङ्गत्वमाशङ्क्य, सिद्धान्तमुपक्रमते ॥ पुरुषार्थ इति ॥ अतोऽस्मादौपनिषदात्मज्ञानात् स्वतन्त्रात् पुरुषार्थो मोक्षः सिद्ध्यतीति बादरायण आचार्यो मन्यते । कुतः । तरति शोकमात्मवित् । ब्रह्म वेद ब्रह्मैव भवतीत्यादिभ्यः केवलविद्याया मोक्षहेतुत्वबोधकशब्दादिभ्यः । इदमुपलक्षणं सगुणविद्यानामपि । स्वातन्त्र्येण फलहेतुत्वं तत्तत्फलश्रुतेरितिबोध्यम् ॥ १ ॥

एवं सिद्धान्तमुपक्रम्य पूर्वपक्षयति—

### शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥

कर्तृत्वेन आत्मनः कर्मशेषत्वात् तज्ज्ञानमपि पर्णतावत् कर्मशेषात्मद्वारा क्रत्वङ्गम् । अत्राऽयं प्रयोगः । तत्त्वज्ञानं कर्माङ्गम् । फलशून्यत्वे सति कर्माङ्गाश्रयत्वात् पर्णतावदिति । ननु विशेषणासिद्धो हेतुः । तरति शोकमात्मविदित्यादिफलश्रुतेः सत्त्वा-

दित्यत आह ॥ पुरुषेति ॥ यथाऽन्येषु द्रव्यसंस्कारकर्मसु पर्णमयीद्रव्ययजमानस्थाऽञ्जनादिसंस्कारप्रयाजादिरूपेषु अपापश्लोकश्रवणादिफलश्रुतिरर्थवादस्तथाऽत्रापि पुरुषार्थश्रुतिरर्थवाद इति जैमिनिराचार्यो मन्यते। तथाच न हेतोर्विशेषणासिद्धिरिति भावः ॥ २ ॥

अचारदर्शनात् ॥ ३ ॥

जनको ह वैदेहो वहुदक्षिणेन यज्ञेनेज इत्यादौ ब्रह्मविद्यावतां जनकादीनां विद्यया सह कर्माऽऽचारदर्शनाल्लिङ्गाद्विद्यायाः स्वातन्त्र्याभावेन कर्माङ्गत्वमित्यर्थः । विदेहानामधिपतिर्जनको नाम राजा वहुदक्षिणासंज्ञेन अश्वमेधेन वा वहुदक्षिणायुक्तेनेजे यागं कृतवानित्यर्थः ॥ ३ ॥

तच्छ्रुतेः ॥ ४ ॥

किञ्च, यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति तृतीयया श्रुत्या विद्यायास्तस्याः कर्मशेषत्वस्य श्रवणान्न स्वातन्त्र्येण मुक्तिफलत्वमित्यर्थः ॥ ४ ॥

समन्वारम्भणात् ॥ ५ ॥

तं विद्याकर्मणी समन्वारभेते इति फलारम्भे विद्याकर्मणोः साहित्यदर्शनादपि न मुक्तिफलत्वं विद्यायाः, किन्तु कर्माङ्गत्वमेवेत्यर्थः । तं परलोकं व्रजन्तं विद्याकर्मणी समनुगच्छत इति श्रुत्यर्थः ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥

आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्माऽतिशेषेणाऽभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयान इति श्रुत्या सकलवेदाऽर्थज्ञानवतः कर्मविधानादपि लिङ्गात् कर्माङ्गत्वं

वेदार्थब्रह्मविद्याया इत्यर्थः । यद्यपि वेदमधीत्येत्यध्ययनमात्रं श्रुतं, नार्थबोधस्तथापि फलवदर्थावबोधपर्यन्तमध्ययनमिति बोध्यम् । आचार्यस्य कुलं गृहम् । उपनयनं कृत्वा तदनन्तरं गुरोः शुश्रूषणरूपं कर्म विधाय अतिशेषेण शिष्टेन कालेन यथाविधानं पवित्रपाणित्वप्राङ्मुखत्वादिविधानमनतिक्रम्य वेदमधीत्याऽनन्तरमभिसमावृत्य व्रतविसर्गं कृत्वा कुटुम्बे गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाऽध्ययनं कुर्वन् कर्मान्तराणि च विहितानि यथाशक्ति कुर्वाणो ब्रह्मलोकमभिसंपद्यते इत्यर्थः ॥ ६ ॥

नियमाच्च ॥ ७ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।

एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरेइत्यादिकाद् यावज्जीवं कर्माचारनियमाच्च विद्यायाः कर्मशेषत्वमेवेत्यर्थः । इह देहे शतं समाः शतसंवत्सराञ्जीवितुमिच्छेदिति यत् तत् कर्माणि कुर्वन्नेवेति नियमविधिः । एवं त्वयि नरे वर्तमाने सत्यशुभं कर्म न लिप्यते त्वं न लिप्यसे इत्यर्थः । इतः प्रकाराद् अन्यथा प्रकारान्तरं नास्ति यतः कर्मलेपो न स्यात् । तस्माद् ब्रह्मविद्या कर्माङ्गमेवेति प्राप्ते ॥ ७ ॥

समाधत्ते—

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुः पूर्वपक्षनिरासार्थः । यदुक्तं, तत्त्वज्ञानं कर्माङ्गं फलशून्यत्वे सति कर्माश्रयत्वादिति । तन्न । हेतोर्विशेष्यासिद्धेः । कुतो विशेष्यासिद्धिः ॥ अधिकोपदेशात् ॥ कर्मकर्तुः संसारिणः कर्माङ्गादधिकस्याकर्तुरसंसारिणश्चिन्मात्रस्य वेदान्तेषूपदेशात् । तथाच तत्त्वज्ञानं चिन्मात्राश्रयमेवेति भवति विशेष्यासिद्धिः ।

एवञ्च तत्त्वज्ञानफलश्रुतेरपि नार्थवादत्वम् । तस्मात् पुरुषार्थो-ऽतः शब्दादिति यन्मतं बादरायणस्य तद् एवमेव तथैवेत्यर्थः । अधिकोपदेशासिद्धिमाशङ्क्याह॥तद्दर्शनादिति॥तस्याधिकस्यात्मनो यः सर्वज्ञः सर्वविदित्यादिश्रुतिसहस्रेषु दर्शनादित्यर्थः ॥ ८ ॥

यदुक्तमाचारदर्शनादिति, तत्राह—

तुल्यं तु दर्शनम् ॥ ९ ॥

विद्यायाः कर्मशेषत्वाभावेऽप्याचारदर्शनं तुल्यमेव । तथा-हि । एतद्ध स्म वैतत्पूर्वे विद्वांसो अग्निहोत्रं न जुहुवाञ्चक्रिरे इत्यादिका श्रुतिर्विदुषः कर्माचाराभावं दर्शयति । तुशब्देनाकर्मा-ऽङ्गत्वलिङ्गदर्शनस्य प्राबल्यं सूचितम् । न हि ब्रह्मविद्यावतां जनकादीनां कर्माचारदर्शनं विद्यायाः कर्मशेषत्वे लिङ्गम् । तेषा-महमभिमानाभावेन चोदनाप्रवृत्त्यसम्भवात् तत्कृतकर्मणश्चोदना-लक्षणत्वाऽभावेनाऽकर्मतया तदाचारदर्शनस्य विद्यायाः कर्मशेष-त्वबोधने दुर्बलत्वादिति ॥ ९ ॥

तच्छ्रुतेरिति यदुक्तं, तत्राह —

असार्वत्रिकी ॥ १० ॥

यदेव विद्यया करोतीति श्रुतिरसार्वत्रिकी । सर्वविद्या-विषया न भवति । प्रकृतोद्गीथविद्यामात्रपरत्वात् । तथाच न श्रुतिबलाद् ब्रह्मविद्यायाः कर्माङ्गत्वमित्यर्थः ॥ १० ॥

यदप्युक्तं, समन्वारम्भणादिति, तत्राह—

विभागः शतवत् ॥ ११ ॥

तं विद्याकर्मणी समन्वारभेते इत्यत्र विभागो बोध्यः । विद्या-ऽन्यं पुरुषमन्वारभते, कर्मान्यमिति ॥ शतवत् ॥ यथा शत-माभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै, पञ्चा-

शदन्यस्मै । तद्वदित्यर्थः । वस्तुतोऽस्य समन्वारम्भवाक्यस्य मुमुक्षुविषयत्वाभावाद् विद्याशब्देन विहितोद्गीथादिविद्याप्रतिषिद्धा नग्नस्त्रीदर्शनादिरूपा गृह्यन्ते । तादृशविद्यायाः फलारम्भे कर्मसाहित्येऽपि न क्षतिरिति मन्तव्यम् ॥ ११ ॥

यत् पुनरुक्तं, तद्वतो विधानादिति । तत्राह—

अध्ययनमात्रवतः ॥ १२ ॥

आचार्यकुलाद्वेदमधीत्येति वाक्ये वेदाध्ययनमात्रवतः कर्म विधीयते, नाऽऽत्मज्ञानवत इत्यर्थः । मात्रपदेनौपनिषदात्मज्ञानमेव व्यावर्त्त्यते, न कर्मकाण्डार्थोऽवबोधः । कर्मज्ञानं विनाऽनुष्ठानासम्भवादिति ॥ १२ ॥

यच्चोक्तं, नियमाच्चेति । तत्राह—

नाऽविशेषात् ॥ १३ ॥

कुर्वन्नेवेह कर्माणीति नियमवाक्यं, न ज्ञानिविषयम् । विद्वानिति विशेषाभावादित्यर्थः ॥ १३ ॥

अस्य नियमवाक्यस्य ज्ञानिविषयत्वेऽप्यविरोधो, ज्ञानस्तुत्यर्थत्वादित्याह—

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

इयं विदुषः कर्मानुमतिः, कर्मानुज्ञा ब्रह्मविद्यास्तुतये ज्ञातव्या । स्तुतिश्चैवं, यावज्जीवं कर्म कुर्वत्यपि त्वयि विदुषि न कर्म लेपाय भवति । विद्यासामर्थ्यादिति । अस्मिन् पक्षे, नान्यथेतोऽस्तीत्यस्यायमर्थः । एवं कर्म कुर्वत्यपि त्वयीतो ब्रह्मभावाद्विद्यालभ्यादन्यथा संसारापत्तिर्नास्ति, यतो न कर्म लिप्यत इति ॥ १४ ॥

अपिच ब्रह्मविद्यायां प्रत्यक्षं फलं दर्शयन्ती श्रुतिः काला-

न्तरभाविफलककर्माङ्गत्वं वारयतीत्याह—

कामकारेण चैके ॥ १५ ॥

एके विद्वांसः प्रत्यक्षीकृतविद्याफलाः परोक्षकर्मफलसाधनं प्रजादिकं कामकारेण स्वेच्छया त्यक्तवन्त इति श्रूयते । एतद्ध स्म वैतत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो, येषान्नोऽयमात्माऽयं लोक इति । विद्यायाः कर्माङ्गत्वाभावेऽपि विदुषः स्वेच्छया कर्मसाधनप्रजादित्यागो लिङ्गमनेन सूत्रेण सूच्यते इति बोध्यम् । विद्यायाः कर्माङ्गत्वे हि कर्मसाधनत्यागो न स्यादिति । श्रुत्यर्थस्तु, येषां नोऽस्माकमयमपरोक्ष आत्मा, अयं लोकः प्रत्यक्षफलं, ते वयं किं प्रजया करिष्याम इति निश्चित्याऽग्निहोत्रादि कर्म न कृतवन्त इति ॥ १५ ॥

उपमर्द च ॥ १६ ॥

किञ्च, कर्मानुष्ठानहेतोः क्रियाकारकफलविभागस्य समस्तस्याविद्याकृतस्य विद्यासामर्थ्यादुपमर्दमभावमामनन्ति । यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदित्यादिना । तथाच ब्रह्मविद्यायाः कर्मविरोधित्वान्न कर्माङ्गत्वमिति भावः ॥ १६ ॥

विद्यायाः कर्मानङ्गत्वे हेत्वन्तरमाह ॥ १६ ॥

ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

उर्ध्वरेतस्सु यतिषु ब्रह्मविद्यावगता । न हि तस्याः कर्माऽङ्गत्वं सम्भवति । यतीनामग्निहोत्रादिकर्माभावात् तथाचाऽयं प्रयोगः । विद्याकर्मणी नाङ्गाङ्गिभूते, मिथोव्यभिचारित्वात् । ऋतुगमननैष्ठिकव्रतवदिति । ननु यत्याश्रमसद्भावे, किं मानमित्यत आह॥शब्दे हीति॥वेदे ह्यूर्ध्वरेतसामाश्रमाः श्रूयन्ते॥त्रयो धर्मस्कन्धाःयज्ञोऽध्यापनं, दानमिति । प्रथमस्तप एवं द्वितीयो ब्रह्म-

चार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेतीति ब्रह्मचर्यादेव प्रव्रजेदित्यादौ । श्रुत्यर्थस्तु स्कन्धशब्द आश्रमपरः।यज्ञादिधर्मप्रधानो गार्हस्थ्याश्रम एकः । तपःप्रधानो वानप्रस्थाश्रमो द्वितीयः । तृतीयः स्पष्टः । एतेषामाश्रमिणामनित्यफलभाक्त्वमुक्त्वा ब्रह्मसंस्थस्य संन्यासिनो नित्यफलत्वमाह । ब्रह्मसंस्थ इति । ब्रह्मणि प्रत्यग्रूपे सम्यग् निष्ठा यस्य स ब्रह्मसंस्थः परिव्राडित्यर्थः । तस्माद् ब्रह्मविद्या न कर्माङ्गं, किन्तु स्वतन्त्रा मुक्तिफलेति सिद्धम् ॥ १७ ॥

त्रयो धर्मस्कन्धा इत्यादिश्रुतिराश्रमसद्भावे प्रमाणमित्युक्तम् । तदाक्षिपति—

( २ संन्यासिन एव ब्रह्मनिष्ठताधिकरणम् । सू० ३ )

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

तत्त्वज्ञानस्यान्तरङ्गसाधनं पारिव्राज्यमत्र निरूप्यत इति स्फुटे साधनाध्यायपादसङ्गती । अत्र संशयः । किं पारिव्राज्यमनुष्ठेयं, न वेति । पूर्वपक्षे पारिव्राज्यस्याऽभावाद्विद्यायाः कर्माऽव्यभिचारेण कर्माङ्गत्वमिति फलं, सिद्धान्ते तत्सत्त्वाद्विद्यास्वातन्त्र्यमिति बोध्यम् । तत्र पारिव्राज्यं प्रमाणाभावान्नानुष्ठेयमित्याह ॥ परामर्शमिति ॥ त्रय इति श्रुतौ चतुर्णामाश्रमाणां परामर्शमनुवादमात्रं जैमिनिराचार्यो मन्यते । न विधीयते । इयं श्रुतिरचोदना लिङ्गादिशून्या । अस्या श्रुतेर्ब्रह्मसंस्थतास्तुतिपरत्वं चेति चकारार्थः । तथाचान्यपराद्वाक्यादनुवादमात्रेण नाश्रमसिद्धिरिति भावः । तपःशब्देनैव वानप्रस्थयत्याश्रमयोरनुवाद इति द्रष्टव्यम् । निन्द्यमानत्वाच्च पारिव्राज्यं, नानुष्ठेयमित्याह ॥ अपवदतीत्यर्थः॥यत्याश्रमातिरिक्ताश्रमान्तरमग्निहोत्रादिविधान-

सामर्थ्यात् प्रामाणिकमेव, त्रय इत्यादिश्रुतावनूद्यते । यत्याश्रमस्तु न श्रुतिसिद्धः, किन्तु स्मृतिसिद्ध एवानूद्यते । स्मृतिश्च, यावज्जीवमग्निहोत्रं जुहुयादित्यादिप्रत्यक्षश्रुतिविरोधादप्रमाणमिति पूर्वपक्ष्यभिमानः । यद्यपि ब्रह्मचर्यादेव, प्रव्रजेदिति प्रत्यक्षा श्रुतिरस्ति, तथापीयं श्रुतिर्नास्तीति कृत्वा चिन्तेयमिति मन्तव्यम् ॥ १८ ॥

समाधत्ते—

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

पारिव्राज्यमनुष्ठेयं भगवान् बादरायणो मन्यते । कुतः । त्रय इत्यादिश्रुतौ प्रामाणिकगार्हस्थ्येन साम्यश्रवणादित्यर्थः । अयं भावः । तपःशब्देन वानप्रस्थाश्रमस्यैवाऽनुवादः । संन्यासिनां तपःशून्यत्वात् । ब्रह्मसंस्थ इत्यनेनैव यत्याश्रमाऽनुवादः । आश्रचतुष्टयानुवादेन ब्रह्मसंस्थतास्तुतिपरत्वमेव वाक्यस्य । तथात्रान्यपरादपि वाक्यात् प्रतीयमाना आश्रमाः सिद्ध्यन्ति । देवताधिकरणन्यायात् । न च वीरहेत्यादिश्रुतिविरोधः । तस्याः श्रुतेरज्ञानादग्न्युद्वासनोद्युक्ताहिताग्निविषयत्वादिति ॥ १९ ॥

एवमस्य वाक्यस्यानुवादत्वमङ्गीकृत्य अनुवादस्य प्रमाणान्तरसापेक्षत्वादाश्रमाणां प्रामाणिकत्वमुक्तम् । इदानीमस्मिन्नेव वाक्ये आश्रमाणां विधिकल्पनमन्यथास्यानुवादकत्वे आश्रमविधायकवाक्यान्तरकल्पनायां गौरवप्रसङ्गात् सिद्धे वाक्ये विधिमात्रकल्पनायाश्च लघुत्वादित्याह—

विधिर्वा धारणवत् ॥ २० ॥

अस्मिन् वाक्ये आश्रमाणां विधिरेव, नानुवादः । नचाऽनेकाश्रमविधाने वाक्यभेदः स्यादिति वाच्यम् । अपूर्वत्वेना-

ऽऽश्रमाणां विधेरावश्यकत्वेन वाक्यभेदस्येष्टत्वात् । एकवाक्यता-प्रतीतावपि तत्त्यागेनाऽपूर्वार्थविधौ दृष्टान्तमाह ॥ धारणवदि-ति॥मृताग्निहोत्रप्रकरणे तृतीये महापितृयज्ञे स्रुचि प्रक्षिप्तं हविराह-वनीयं प्रति यदा नीयते तत्र श्रूयते । अधस्तात् समिधं धार-यन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीति । तत्र स्रुग्दण्डादधस्तात् समिद्धारणविध्येकवाक्यत्वस्य उपरि हीत्यादेरनुवादतया प्रती-तावपि स्रुचिस्थहविरुपरिसमिद्धारणस्यापूर्वत्वादेकवाक्यताभङ्गेन विधिर्यथाकल्पितस्तथेहापीत्यर्थः । वस्तुतस्तु ब्रह्मसंस्थत्वमेव पारिव्राज्यलक्षणमत्र वाक्ये विधीयते । आश्रमत्रयानुवादेना-ऽनित्यफलत्वेनाश्रमत्रयनिन्दया ब्रह्मसंस्थत्वस्यैव नित्यफलत्वेन स्तूयमानत्वाद्यत् स्तूयते तद्विधेयमिति न्यायात् । नच ब्रह्म-संस्थत्वस्य यौगिकार्थस्य गृहस्थादेरपि सम्भवात् कथं ब्रह्म-संस्थत्वं परिव्राज एवेति वाच्यम् । गृहस्थादीनां स्वस्वकर्मा-सक्ततया नियमेन ब्रह्मसंस्थत्वायोगात् परिशिष्यमाणः परि-व्राडेव ब्रह्मसंस्थ इति । तथाच नास्मिन् पक्षे वाक्यभेद इति । तस्मात् पारिव्राज्यस्य प्रामाणिकत्वात्तेषां च कर्माभावात् सिद्धं ब्रह्मविद्यायाः स्वातन्त्र्यम् ॥ २० ॥

( ३ रसतमत्वादीनां ध्येयत्वाधिकरणम् । सू० २ )

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

उद्गीथादिविद्यासु श्रूयते । स एष उद्गीथो रसानां रसतमः परम इत्यादि । तत्र संशयः । किमिदं कर्माङ्गोद्गीथस्तुतिमात्रम्, उतोद्गीथोपासनायां गुणविधायकमिति पूर्वपक्षे उद्गीथमुपासीते-त्यादेःसर्वस्यापि स्तुतिमात्रत्वात्कर्माङ्गाश्रितोपासनानुष्ठानासिद्धिः फलं,सिद्धान्ते कर्माङ्गाश्रितोपासनानां विधेयत्वादनुष्ठानसिद्धिरि-ति।एवञ्चाङ्गपरतन्त्राणामपि विद्यानामनुष्ठानसमर्थनेन पुरुषार्थहेतु-

त्वोक्तावङ्गानाश्रितब्रह्मविद्यायाः पुरुषार्थहेतुत्वं किमु वक्तव्यमिति सिद्धा पादसङ्गतिः । तत्रानुष्ठेयाश्रमसाम्यश्रुतेः पारिव्राज्यस्यानुष्ठेयत्ववदियमेव जुहूरादित्य इत्यादिकर्माङ्गस्तुत्या रसतमत्वादिवाक्यस्य साम्यात् स्तुतिमात्रत्वमिति दृष्टान्तेन पूर्वपक्षयति ॥ स्तुतिमात्रमिति ॥ रसतमत्वादिवाक्यं सर्वमपि कर्माङ्गविधिस्तुतिमात्रं, कर्माङ्गोद्गीथाद्युपादानादितिचेन्न । कुतः । अपूर्वत्वात् कर्माङ्गोद्गीथाद्युपादानादितिचेन्न ॥ कुतः ॥ अपूर्वत्वात् कर्माङ्गोद्गीथाद्युपासनानां रसतमत्वादिगुणानां चाऽपूर्वत्वान्मानान्तराऽप्राप्तत्वाद्यागादिवद्विधेयत्वमेवेत्यर्थः । प्रकृते एवं विधिसम्भवे प्रकरणान्तरगतोद्गीथादिविधिस्तुतिलक्षणाकल्पनम् अन्याय्यतरमिति भावः ॥ २१ ॥

भावशब्दाच्च ॥ २२ ॥

उद्गीथमुपासीत सामोपासीतेत्यादिविधिशब्दाच्च विधेयत्वमेवेत्यर्थः ॥ २२ ॥

( ४ उपनिषदाख्यानस्य विद्यास्तुत्यर्थताधिकरणम् । सू० २ )

पारिप्लवार्था इतिचेन्न विशेषितत्वात् ॥ २३ ॥

वेदान्तेषु तत्र तत्र, अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी चेत्याद्या आख्यायिकाः श्रूयन्ते । तत्र संशयः । किमेताः पारिप्लवार्थाः, उत सन्निहितविद्यास्तुत्यर्था इति । पूर्वपक्षे कथानामासां पारिप्लवप्रयोगशेषत्वात्तदेकवाक्यताऽऽपन्नशब्दबोध्यविद्यायाः प्राधान्याभावेन पुरुषार्थहेतुत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति मन्तव्यम् । एवं फलपर्यवसानादेव अस्य पादसङ्गतिर्बोध्या । तत्र रसतमत्वादेरुद्गीथादिस्तुत्यर्थत्वापेक्षयोपास्यविषयसमर्पकत्वस्य ज्यायस्त्ववत् कथानामपि

विद्यास्तुत्यर्थत्वापेक्षया पारिप्लवशेषत्वं ज्याय इति दृष्टान्तेन पूर्वपक्षयति ॥ पारिप्लवार्था इतिचेदिति ॥ अश्वमेधे पुत्रादिपरिवृताय राज्ञे यन्नानाविधकथाकथनं तत्पारिप्लवशब्देनोच्यते। तदर्था एवौपनिषदकथा अपीत्यर्थः । समाधत्ते ॥नेति॥कुतः॥ विशेषितत्वात्॥पारिप्लवमाचक्षीतेत्युपक्रम्य,मनुर्वैवस्वतो राजेत्यादिवाक्यशेषे कासाञ्चिदेव कथानां पारिप्लवशेषत्वेन विशेषितत्वादित्यर्थः । तस्मादौपनिषदकथानां न पारिप्लवशेषत्वम् ॥ २३ ॥

ननु तर्हि किमर्था इमाः कथा इत्याशङ्क्य संनिधिबलाद् विद्यार्था इत्याह—

तथाचैकवाक्यतोपबन्धात् ॥ २४ ॥

तथाचोक्तयुक्त्या पारिप्लवार्थत्वाभावे सति सन्निधिबलाद् विद्याशेषत्वं कथानां युक्तम् ॥एकवाक्यतोपबन्धात्॥ सन्निहितविद्यैकवाक्यतादर्शनादित्यर्थः । कथानां विद्यास्तुतिलक्षकत्वेन विद्याज्ञानसौकर्यार्थत्वेन च विद्यैकवाक्यत्वं बोध्यम् । तस्मात् सन्निहितविद्याशेषत्वमेव कथानामिति सिद्धम् ॥ २४ ॥

एवं पुरुषार्थाधिकरणे ब्रह्मविद्यायाः स्वातन्त्र्यं प्रतिपाद्य तत्प्रसक्त्या प्राप्तं विचारं परिसमाप्य पुरुषार्थाधिकरणस्य फलमाह—

( ५ ब्रह्मात्मैक्यज्ञानस्य कर्मानपेक्षताधिकरणम् । सू० १ )

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

किं ब्रह्मविद्या स्वफले मोक्षे शेषत्वेन यज्ञादिकर्माण्यपेक्षते, नवेति सन्देहे, कथानां विद्याशेषत्वेनापेक्षावत् कर्मणामपि फले विद्याशेषत्वेनापेक्षा न्याय्या । यज्ञादिश्रुत्या विविदिषायां विनियुक्तयज्ञादीनां विषयसौन्दर्यलभ्यायां तस्यामनन्वयादिच्छाविषयज्ञानसाध्यमोक्षेऽन्वयस्य सम्भवादपेक्षत इति प्राप्ते, ब्रूमः ।

आद्याधिकरणे ब्रह्मविद्यायाः कर्मशेषत्वनिरासेन यत्पुरुषार्थ-हेतुत्वमुक्तं तदतः-शब्देन परामृश्यते । अत एव ब्रह्मविद्यायाः स्वातन्त्र्येण पुरुषार्थहेतुत्वादेव अग्नीन्धनशब्देन स्वस्वाश्रम-विहितानि कर्माणि लक्ष्यन्ते। विद्याफले मोक्षे कर्मापेक्षा नास्ति। शुक्तिज्ञानस्येव रजतभ्रमनिवृत्तावित्यर्थः । अयं भावः । यज्ञा-दिश्रुत्या विविदिषायामेव कर्मणां विनियोगश्रवणान्न मोक्षे कर्मा-ऽपेक्षा। न च विषयसौन्दर्यलभ्यायां तस्यामनन्वयः कर्मणामिति वाच्यम् । ब्रह्मज्ञानेच्छोत्पत्तिप्रतिबन्धककल्मषनिवृत्तिजनन-द्वारेच्छायामन्वयसम्भवादिति । अस्याऽऽद्याधिकरणफलपर-त्वान्न पृथक्पादसङ्गत्याद्यपेक्षा ॥ २५ ॥

(६ ब्रह्मात्मैक्यज्ञानोत्पत्तौ यज्ञशमदमादिकर्मापेक्षाधिकरणम्। सू० २)

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

ब्रह्मविद्या किं स्वोत्पत्तौ कर्माण्यपेक्षते, न वेति सन्देहः । पूर्वपक्षे ज्ञानार्थं यज्ञाद्यनुष्ठानाभावः फलं, सिद्धान्ते तदनुष्ठाना-ऽवश्यम्भावः । अत्र यज्ञादीनां शमादीनां च ज्ञानसाधनानां नि-रूपणादस्ति पादसङ्गतिः । तत्र यथा ब्रह्मविद्यायाः प्रमात्वा-च्छुक्तिज्ञानस्येव स्वफले कर्मानपेक्षा, तथा स्वोत्पत्तावपि न कर्मा-ऽपेक्षा, प्रमात्वादेवेति दृष्टान्तेन प्राप्ते, ब्रूमः। विद्यायाः स्वोत्पत्तौ सर्वेषामाश्रमकर्मणामपेक्षास्ति । कुतः॥ यज्ञादिश्रुतेः॥ तमेतं वेदा-ऽनुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽना-शकेनेत्येवंरूपायाः कर्मणां सर्वेषां ज्ञानसाधनत्वबोधिकायाः श्रुतेः । यद्यप्यत्र विविदिषन्तीति वर्तमानोपदेशः प्रतिभाति, न विधिस्तथापि यज्ञादीनां ज्ञानसंयोगस्यापूर्वत्वाद्विधिः कल्प्यः । ब्रह्मानुभवकामो यज्ञादि कुर्यात् । नचाऽनुभवस्य प्रमाणाधीन-त्वान्न यज्ञाद्यपेक्षेति वाच्यम् । मलिनान्तःकरणस्य सत्यपि

प्रमाणेऽनुभावानुत्पत्तेरनुभवोत्पत्तिप्रतिबन्धकान्तःकरणमालिन्यनिवृत्त्यादिपरम्परया ज्ञानस्य यज्ञादिजन्यत्वेन तदपेक्षाया आवश्यकत्वादिति । ननु परम्परया ज्ञानोत्पत्तौ कर्मापेक्षावन्मोक्षेऽप्यपेक्षाऽस्तु । तत्राह ॥ अश्ववदिति ॥ यथा अश्वो योग्यताबलाद् रथचर्यायां विनियुज्यते न लाङ्गलाऽऽकर्षणे तद्वत् कर्मणां मोक्षे योग्यत्वाभावान्नापेक्षेत्यर्थः ॥ २६ ॥

ज्ञानोत्पत्तौ बहिरङ्गमुक्त्वा अन्तरङ्गमाह—

शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्ग-
तया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

यदि कश्चिद्यज्ञादीनां ज्ञानसाधनत्वे विध्यभावाद् ब्रह्मविद्यार्थिना नानुष्ठेयत्वं मन्येत तथापि शमदमाद्युपेतस्तु ब्रह्मविद्यार्थी स्यादेव । कुतः ॥ तद्विधेः ॥ तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येदिति तदङ्गतया विद्याहेतुत्वेन तेषां शमादीनां विधानाद्विहितानां च तेषामवश्याऽनुष्ठेयत्वादित्यर्थः । यज्ञादीनां ज्ञानसाधनत्वे विधिर्नास्ति इति परभ्रान्तिमभ्युपेत्यैवमुक्तं भगवता सूत्रकृता ॥ तथापि त्विति ॥ वस्तुतो विधिरस्तीत्युक्तमेवेति बोध्यम् । यस्मादेवमात्मानं विदित्वा पापेन कर्मणा न लिप्यते, तस्मादेवंविच्छमाद्युपेतो भूत्वा विचारयेदिति श्रुत्यर्थः । अत एवंविदिति विद्यासंनिधानाच्छमादीनामन्तरङ्गत्वं विविदिषासन्निधानाद्यज्ञादीनां बहिरङ्गत्वं बोध्यम् ॥ २७ ॥

( ७ आपदि सर्वान्नभोजनानुज्ञाधिकरणम् । सू० ४ )

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

बृहदारण्यके श्रूयते प्राणसंवादे, न ह वास्यानन्नं जग्धं

भवतीति । अस्य प्राणोपासकस्य यज्जन्तुमात्रस्य जग्धं भक्ष्यं तत्सर्वमनन्नं न भवति । ह वा अदनीयमेव भवतीत्यर्थः । तत्र संशयः । किमियं प्राणोपासकस्य सर्वान्नानुमतिः शमादिवद् विद्याङ्गं विधीयते, उत स्तुत्यर्थं कथ्यते इति । पूर्वपक्षे प्राणविदो भक्ष्याभक्ष्यविभागासिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति । अत्र ब्रह्मविद्यासाधनस्य प्राणविद्यायाः स्वतन्त्रपुरुषार्थहेतोः स्तुत्यर्थं सर्वान्नानुज्ञानमिति निरूपणात् पादसङ्गतिः । तत्र विद्यासन्निधाना-च्छमादिवद् विद्याङ्गमेव सर्वान्नानुमतिरिति प्राप्ते, ब्रूमः । न सर्वान्नानुज्ञानं विद्याङ्गं विधीयते । विध्यभावात् । श्वादिमर्याद-स्यान्नस्य प्राणोपासकेनात्तुमशक्यत्वाच्च । न ह्यशक्ये विधिः सं-भवतीति । तस्मात् प्राणविद्यायां प्राणस्यान्नमिदं सर्वमिति य-च्चिन्तनं विहितं तत्प्रशंसार्थोऽयमर्थवादः । इत्यभिप्रेत्याह सूत्र-कारः ॥ सर्वान्नानुमतिश्च प्राणात्यय इति ॥ साधारणमिदं सूत्रम् । प्राणात्यये एव हि परस्यामापदि सर्वमन्नं सुभक्ष्यं विद्वांसमविद्वांसं प्रति वाऽदनीयत्वेनाऽनुमतं, न स्वस्थं प्रति ॥ तद्दर्शनात् ॥ अभक्ष्यभक्षणस्याऽऽपत्काल एव श्रुतौ दर्शनादि-त्यर्थः । तथाहि मटचीहतेषु कुरुष्वित्येतस्मिन् ब्राह्मणे चाक्रा-यणः किल ऋषिः कुरुदेशे दुर्भिक्षे जाते क्षुत्पीडितो देशान्तर-मागतः कदाचिद्धास्तिपालकदेशं सन्निविष्टस्तेन हस्तिपालकेन अर्द्धभक्षितान् कुलत्थान् माषान् भक्षितवान् । तेन उदपानं गृहाणेत्युक्ते सत्युच्छिष्टं मे पीतं स्यादिति प्रतिषिद्ध्य, किमेते माषा उच्छिष्टा नेति हस्तिपालकेनोक्ते, नेत्यत्र हेतुमाह चाक्रा-यणः । कुल्माषभक्षणं यद्यहं न कुर्यां तर्हि मे जीवनमेव न स्या-दुदपानं तु तडागादिषु स्वेच्छातो भविष्यतीति । एवमिभ्यो-च्छिष्टान् माषान् खादित्वा शिष्टान् जायायै ददौ । तदा च

भर्तुः स्वभावज्ञया निहितानुत्तरदिनेऽपि भक्षितवानिति श्रुतम् । एवं स्वपरोच्छिष्टं पर्युषितान्नभक्षणं दर्शयन्त्याः श्रुतेरयं भावः। परस्यामापदि प्राणनिर्वाहार्थमभक्ष्यमपि भक्षणीयं, स्वस्थावस्थायां विदुषापि तन्न कर्त्तव्यमिति । मटचीशब्देन पाषाणवृष्टयो, रक्तवर्णाः क्षुद्रपक्षिविशेषा वा ग्राह्याः । तस्मात् सर्वान्नानुज्ञानमर्थवादमात्रम् ॥ २८ ॥

अबाधाच्च ॥ २९ ॥

भक्ष्याऽभक्ष्यविभागशास्त्रस्याऽबाधाच्चाऽर्थवादमात्रमित्यर्थः। अन्यथा सामान्यशास्त्रं विशेषपरतया नियम्यमानं बाधितं स्यादिति भावः ॥ २९ ॥

अपिच स्मर्यते ॥ ३० ॥

अपिच परस्यामापदि विदुषोऽविदुषश्च सर्वान्नभक्षणं स्मर्यते—

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा, इति ॥

तथा मद्यं नित्यं ब्राह्मणो वर्जयेदिति । तस्मात् स्वस्थेन विदुषाऽपि नाऽभक्ष्यं भक्षयितव्यम् ॥ ३० ॥

स्मृतिमूलभूतां श्रुतिमप्याह—

शब्दश्चास्याऽकामकारे ॥ ३१ ॥

अस्याभक्ष्यभक्षणस्य प्रतिषेधकः,तस्माद् ब्राह्मणः सुरां न पिबेदित्येवंरूपः शब्दश्चाकामकारे स्वेच्छाकृतप्रवृत्तिनिरासे वर्त्तते इत्यर्थः । तस्मात् प्राणविदः सर्वान्नाऽनुज्ञानम् अर्थवादमात्रमिति सिद्धम् । श्रुतौ, तस्मादिति सुरापस्य ब्राह्मणस्यात्युष्णसुरासेकस्य मरणान्तप्रायश्चितस्य सत्त्वादित्यर्थः ॥ ३१ ॥

( ८ यज्ञादीनामाऽऽश्रमविद्योभयहेतुत्वाधिकरणम् । सू० ४)

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

सर्वापेक्षेत्यत्र स्वस्वाश्रमनित्यकर्मणां तत्त्वज्ञानसाधनत्वमुक्तम् । तानि नित्यकर्माण्यमुमुक्षुणा कर्त्तव्यानि न वेति संदेहः । तत्र, तमेतं वेदाऽनुवचनेनेत्यादिना विद्यासाधनत्वनिर्णयान्न कर्त्तव्यानि इति प्राप्ते । यद्वा सर्वान्नानुमतेः शास्त्रान्तरविरोधात् स्तुतित्ववद् यावज्जीवमित्यादिकर्मनित्यत्वशास्त्रविरोधाद् यज्ञादीनां ज्ञानसाधनत्वश्रुतिः स्तुतिमात्रम् । अन्यथा नित्यत्वेनावश्यानुष्ठेयत्वं ज्ञानार्थत्वेन काम्यतयावश्यानुष्ठेयत्वाभावश्चेत्येकस्मिन् कर्मणि विरुद्धधर्मद्वयं स्यादिति प्राप्ते, ब्रूमः । अमुमुक्षुणाऽप्याश्रमकर्मानुष्ठेयमेव । यावज्जीवमग्निहोत्रमित्यादिना विहितत्वादित्यर्थः ॥ ३२ ॥

नन्वेवं सति विद्यासाधनत्वं कर्मणां न युक्तं, विरुद्धद्वयापत्तेरित्युक्तमित्यत आह—

## सहकारित्वेन च ॥ ३३ ॥

विद्यासहकारित्वेनापि सत्त्वशुद्ध्यादिद्वारा विद्यासाधनत्वेनाऽपि नित्यकर्माण्यनुष्ठेयानि । यज्ञादिश्रुत्या विद्यार्थत्वेन विहितत्वादेवेत्यर्थः । यथैकस्य खादिरत्वस्य खादिरो यूपो भवति, खादिरं वीर्यकामस्येति शास्त्रद्वयात् क्रत्वर्थत्वेन नित्यत्वं, पुरुषाऽर्थत्वेनानित्यत्वं चाविरुद्धं,तद्वदिहापि शास्त्रद्वयबलात् कर्मणां नित्यत्वं काम्यत्वं चाविरुद्धम् । सिद्धे हि वस्तुनि विरुद्धधर्मद्वययोगो बाधको, न तु साध्ये कर्मणि । उभयथाऽप्यनुष्ठानसंभवात् । न च काम्यत्वे, यावज्जीवमितिनित्यत्वश्रुतिविरोधः । काम्यानुष्ठानेनैव नित्यत्वसिद्धेरिति तात्पर्यम् । अत्र पूर्वपक्षे, यज्ञादिश्रुतेः स्तुति-

परत्वं फलं, सिद्धान्ते विधायकत्वमिति बोध्यम् ॥ ३३ ॥

ननु ज्ञानकाण्डस्थयज्ञादिश्रुत्या कर्मकाण्डस्थं यज्ञाद्यनुवादेन ज्ञानसाधनत्वविधानं न युक्तं,किन्त्वपूर्वयज्ञादीनामेव । प्रकरणभेदेन कर्मभेदस्यावश्यकत्वादित्यत आह—

सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथापि नित्यत्वेन ज्ञानार्थत्वेन चाऽनुष्ठेया यज्ञादयो धर्मास्त एव न कर्मभेदोऽस्ति । कुतः ॥ उभयलिङ्गात् ॥ श्रुतिलिङ्गात् स्मृतिलिङ्गाच्चेत्यर्थः । तथाहि श्रुतिलिङ्गं, यज्ञेन विविदिषन्तीति । यज्ञादिशब्देन प्रसिद्धयज्ञाद्यनुवादेन विद्यासाधनत्वं विधीयते, न तु मासमग्निहोत्रं जुहोतीत्यत्रेव प्रसिद्धाऽग्निहोत्रात् कर्मान्तरम् । तत्र हि जुहोतीति विधायकाख्यातप्रकृतिभूतस्य जुहोतेरर्थोऽग्निहोत्रमिति युक्तस्तस्य प्रसिद्धाग्निहोत्राद्भेदः । जुहोतेः साध्यहोमव्यक्तिवचनत्वेन सिद्धाग्निहोत्रपरामर्शानुपपत्तेः । अत एव तदेकार्थकाग्निहोत्रशब्दस्य न नित्याऽग्निहोत्रानुवादकत्वं, व्यक्तिवचनत्वादेव । प्रकृते तु, न यज्ञादिर्विधायकाख्यातप्रकृत्यर्थः । विविदिषाया एव तदर्थत्वात् । तस्मादाख्यातप्रकृत्यर्थाद्भिन्नार्थकैर्यज्ञादिशब्दैः प्रसिद्धयज्ञाद्यनुवादेन विद्यासंयोगमात्रमपूर्वं विधीयते इति न कर्मभेदः । स्मृतिलिङ्गमपि— अनाश्रितः कर्मफलं कार्यं कर्म करोति य इति प्रसिद्धमेव कर्म ज्ञानार्थं दर्शयति । तस्मान्न कर्मभेदः ॥ ३४ ॥

अनभिभवं च दर्शयति ॥ ३५ ॥

रागादिभिः क्लेशैरेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणाऽनुविन्दत इत्याद्या श्रुतिर्ब्रह्मचर्यादेराश्रमकर्मणो मनःशुद्धिद्वारा ज्ञानसाधनत्वे आत्माऽनभिभवं लिङ्गं दर्शयतीत्यर्थः । तस्मात् सर्वेषामाश्रमनित्यकर्मणां ज्ञानार्थत्वमिति सिद्धम् ॥ ३५ ॥

( ९ अनाश्रमिणोऽपि ब्रह्मज्ञानाधिकाराधिकरणम् । सू० ४ )

अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

अन्तरा अन्तराले वर्त्तमानो विधुरः । तस्य किं ब्रह्मविद्यायामधिकारोऽस्ति न वेति सन्देहे यज्ञादिश्रुत्या आश्रमकर्मणामेव ज्ञानसाधनत्वविधानादाश्रमिणामधिकारेऽपि विधुरकृतकर्मणां ज्ञानहेतुत्वाऽभावान्नाऽस्याधिकार इति प्रत्युदाहरणेन प्राप्ते, ब्रूमः ॥अन्तरा चापि॥ आश्रममन्तरा वर्तमानस्याप्यस्त्यधिकारः । तस्य ब्रह्मविद्याधिकारस्यानाश्रमिणो रैक्वादेः श्रुतौ स्मृतौ च दर्शनादित्यर्थः । पूर्वपक्षे अनाश्रमिकर्मणां जपादीनां विद्याहेतुत्वासिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति बोध्यम् ॥३६॥

अपि च स्मर्यते ॥ ३७ ॥

संवर्त्तकप्रभृतीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यते इतिहासे ॥ ३७ ॥

ननु रैक्वादीनां जन्मान्तरकृतादपि कर्मणो विद्यासंभवान्न तेषां विद्यादर्शनमाधुनिकानाश्रमिणो विद्याधिकारे लिङ्गम् । विद्याहेतुभूतकर्माभावादित्यत आह—

विशेषानुग्रहश्च ॥ ३८ ॥

अनाश्रमिणोऽपि जपोपासनादेवताराधनादिभिः कर्मविशेषैर्ज्ञानहेतुभिरस्ति विद्यायामनुग्रह इत्यर्थः । तथाहि । जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयइति स्मृतिर्ब्राह्मणमात्रसंबन्धित्वं जपस्य दर्शयन्तीति विधुरस्यापि विद्यायामधिकारं दर्शयति । तस्मादस्त्यनाश्रमिणोऽधिकारः ॥ ३८ ॥

ननु यदि विधुरस्यापि ब्राह्मणवर्णमात्रसम्बन्धिजपादिनैव विद्यासिद्धिस्तर्ह्याश्रमित्वं व्यर्थमित्यत आह—

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अतस्त्वनाश्रमित्वादितरद् आश्रमित्वं बहुज्ञानसाधनमेव विद्याहेतुः । श्रुतिस्मृतिसिद्धत्वात् । तेनैति ब्रह्मवित् पुण्यकृत्तैजसश्चेति श्रुतौ पुण्यकृत्त्वविशेषणरूपश्रुतिलिङ्गाच्चेत्यर्थः । तेन ज्ञानेन एति ब्रह्म प्राप्नोति ब्रह्मवित् पुण्यकृत् स्वाश्रमोक्तकर्मकृत् तेजसि परमात्मन्यात्मत्वेन वर्त्तते इति तैजसः । तत्र पुण्यकृत्त्वविशेषणादाश्रमित्वं ब्रह्मप्राप्तिहेतुतया ज्याय इति गम्यते ॥ ३९ ॥

नन्वाश्रमिणामपि कर्म विद्याहेतुश्चेदुत्तमाश्रमात् पूर्वाश्रमं प्राप्तस्य कर्म विद्याहेतुरिति किमु वाच्यमिति कैमुतिकन्यायसङ्गत्या आक्षेपे समाधत्ते—

( १० आश्रमाणामवरोहनिराकरणाधिकरणम् । सू० १ )

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमा-
ऽतद्रूपाभावेभ्यः ॥ ४० ॥

किमुत्तमाश्रमात् पूर्वाश्रमं प्राप्तस्य कर्म विद्याहेतुर्वा न वेति सन्देहः । पूर्वपक्षे आश्रमप्रच्युतस्याश्रमिणः कर्मणो विद्याहेतुत्वाभावे आश्रमज्यायस्त्वं न स्यादिति फलं, सिद्धान्ते प्रच्युतेरप्रामाणिकत्वादाश्रमज्यायस्त्वमिति मन्तव्यम् । तत्राश्रमात् प्रच्युतस्याऽपि कर्म ज्ञानहेतुरिति प्राप्ते, ब्रूमः । तद्भूतस्य प्राप्तोत्तमाश्रमस्य अतद्भावः उत्तमाश्रमात्प्रच्युत्यभाव उच्यते। उत्तमाश्रमात् प्रच्युतिर्न कथमपि सम्भवतीति जैमिनेरप्याचार्यस्य सम्मतम् । अपिशब्देन बादरायणस्यापि प्रच्युतिर्न सम्मता । कुतः । अरण्यमियादित्यादिनियमात् । अरण्यशब्देन एकान्तोपलक्षित उत्तमाश्रम उच्यते । तमियाद्गच्छेदित्ययं शास्त्रमार्गः । तस्मादुत्तमाश्रमान्न प्रत्यवरोहेदित्युपनिषद्रहस्यमित्यर्थः । अतद्रूपशब्देन प्रत्यवरोह-

बोधकश्रुत्यभाव उच्यते । अभावशब्देन शिष्टाचाराभावस्ततो-ऽप्याश्रमप्रत्यवरोहो न युक्त इत्यर्थः । तस्मात् प्रच्युतेरप्रामाणिकत्वान्न प्रच्युतस्य कर्म विद्याहेतुरिति सिद्धम् ॥ ४० ॥

एवं प्रत्यवरोहोऽशास्त्रीय इत्युक्तम् । यदि प्रमादात् प्रत्यवरोहो नैष्ठिकब्रह्मचारिणा कृतस्तस्य किं प्रायश्चित्तमस्ति? न वेति सन्देहे, नास्तीति पूर्वपक्षमाह—

( ११ ऊर्ध्वरेतसः पातित्ये प्रायश्चित्ताधिकरणम् । २ )

नचाऽधिकारिकमपि पतनानुमानात्तदयोगात् ॥४१॥

पूर्वं प्रच्युतस्य कर्म न विद्याहेतुरित्युक्तम् । इदानीं प्रच्युतस्यापि कृतप्रायश्चित्तस्य कर्म विद्याहेतुरिति पूर्वसिद्धस्योत्सर्गस्यापवादात् सङ्गतिः । पूर्वपक्षे प्रच्युतस्योर्ध्वरेतसः पातित्यमेवेति फलं, सिद्धान्ते कृतप्रायश्चित्तस्य फलसिद्धिरिति मन्तव्यम् । ब्रह्मचार्यवकीर्णी नैर्ऋतगर्धभमालभेतेति प्रायश्चित्तं श्रुतम् । तदधिकारलक्षणे, अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वादित्यत्र निर्णीतम् । अवकीर्णशब्देन योनौ निक्षिप्तं रेत उच्यते । तदस्यास्तीत्यवकीर्णी । तस्य यः पशुः स लौकिकाग्नौ होतव्यः । यथोपनयनकाले लौकिकाग्नौ होमस्तद्वदाधानस्य पत्नीपरिग्रहोत्तरकालतया पूर्वमप्राप्तकालत्वादिति । तदिदमधिकारलक्षणे सिद्धम् । प्रायश्चित्तमाधिकारिकम् । तदपि नैष्ठिकस्यावकीर्णिनो नैवास्ति । कुतः ?

आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।

प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महेति, पतनानुमानादनिवर्त्त्यपातित्यश्रुत्यनुमापकस्मरणात् तस्य प्रायश्चित्तस्याऽयोगादित्यर्थः ॥ ४१ ॥

समाधत्ते—

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥

नेदं महापातकं, येनोक्तप्रायश्चित्ताभावः स्यात् । अपित्वेके आचार्या उपपदपूर्वकमेवेदं पातकं मन्यन्ते यद् गुरुदारादिभ्योऽन्यत्रगमनम्। तस्मादेतस्योपपातकत्वादुपकुर्वाणस्येव नैष्ठिकस्याऽप्युक्तप्रायश्चित्तभावमिच्छन्ति । उभयोर्ब्रह्मचारित्वे सत्यवकीर्णित्वांविशेषात् ॥ अशनवत् ॥ यथा ब्रह्मचारिणो मधुमांसाशिनो व्रतलोपः, पुनः संस्कारश्च तद्वत् प्रायश्चित्ताभावस्य शास्त्रप्रसिद्ध्यभावात् प्रायश्चित्तस्य च तत्सत्त्वात् प्रायश्चित्तं पुनर्युक्तमभ्युपगन्तुम् । अस्मिन्नर्थे यववराहाऽधिकरणसम्मतिमाह ॥ तदुक्तमिति॥ यवमयश्चरुर्वाराही उपानहावुपमुञ्चत इत्यत्र यववराहशब्दाभ्यां किं प्रियङ्गु—कृष्णशकुन्योर्ग्रहः ? उत दीर्घशूकसूकरयोरिति सन्देहे उभयत्र प्रयोगसाम्याद्विकल्प इति प्राप्ते, प्रियङ्गुकृष्णशकुन्योः शास्त्रप्रसिद्ध्यभावाद्, दीर्घशूकसूकरयोश्च, यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति, वराहं गावोऽनुधावन्तीत्यादिशास्त्रप्रसिद्धिसत्त्वात् तयोरेव ग्रहणमिति प्रमाणलक्षणे सिद्धान्तितं, तथेहापीत्यर्थः । तस्मात्, प्रायश्चित्तं न पश्यामीति स्मृतिः कृतप्रायश्चित्तेनाऽप्यवकीर्णिना सह व्यवहाराभावे यत्नगौरवं सद्भिः कर्तव्यमित्येतत्परेत्यदोषः ॥ ४२ ॥

( १२ भ्रष्टस्य कृतप्रायश्चित्तस्याप्यव्यवहार्यताधिकरणम् । सू० १ )

बहिस्तूभथापि स्मृतेराचाराच्च ॥ ४३ ॥

कृतप्रायश्चित्तेन सह शिष्टाचाररूपं कर्म किं विद्यासाधनं, न वेति सन्देहे, प्रागुक्तप्रायश्चित्तेनैव तस्य शुद्धत्वाद्विद्यासाधनमिति पूर्वसिद्धहेतुमुपजीव्य पूर्वपक्षे सिद्धान्तः ॥ ऊर्ध्वरेतसां स्वाश्रमात् प्रच्युतिर्महापातकमुपपातकं वाऽस्तु । उभयथापि

ते कृतप्रायश्चित्ता अपि शिष्टैर्बहिः कर्त्तव्याः । प्रायश्चित्तं न पश्यामि । आरूढपतितं विप्रं दृष्ट्वा चान्द्रायणं चरेदित्यादि-निन्दास्मृतेः । शिष्टाचाराच्च । न ह्यवकीर्णिना सह शिष्टानाम् अध्ययनाद्याचारोऽस्ति । तस्मात् प्रायश्चित्तेन परलोकशुद्धेनापि तेन सह कृतश्रवणादिकं न विद्यासाधनमिति फलितम् ॥४३॥

( १३ ऋत्विक्कृताङ्गध्यानस्य स्वामिगामित्वाधिकरणम् । सू० ३ )

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

किमङ्गाश्रितोपासनानि यजमानकर्तृकाणि ? आहोस्विद् ऋत्विक्कर्तृकाणीति सन्देहे, यः कृतप्रायश्चित्तः स संव्यवहार्य इत्युत्सर्गस्य निन्दास्मृत्या बाधवदिहाप्यङ्गानुष्ठातुरेवाङ्गाश्रितोपास्ति-कर्तृत्वमित्युत्सर्गस्य, वर्षति हाऽस्मै य उपास्त इत्यादिफलश्रुत्या यो यत्फलभोक्ता स एव तास्मिन् कर्मणि कर्तेति न्यायोप-बृंहितया बाधेन फलभाजो यजमानस्यैव कर्तृत्वमिति दृष्टान्तेन पूर्वपक्षमाह ॥स्वामिन इति ॥ स्वामिनो यजमानस्यैवाङ्गाश्रितोपा-स्तिषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते।कर्माङ्गे पञ्चविधसाम्नि-दृष्ट्युपासकस्य, वर्षति हास्मा इत्यादिफलश्रवणादित्यर्थः ॥ ४४॥

तस्मात् फलभाजो यजमानस्यैव कर्तृत्वमिति प्राप्ते समाधत्ते—

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

अङ्गोपासनमार्त्विज्यम् ऋत्विक्कर्तृकमेवेत्यौडुलोमिराचार्यो मन्यते । तस्मै हि साङ्गाय कर्मणे ऋत्विक् परिक्रीयते यजमानेन। तथाचयजमानगामिफलकमप्यङ्गोपासनं यजमानेन स्वगामिफल-ककर्मार्थं परिक्रीतऋत्विक्कर्तृकमेव कर्माङ्गाऽप्प्रणयनाऽऽश्रित-गोदोहनवदिति न फलश्रुतिविरोधः ॥ ४५ ॥

किञ्च,

## श्रुतेश्च ॥ ४६ ॥

हन्त प्रणवमुद्गीथाख्यं प्राणदृष्ट्या विदित्वा बकनामा ऋषिः सत्रिणामुद्गाता बभूवेति श्रुतिवाक्यशेषादुपासनस्यार्त्विक्कर्तृकत्वमेवेति । अत्र स्वतन्त्रफलानामुपासनानामृत्विक्कर्तृत्वेऽपि यजमानगामिफलकत्वोक्तेरस्ति पादसङ्गतिः । पूर्वपक्षे कर्तृत्वभोक्तृत्वयोरैकाऽधिकरण्यं फलं, सिद्धान्ते ऋत्विजः कर्तृत्वं स्वाम्यऽधीनमिति परम्परयैकाधिकरण्यमिति मन्तव्यम् ॥ ४६ ॥

( १४ निदिध्यासनस्य विधेयत्वाधिकरणम् । सू० ३ )

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

बृहदारण्यके श्रूयते, तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याऽथ मुनिरमौनं च मौनं च निर्विद्याऽथ ब्राह्मण इति। यस्मात् पूर्वे ब्राह्मणा आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थाय भिक्षाचर्यं चरन्ति तस्मादधुनातनोऽपि ब्राह्मणः, पण्डा अध्ययनजाआपातब्रह्मधीस्तद्वान् पण्डितस्तस्य कृत्यं पाण्डित्यं श्रवणं तन्निर्विद्य निश्चयेन लब्ध्वा बाल्येन ज्ञानबलभावेन मननेन शुद्धान्तःकरणत्वेन वा स्थातुमिच्छेत् । तद्द्वयं लब्ध्वा अथ श्रवणमननाऽनन्तरं मुनिर्मननशीलो निदिध्यासनपरः स्यात् । अमौनं श्रवणमनने मौनं च निदिध्यासनं लब्ध्वोक्तत्रयस्य ब्रह्मसाक्षात्कारहेतुत्वात् तत्त्रयाऽनन्तरं ब्रह्माऽवगच्छतीति ब्राह्मणः, साक्षात्कृतब्रह्मरूपो भवतीत्यर्थः । तत्र संशयः । किमत्र निदिध्यासनाख्यं मौनं विधीयते नवेति पूर्वपक्षे। मौनस्यानुष्ठेयत्वासिद्धिः फलं, सिद्धान्ते ज्ञानं फलं प्रत्यन्तरङ्गस्य तस्याऽनुष्ठेयत्वसिद्धिरिति बोध्यम् ।

तत्र तं ह बको दाल्भ्यो विदाञ्चकार सह नैमिषीयाणामुद्गाता बभूवेति वाक्यशेषादुद्गीथोपासकस्य बकनाम्न ऋत्विक्त्वबोधकादङ्गोपासनस्यार्त्विक्कर्मत्ववदिहाप्यथ ब्राह्मण इति वाक्यशेषाद्विधिविधुरादथ मुनिरित्यत्र न मौनविधिरिति दृष्टान्तेन प्राप्ते, ब्रूमः ॥ सहकार्यन्तरविधिरिति ॥ फलभूतसाक्षात्कारे श्रवणाद्यपेक्षया सहकार्यन्तरस्य मौनस्य निदिध्यासनाख्यस्य विधिरित्यर्थः । ननु गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमित्यत्र मौनशब्दस्य पारिव्राज्ये प्रयोगात् कथमत्र मौनं निदिध्यासनं स्यादत आह ॥ तृतीयमिति ॥ श्रवणमननद्वयापेक्षया तृतीयं निदिध्यासनमेवात्र मौनं विधेयमित्यर्थः । तत्रेतराऽऽश्रमसमभिव्याहारबलान्निदिध्यासनप्रधानपारिव्राज्यं मौनशब्देन लक्ष्यत इति भावः । कस्याऽयं मौनविधिस्तत्राह ॥ तद्वत इति ॥ ब्रह्मपरोक्षज्ञानवतः पूर्ववाक्ये प्रकृतस्य संन्यासिन इत्यर्थः । ननु सूक्ष्मवस्तुसाक्षात्कारे निदिध्यासनस्य प्राप्तत्वान्न विधेयत्वमत आह ॥ पक्षेणेति ॥ यस्मिन् पक्षे भेददर्शनप्राप्तिस्तस्मिन् पक्षे प्राप्त्यभावाद्विधिरर्थवानित्यर्थः । ननु ब्रह्मपरवाक्ये कथं मौनविधिरित्याशङ्क्य दृष्टान्तमाह ॥ विध्यादिवदिति ॥ यथा दर्शपूर्णमासप्रधानपरे वाक्ये अन्वाधानादेरङ्गजातस्य विधिस्तद्वदित्यर्थः । प्रधानमारभ्याङ्गपर्यन्तो विधिस्तदादिविध्यादिः, प्रधानमिति यावत् । अत एव प्रयाजादिर्विध्यन्त इत्युच्यते । ब्राह्मण्यस्य फलत्वान्न विधिकल्पना विफलेति भावः ॥ ४७ ॥

ननु श्रवणादिप्रधानो यद्यस्ति संन्यासः, कथं तर्हि छान्दोग्ये गृहिणोपसंहारः, अभिसमावृत्य कुटुम्बे इत्यत्र । तेन हि तदतिरिक्तः संन्यासो नास्तीति द्योत्यत इत्यत आह—

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

गृहिणः कर्मबाहुल्यात्तेनोपसंहारो, न तु संन्यासाभावादित्यर्थः । कृत्स्नाश्रमकर्मणां शमादीनां यथासंभवं गृहिणि भावादित्यक्षरार्थः ॥ ४८ ॥

एवं संन्यासगार्हस्थ्याश्रमद्वयोक्त्या मन्दबुद्धेरितराश्रमाभावाशङ्कास्यात्तन्निरासार्थमाह—

मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

मौनशब्देन संन्यासगार्हस्थ्ययोर्ग्रहस्तद्वदितरयोरपि ब्रह्मचर्यवानप्रस्थयोस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीय इत्यादावुपदेशादनुष्ठेयत्वमित्यर्थः । बहुवचनं त्ववान्तरभेदापेक्षया । गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति ब्रह्मचारिभेदाः, फेनप औदुम्बरो, वैखानसो बालखिल्यश्चेति वानप्रस्थभेदा इति ॥ ४९ ॥

( १५ भावशुद्धेरेव बाल्यशब्दाभिधेयताधिकरणम् । सू० १ )

अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

पूर्वोदाहृतवाक्ये, मौनं विधेयमित्युक्त्वा तत्रत्यं बाल्यं किमित्यपेक्षायां तत्स्वरूपमत्र निरूप्यत इति सङ्गतिः । तत्र किं बाल्यशब्देन बालस्य कर्म तिष्ठन्मूत्रादिकमुच्यते ? उत गर्वप्ररूढेन्द्रियत्वाद्यभावरूपभावशुद्धिरिति संशयः । पूर्वपक्षे पूर्वस्य ज्ञानाङ्गत्वेनानुष्ठानं फलं, सिद्धान्ते उत्तरस्येति बोध्यम् । तत्र प्रसिद्धिबलात् तिष्ठन्मूत्रत्वादिकं बाल्यमिति प्राप्ते ब्रूमः । उक्तभावशुद्धिरेवाऽत्र बाल्यम् । विद्याङ्गत्वात् सर्वस्य बालकर्मणो विद्याविरोधित्वादिति । तदिदमाह । अनाविष्कुर्वन्निदिध्यासनादिभिरात्मानं परार्थमविज्ञापयन् गर्वादिरहितः स्थातुमिच्छेदिति बाल्येन तिष्ठासेदित्यस्यार्थः । कुतः ॥ अन्वयात् ॥ अस्यवाक्यस्य विद्याङ्गान्वयस्यैव सम्भवादित्यर्थः ॥ ५० ॥

एवं यज्ञादिकमारभ्य बाल्यान्तं विद्याहेतुमुक्त्वा तत्फलविद्यायाः कालमाह—

( १६ आत्मज्ञानस्यैहिकामुष्मिकत्वव्यवस्थाधिकरणम् । सू०१)

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

किमिहैव जन्मनि विद्योत्पत्तिरुत कदाचिदमुत्रापीति संशयः । पूर्वपक्षे श्रवणादेर्विद्याहेतुत्वान्नियमः । विद्याया ऐहिकत्वेन क्वचिददर्शनादिति फलं, सिद्धान्ते त्वऽप्रतिबद्धश्रवणादेस्तान्नियम इति मन्तव्यम् । तत्रेहैव जन्मनि विद्याजन्मास्त्विवतिकामनया श्रवणादिषु प्रवृत्तेरैहिकमेव विद्याजन्मेति प्राप्ते ब्रूमः । विद्याविरुद्धफलकं देशकालविशेषाऽपेक्षं फलोन्मुखं कर्म प्रस्तुतम् । तेन प्रतिबन्धाऽभावे सत्यैहिकं विद्याजन्म सति श्रवणादिपौष्कल्ये भवत्येव । चित्राफलपशुवत् । सति तु प्रतिबन्धे, अमुत्रापीति अनियम एव, न त्विहैवेति नियमः । कुतः । तद्दर्शनात् ॥ प्रतिबन्धाऽप्रतिबन्धाभ्यामनियमस्य श्रुतौ दर्शनात् । तथा हि श्रुतिर्जन्मान्तरानुष्ठितश्रवणादेः फलं जन्मान्तरे दर्शयति । गर्भस्थ एव च वामदेवः प्रतिबुबुधे ब्रह्मभावमिति । सति तु प्रतिबन्धे विद्या दुर्लभेत्यप्याह श्रुतिः । श्रवणायापि बहुभिर्यो न लभ्यः,शृण्वन्तोऽपि बहवो यं न विद्युः, आश्चर्योऽस्य वक्ता कुशलोऽस्यलब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टइति। आत्मश्रवणमपिबहूनां दुर्लभं कुतश्चिद्भाग्याच्छ्रवणलाभेऽपि तत्फलं ज्ञानं दुर्लभम्। तत्र हेतुराश्चर्य इति । यथा परस्यात्मनो वक्ताऽऽश्चर्योऽद्भुतवत् कश्चिदेव सम्भवति । सम्यगाचार्यलाभेऽपि तस्माच्छ्रुत्वास्यात्मनो लब्धा साक्षाकर्त्ताश्चर्यः । तिष्ठतु साक्षात्कारः, कुशलेनाचार्येणाऽनुशिष्टोऽपि शास्त्रेणास्यात्मनः परोक्षत्वेन ज्ञाताऽप्याश्चर्य एवेत्यर्थः । तस्मादनियमो विद्याजन्मन इति सिद्धम् ॥ ५१ ॥

( १७ मुक्तेरेकविधत्वाधिकरणम् । सू० १ )

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥

यथा विद्यायाः श्रवणादिसाधनोत्कर्षापकर्षाभ्यामैहिकाऽऽमुष्मिकत्वरूपोपचयापचयानियम, एवं तत्फले मुक्तावुपचयाऽपचयत्वनियमोऽस्ति नवेति संदेहे पूर्वपक्षे स्वर्गादिवत् कर्मसाध्यत्वं मोक्षस्येत्येतत्पादाद्याऽधिकरणासिद्धिः फलं, सिद्धान्ते तस्य निर्विशेषस्य ज्ञानैकलभ्यमिति तत्सिद्धिरिति मन्तव्यम् । तत्र पूर्वोक्तविद्यादृष्टान्तेन फलत्वेन हेतुना मोक्षस्य सातिशयत्वानियमे प्राप्ते ब्रूमः । एवं विद्यावन्मुक्तिरूपफलस्याऽनियमो निर्विशेषत्वमेव । कुतः । तदवस्थावधृतेः ॥ मुक्त्यवस्थाया निर्विशेषब्रह्मरूपत्वेन ब्रह्म वेद ब्रह्मैव भवतीत्यादिष्ववधारणादित्यर्थः । तथाच फलत्वहेतुकाऽनुमानस्यागमबाधः । न हि साक्षात्काररूपविद्यायामुपचयापचयत्वमस्ति । न हि पूर्वोत्तरभाविघटसाक्षात्कारयोश्चिरत्वाऽचिरत्वमतिशय इति कश्चिदभ्युपैति । तस्मान्निर्विशेषब्रह्मसाक्षात्कारस्यैकरूपत्वात्तल्लभ्यो मोक्षो निरातिशयाऽऽनन्दात्मकरूप एवेति सिद्धम् । अभ्यासोऽध्यायसमाप्तिद्योतनार्थः ॥५२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुन्दगोविन्द श्रीचरणशिक्षितश्रीरामानन्दसरस्वतीकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्माऽमृतवर्षिण्यां तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

समाप्तश्चाध्यायस्तृतीयः ॥ ३ ॥ ४ ॥

## चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

पूर्वाध्यायान्त्याधिकरणे मोक्षे विशेषनियमाभाव उक्तः । सम्प्रति मोक्षहेतुज्ञानसाधनेषु श्रवणादिष्वावृत्त्याऽनुष्ठाननियममाह—

( १ श्रवणमननादीनामावृत्त्यधिकरणम् । सू० २ )

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

पूर्वस्मिन्नध्याये परापरविद्यासु साधनाविषयो विचारः कृतः । अत्र तत्फलविचारः क्रियते । अतोऽनयोरध्याययोर्हेतुहेतुमद्भावः सङ्गतिः । अत्र प्रथमे पादे श्रवणाद्यावृत्त्या निर्गुणमुपासनया सगुणं वा ब्रह्म साक्षात्कुर्वतः प्रारब्धकर्मातिरिक्तपुण्यपापनिवृत्तिरूपा जीवतो मुक्तिः प्रतिपाद्यते । द्वितीये पादे म्रियमाणस्योत्क्रान्तिः । तृतीये पादे सगुणब्रह्मविदो मृतस्योत्तरो मार्गश्च प्रसङ्गान्निरूप्यते । चतुर्थपादे पूर्वार्द्धेन निर्गुणब्रह्मविदो विदेहकैवल्यम् । उत्तरार्द्धेन सगुणब्रह्मविदो ब्रह्मलोकप्राप्तिश्च निरूप्यत इति तत्तद्विचारात्मकाऽधिकरणानां तत्तत्पादसङ्गतिर्बोध्या । तदुक्तम्—

चतुर्थे जीवतो मुक्तिरुत्क्रान्तिर्गतिरुत्तरा ।
ब्रह्मप्राप्तिब्रह्मलोकाविति पादार्थसङ्ग्रह, इति ॥

पूर्वाध्याये साक्षाच्छ्रुत्युक्तसाधनाविचारः कृतः । इदानीं फलार्थापत्तिलभ्यस्यावृत्त्यादेर्विचारस्तृतीयशेष एवाऽऽद्याश्लेषाऽधिकरणपर्यन्तं क्रियते । तत्र साक्षात्कारसाधनत्वेन श्रुतश्रवणादिषु संशयः । किं सकृदेव श्रवणादि कर्त्तव्यमुत श्रवणादेरावृत्तिरिति । पूर्वपक्षे श्रवणादीनामदृष्टार्थत्वं फलं, सिद्धान्ते यावत्फलमावर्त्तनीयत्वादवघातादिवद् दृष्टार्थत्वमिति बोध्यम् । तत्रैकवारमेव श्रवणादिकं प्रयाजादिवत् कर्त्तव्यमिति प्राप्ते, ब्रूमः।

श्रवणाद्यावृत्तिरेव कर्तव्या।कुतः। श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यसकृदुपदेशात् । नन्वत्र श्रवणाद्यावृत्तिर्न श्रूयते इति-चेत्। उच्यते। साक्षात्कारस्यैवाविद्यानिवर्त्तनक्षमत्वेनाऽहिविभ्रमादौ दृष्टत्वात् सूक्ष्मवस्तुसाक्षात्कारस्य चाऽऽवृत्तिविशिष्टश्रवणादि-साध्यत्वस्य षड्जादिस्वरे दृष्टत्वाद् दुर्विज्ञेयात्मश्रवणादावपि संसाराऽनर्थमूलाविद्यानिवर्त्तनक्षमसाक्षात्कारायावृत्तिः कर्तव्या। दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेरिति तात्पर्यम्। एवमुपास्यसाक्षात्कारद्वारा फलहेतूपासनेष्वावृत्तिर्बोध्या।दृष्टार्थत्वाद् वेद उपासीते-त्यावृत्तिश्रवणाच्च।प्रत्ययप्रवाहस्यैवोपासनत्वात्। वेदेत्यस्याप्युपासनार्थकत्वात्। तथाहि। संवर्गविद्यायां विदिनोपक्रम्योपास्तिना उपसंहारो दृश्यते। यस्तद्वेद यत् स वेद स मयैतदुक्त इत्युपक्रम्याऽनु म एतां भगवो देवतां शाधि यां देवतामुपास्स इत्युपसंहारात्। यत् स रैक्को वेद प्राणतत्त्वं स सर्वं कर्मफलं प्राप्नोति, एवं रैक्कादन्योऽपि यस्तद् रैक्कवेद्यं वेद सोऽपि तथैव फलं प्राप्नोति ॥ स एवम्भूतो रैक्को मया एतदुक्त इत्थमुक्त इति हंसं प्रति हंसान्तरवचनम्।हे भगवो रैक्क, यां देवतां त्वमुपास्से तामेतां मे अनुशाधि शिक्षय ज्ञापयेति जानश्रुतिवचनम्। तस्मात् साक्षात्कार-साधनेष्वावृत्तिसिद्धिः ॥ १ ॥

## लिङ्गाच्च ॥ २ ॥

तथाहि। उद्गीथोपासनं प्रकृत्य आदित्य उद्गीथ इत्युपासनमेकपुत्रतादोषेणापोद्य, रश्मींस्त्वं पर्यावर्तयादिति रश्मिबहुत्वोपासनं बहुपुत्रतायै विदधद्वाक्यं प्रत्ययावृत्तिं सूचयति । तन्न्यायेन साक्षात्कारसाधनेष्वप्यावृत्तिसिद्धिः। हे पुत्र, त्वं रश्मीन् आदित्यं च प्रत्येकं पर्यावर्तयात् । तकारमन्तर्भाव्य पर्यावर्तयतादिति मध्यमपुरुषैकवचनम् । उपास्स्वेत्यर्थः ॥ २ ॥

( आत्मत्वेन ब्रह्मणो ग्रहणाधिकरणम् । १ )

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

पूर्वं श्रवणमनननिदिध्यासनानामावृत्तिरुक्ता । तामुपजीव्य संदिह्यते । किं निदिध्यासनावृत्तिकाले, प्रत्यक्त्वेनेश्वरध्यानं कर्तव्यमुत भिन्नत्वेनेति । पूर्वपक्षे श्रुतीनामभेदपराणां गौणार्थत्वं फलं, सिद्धान्ते मुख्यार्थत्वम् । यद्यप्यभेदश्रुतीनां प्रत्यक्षादिविरोधपरिहारात्मकमिदमधिकरणमविरोधाध्यायसङ्गतं, तथापि महावाक्यार्थविरोधपरिहारस्य समाधावन्तरङ्गत्वादेतत्पादसङ्गतिः तत्राभेदस्य प्रत्यक्षेण सर्वज्ञत्वाकिञ्चिज्ञत्वादिविरुद्धधर्मवत्त्वालिङ्गका-ऽनुमानेन च बाधाद् भिन्नत्वेन ध्यानमिति प्राप्ते, ब्रूमः ॥

आत्मेत्येवेश्वरो ध्येयः ज्ञातव्यो महावाक्यैः । तथाहि । जाबाला आत्मत्वेनेश्वरमभ्युपगच्छन्ति, त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसीति । तथा ग्राहयन्ति चेश्वरमात्मत्वेन, तत्त्वमस्यादिवाक्यानि । नच तेषां नाम ब्रह्मेत्यादिवद् गौणार्थत्वम् । सति मुख्यार्थत्वसम्भवे गौणत्वाऽयोगात् । नच प्रत्यक्षादिविरोधादसम्भवः । तेषां मिथ्याभेदगोचरत्वेन पारमार्थिकाभेदविरोधित्वाभावादिति भावः ॥ ३ ॥

( २ प्रतीकेऽहंदृष्टिनिरासाधिकरणम् । सू० १ )

न प्रतीके न हि सः ॥ ४ ॥

मनो ब्रह्मेत्युपासीत, नाम ब्रह्मेत्यादिषु प्रतीकोपासनेषु संशयः । किं प्रतीके मनआदौ स्वात्मबुद्धिः कर्तव्या, न वेति । पूर्वपक्षे प्रतीकोपास्तीनामहङ्ग्रहोपास्तिभ्यो विशेषासिद्धिः फलं, सिद्धान्ते तु विशेषसिद्धिरिति बोध्यम् । एतदारभ्याऽधिकरणत्रयस्य प्रासङ्गिकी पादसङ्गतिः । तत्र ब्रह्मणः स्वाभिन्नत्वाद्यथा स्वात्मत्वेन बुद्धिरेवं प्रतीकस्य ब्रह्मविकारत्वेन जीवाभिन्नब्रह्मा-

ऽभिन्नत्वादुपासकजीवात्मत्वबुद्धिः कार्येति दृष्टान्तेन प्राप्ते ब्रूमः । न प्रतीके स्वात्मत्वबुद्धिकार्या । न हि स उपासक आत्मत्वेन प्रतीकमनुभवति । अत्राऽयं विकल्पः। किमनुभवबलात् प्रतीकस्य आत्मत्वेन बुद्धिः कार्या, उत श्रुतत्वाद्, आहोस्वित् स्वाऽभिन्न-ब्रह्माऽभिन्नत्वाद्वा । नाद्य इत्युक्तं, न हि स इति । न द्वितीयः। अश्रवणात् । न तृतीयः । प्रतीकस्य स्वरूपेण ब्रह्माभिन्नत्वायोगात् । प्रतीकस्य पृथक्सत्त्वबाधे चोपासनाविषयभावप्रसङ्गादिति भावः ॥ ४ ॥

( ४ उपास्ये ब्रह्मदृष्ट्यधिकरणम् । सू० १ )

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

पूर्वोक्तप्रतीकोपासनेषु ब्रह्मणि मनआदिदृष्टिः कर्तव्या, उत मनआदौ ब्रह्मदृष्टिरिति संशयः । पूर्वपक्षे निकृष्टे उत्कृष्टबुद्धिः कर्तव्येति न्यायानपेक्षाफलं, सिद्धान्ते तदपक्षेति मन्तव्यम् । एकविषयत्वमवान्तरसङ्गतिः । तत्र ब्रह्मण्येव मनआदिदृष्टिः ब्रह्मणः प्राधान्येनोपास्यत्वोपपत्तये कर्तव्येति प्राप्ते, ब्रूमः । मनआदावेव ब्रह्मदृष्टिः कार्या ब्रह्मण उत्कर्षात् ॥ उत्कृष्टदृष्टौ हि निकृष्टे कृतायां निकृष्टस्योत्कृष्टता भवति । यथाऽमात्ये राजबुद्धिः फलाय, न तु राज्ञि अमात्यबुद्धिः । न चैवं ब्रह्मणः प्राधान्याऽभावः । इष्टत्वादिति भावः ॥ ५ ॥

( ५ अङ्गेष्वादित्यादिधीकरणाधिकरणम् । सू० १ )

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

य एवाऽसौ तपति तमुद्गीथमुपासीतेत्यादीन्यङ्गाश्रितोपासनानि सन्ति । तत्र संशयः। किमादित्यादिषु उद्गीथदृष्टिः कर्तव्या, उतोद्गीथादिषु आदित्यादिदृष्टिरिति । तत्रोद्गीथादीनां कर्मरूपाणां फलहेतुत्वेनोत्कृष्टत्वादादित्यादीनां सिद्धरूपाणां

तदभावेन निकृष्टत्वात् पूर्वन्यायेनाऽऽदित्यादिषूद्गीथादिदृष्टिरिति दृष्टान्तेन प्राप्ते, ब्रूमः । उद्गीथादौ कर्माङ्गे आदित्यादिमतय एव कर्तव्याः ॥ उपपत्तेः ॥ यथा प्रोक्षणादिना व्रीह्यादिषु संस्कृतेषु प्रकृतकर्मापूर्वमुत्पद्यते तथा कर्माङ्गेषूद्गीथादिष्वादित्यादिदृष्टिभिः संस्कृतेषु प्रकृतस्य कर्मणः फलाधिक्यलक्षणा समृद्धिर्भवति । अन्यथा न भवेदादित्यादीनामनङ्गत्वात् । तथाच कर्मसमृद्धिरूपफलोपपत्तेरङ्गेष्वनङ्गमतिरित्यर्थः । आदित्यादौ उद्गीथादिमतिप्रक्षेपे फलासिद्धेर्नोद्गीथादीनामुत्कर्ष इति भावः ॥ ६ ॥

( ६ उपासने आसनावश्यकताधिकरणम् । सू० ४ )

आसीनः सम्भवात् ॥ ७ ॥

किं कर्माङ्गानाश्रितान्युपासनानि, तिष्ठन्नासीनः शयानो वा कुर्यादित्यनियमः उताऽऽसीन एवेति नियम इति संशयः । पूर्वोत्तरपक्षयोः पूर्वोत्तरकोटिसिद्धिरेव फलम् । निदिध्यासनादौ विद्यासाधने आसननियमोक्तेः पादसङ्गतिः । तत्र पूर्वोक्तकर्माऽङ्गोपासनेष्विवाऽनियम इति प्राप्ते, ब्रूमः । आसीन एव कर्माऽनङ्गोपासनानि कुर्वीत । कुतः । समानप्रत्ययप्रवाहात्मकोपासनस्याऽऽसीन एवोपासके सम्भवात् । न हि तिष्ठतः पुंस उपासनं सम्भवति । शरीरधारणे यत्नाऽपेक्षायां चित्तविक्षेपात् । नापि शयानस्य, निद्राप्रसङ्गात् । अङ्गोपासनानां त्वङ्गपारतन्त्र्याद् युक्तस्तत्राऽनियम इति ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥

उपासनस्य ध्यायत्यर्थध्यानरूपत्वाद्ध्यायतेश्च आसीनेषु बकादिष्वेकविषयदृष्टिषु प्रयोगादासीन एवोपासीतेत्यर्थः ॥८॥

अचलत्वञ्चाऽपेक्ष्य ॥ ९ ॥

किञ्च, ध्यायतीव पृथिवीत्यत्र श्रुतौ पृथिव्या अचलत्वमपेक्ष्य ध्यानोपचारो दृष्टः । तस्मादपि लिङ्गादासीन एव उपासीत ॥ ९ ॥

स्मरन्ति च ॥ १० ॥

शुचौ देशे प्रतिष्ठाऽप्यस्थिरमासनमात्मन इत्यादिना बाह्यासनविधानस्मरणाच्चासीन एवोपासीत।यद्वा योगशास्त्रे पद्मकादीनां शारीरासनानां स्मरणादासीन एवोपासीतेत्यर्थः ॥ १० ॥

( ७ उपासने दिगादिनियमनिराकरणाधिकरणम् । सू० १ )

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

दिग्देशकालेषु संशयः । किमङ्गानाश्रितोपासनेषु दिगादिनियमोऽस्ति न वेति । तेष्वासननियमवदस्ति नियम इति प्राप्ते, ब्रूमः। प्राच्यादिदिङ्नियमः, प्रदोषादिकालनियमो नदीतीरादिदेशनियमो वा नास्ति । कुतः । यत्र दिशि देशे काले वा चित्तस्यैकाग्रता प्रत्ययप्रवाहौन्मुख्यं, तत्रैवोपासीत दिगादिविशेषाऽश्रवणादित्यर्थः । यद्वोपासन इष्टाया एकाग्रतायाः सर्वत्राऽविशेषादित्यर्थः । समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाशयादिभिर्मनोऽनुकूले, न तु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेदिति श्रुतिरपि चित्तस्यैकाग्र्यसम्पादके देशे उपासीतेति दर्शयति । शर्करासूक्ष्मपाषाणाः । जलाशयवर्जनं शीतनिवृत्त्यर्थम् । चक्षुःपीडनं मशकादिकम् । तस्मादुपासने दिगादिनियमो नास्तीति सिद्धम् ॥ ११ ॥

( ८ उपासनानामामरणावर्तनाधिकरणम् । सू० १ )

आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

उपास्यसाक्षात्कारद्वारा फलहेतुषूपासनेषु, अहङ्ग्रहनामकेषु

संशयः । किं कदाचिदुपासनं कृत्वोपरमेत, उत यावज्जीवमुपासीतेति । पूर्वपक्षे कदाचित्कृतप्रत्ययावृत्तेरदृष्टद्वारा मृतिकाले ध्येयबुद्धिहेतुत्वं फलम् ॥ सिद्धान्ते धारावाहिकोपासनस्य साक्षादेव तद्धेतुत्वमिति विभागः । तत्र देशादिनियमाऽश्रवणात्तदभाववद्यावज्जीवमुपासनाऽश्रवणात् तदभाव इति प्राप्ते, ब्रूमः । आप्रायणाद्देहपातपर्यन्तमुपासीत । हि यतस्तत्रापि मरणकालेऽपि स यावत्क्रतुरस्माल्लोकात् प्रैति इति श्रुत्या ध्येयप्रत्ययानुवर्त्तनं दृष्टम् । न च तददृष्टसाध्यम् । दृष्टे सम्भवति अदृष्टकल्पनानुपपत्तेः । श्रुतौ सर्वनामार्थ उपासकः । क्रतुरुपासनम् । सदा तद्भावभावित इति स्मृतिश्च यावज्जीवमुपासनां दर्शयति । तस्मादहङ्ग्रहोपास्तयो यावज्जीवमनुष्ठेया इति सिद्धम् ॥ १२ ॥

एवं ज्ञानसाधनानुष्ठाने यत्नाधिक्यार्थं फलाध्यायेऽपि साधनानुष्ठानक्रमं विचार्य फलाध्यायस्थां फलचिन्तामुपक्रमते—

( ९ ज्ञानिनो जीवत एव पापलेपनिराकरणाधिकरणम् । सू० १ )

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

तथाचास्य फलविचारप्रतिबन्धकसाधनजिज्ञासाभावरूपाऽवसरसङ्गतिर्लब्धा । किं ब्रह्मविद्यायामुत्पन्नायां विदुषो भविष्यत्पापाऽसम्बन्धपूर्वपापविनाशौ भवतो, न वेति सन्देहः । पूर्वपक्षे सत्यामपि विद्यायां पापफलभोगाऽनन्तरं विद्यातो मुक्तिः फलं, सिद्धान्ते विद्योत्पत्त्यनन्तरमेव मुक्तिरिति बोध्यम् । तत्र फलभोगं विना नास्ति विद्यया पापनाश इति प्राप्ते ब्रूमः । तदऽधिगमे ब्रह्मसाक्षात्कारे सति उत्तरपूर्वाघयोरविश्लेषविनाशौ भवत एव । कुतः । तयोर्विदुषि श्रुत्या व्यपदेशात् । यथा

पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यत इति श्रुतिर्विद्यात उत्तरस्य पापस्य अश्लेषं दर्शयति । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हाऽस्य सर्वे पाप्मानः प्रदूयन्त इति श्रुतिर्विद्यातः पूर्वस्य पापस्य विनाशं व्यपदिशति । एवं निर्गुणविदोऽपि पापलयं व्यपादिशति । क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे इत्यादिका श्रुतिः ॥ तस्माद् ब्रह्मविद्यावतः पूर्वोत्तरपापासम्बन्ध इति सिद्धम् ॥ १३ ॥

( १० ब्रह्मात्मैक्यज्ञानिनः पुण्यलेपनिराकरणाधिकरणम् । सू० १ )

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पूर्वं ब्रह्मविद्यातः पापनाशासम्बन्धावुक्तौ । तद्वत् पुण्यस्यापि नाशाऽसम्बन्धौ भवतो, न वेति सन्देहे, तत्त्वज्ञानपुण्ययोः शास्त्रीयत्वेनाग्निहोत्रदर्शयोरिव विरोधाभावान्न सम्भवत इत्यभ्यधिकाशङ्कायां पूर्वन्यायमतिदिशति ॥ इतरस्यापि पापादितरस्य पुण्यस्याऽप्येवमघवदश्लेषो विनाशश्च ज्ञानाद्भवतः । उभे उ हैवैष एते तरतीत्यादिश्रुतिषु पापासम्बन्धवत् पुण्यासम्बन्धस्यापि व्यपदेशात् । श्रुतौ उ-शब्दोऽप्यर्थः । एष ब्रह्मसाक्षात्कारवान् । सूत्रे तु-शब्दोऽवधारणार्थः । एवं ब्रह्मसाक्षात्कारवतः पुरुषधौरेयस्य पुण्यपापयोर्बन्धहेत्वोरभावाद्देहपाते मुक्तिरवश्यं भवत्येवेत्यधिकरणद्वयस्य फलमुक्तम् । अग्निहोत्रदर्शयोरविरुद्धफलत्वमुपाधिः । अस्याऽतिदेशत्वान्न पृथक्सङ्गत्याद्यपेक्षा ॥१४॥

( ११ ज्ञानादनारब्धपुण्यपापयोरेव निवृत्त्यधिकरणम् । सू० १)

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वं ज्ञानात् कर्मक्षय उक्तः । तस्य प्रारब्धकर्मव्यतिरिक्तविषयत्वेनात्रापवादात् सङ्गतिः । ज्ञानजन्यकर्मक्षयः किमविशेषेण

कर्ममात्रस्य भवति, उत प्रारब्धकर्मव्यतिरिक्तस्येति संशयः।पूर्वपक्षे जीवन्मुक्त्यसिद्धिः फलं सिद्धान्ते तत्सिद्धिरिति बोध्यम्।तत्र, क्षीयन्ते चास्य कर्माणीत्यविशेषेण श्रवणात् कर्ममात्रस्य क्षय इति प्राप्ते, ब्रूमः ।ये पुण्यपापे एतद्देहावच्छेदेन सुखदुःखानुभवार्थं प्रवृत्ते, ते आरब्धकार्ये तद्व्यतिरिक्ते अनारब्धकार्ये, पूर्वे अनादिभवपरम्परायां ज्ञानोत्पत्तिपर्यन्तं सञ्चिते ते एव क्षीयेते। कुतः?।

तदवधेः ॥ तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य इति देहपातावधिश्रवणादित्यर्थः। तथाच विशेषश्रुत्यनुसारादविशेषश्रुतिर्नेतव्येति भावः। ब्रह्मात्मत्वसाक्षात्कारवान् यावन्न विमोक्ष्ये, न विमोक्ष्यते, तस्य तावदेव चिरं तावानेव देहपातरूपो विलम्बः । अथ प्रारब्धकर्मभोगाद्देहपातानन्तरं सम्पत्स्ये ब्रह्म सम्पत्स्यत इत्यर्थः ॥ १५ ॥

( १२ अग्निहोत्रादिनित्यकर्मणो नाशनिराकरणा- )
( ऽधिकरणम् । सू० २ )

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

पूर्वमानारब्धकार्याणां कर्मणां ज्ञानात् क्षय उक्तस्तस्य नित्यनैमित्तिकातिरिक्तानारब्धकार्यकर्मविषयत्वेनात्राऽपवादात् सङ्गतिः। किं नित्यनैमित्तिकं कर्मजातम् अनारब्धकार्यकर्मवज्ज्ञानात् क्षीयते, न वेति सन्देहः। पूर्वपक्षे काम्यकर्मण इव मुमुक्षूणां नित्यनैमित्तिकयोरप्यननुष्ठानं, पङ्कप्रक्षालनन्यायात् ।सिद्धान्ते तदनुष्ठानमिति फलं बोध्यम् । तत्राऽनारब्धकर्मत्वाविशेषान्नित्यनैमित्तिककर्मजातं ज्ञानात् क्षीयत इति प्राप्ते, ब्रूमः ॥ अग्निहोत्रादि नित्यनैमित्तिकं कर्म। तत्कार्यायैव। तस्य ज्ञानस्य यत् कार्यं मुक्तिरूपं तस्मा एव सत्त्वशुद्ध्यादिपरम्परया।कुतः॥

तद्दर्शनात् ॥ यज्ञादिश्रुतौ ज्ञानहेतुत्वदर्शनादित्यर्थः ॥ तथाच ज्ञानरूपफलकनाश्यत्वं नित्यनैमित्तिककर्मजातस्य । नचात्र पङ्कप्रक्षालनन्यायः । ज्ञानार्थत्वेनानुष्ठानस्यार्थवत्त्वादिति भावः॥१६

ननु नित्यादेर्ज्ञानार्थत्वे तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामितिविनियोगवाक्यं किं विषयकमित्यत आह—

अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतोऽग्निहोत्रादेर्नित्यादिरूपाद् अन्याप्यस्ति काम्यरूपा साधुकृत्या।तद्विषयमिदमेकेषां शाखिनां विनियोगवाक्यम्।तस्या ज्ञानानुपकारकत्वात्। तच्चानुपकारकत्वमुभयोर्जैमिनिबादरायणयोराचार्ययोः सम्मतमित्यर्थः । नन्वस्याः काम्यसाधुकृत्याया इतरस्याप्येवमसंश्लेष इत्यत्र नाश उक्तः । कथं तस्या विनियोग इति चेत् । अत्र वक्तव्यम् । सुहृदः साधुकृत्यामुपयन्तीत्यस्य कोऽर्थः । न तावत्तामेव प्राप्नुवन्तीत्यर्थः । द्रव्यादिवत्तस्याः प्राप्त्ययोगात् ॥ नाऽपि तत्फलं प्राप्नुवन्तीत्यर्थः । शास्त्रफलं प्रयोक्तरीति न्यायविरोधात् । न च वैश्वानरेष्टिन्यायः । अश्रवणात् सुहृदोऽनुद्देश्यत्वाच्च । तस्माद्विद्वत्सेवाकर्तरि सुहृदि विद्वन्निष्ठा साधुकृत्या स्वतुल्यां साधुकृत्यां जनयति, स्वयं च ज्ञानान्नश्यतीत्यविरोधः, समानः पापकृत्यायामूहः । अर्थवादत्वान्नातीवाभिनिवेष्टव्यम् ॥ १७ ॥

( १३ नित्यकर्मणो विद्यासाधनताधिकरणम् । सू० १ )

यदेव विद्ययेति हि ॥ १८ ॥

पूर्वं मुमुक्षुणा ज्ञानार्थं नित्यादिकमनुष्ठेयमित्युक्तम् । तत्कि-

मङ्गाश्रितोपासनसहितमेव ज्ञानार्थमनुष्ठेयमिति नियमः, उतोपास्ति-सहितं केवलं वाऽनुष्ठेयमित्यनियम इति संशयः। एकविषयत्वं सङ्गतिः। पादसङ्गतिस्तु प्रासङ्गिकी बोध्या । पूर्वपक्षे केवल-स्य नित्यादेर्ज्ञानहेतुत्वासिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति बोध्यम्। तत्र नियमे प्राप्ते, ब्रूमः नियमो न युक्त इति। तथाहि। यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीतिश्रुतिर्विद्यया सहितस्य कर्मणो वीर्यवत्तरत्वं ब्रुवन्ती विद्याहीनस्य कर्मणो वीर्यवत्त्वं फलहेतुत्वरूपं दर्शयति । तच्च केवलकर्मणो ज्ञानरूपफलहेतु-त्वाभावे न युक्तं स्यात्। तस्मात् केवलमपि कर्म ज्ञानहेतुरित्य-ऽनियम इति सिद्धम् ॥ १८ ॥

एवमनियमेनाग्निहोत्रादिकर्मणो ज्ञानार्थत्वात् ज्ञानेन क्षय इत्युक्तम् । इदानीं प्रारब्धकर्मणामनारब्धकार्ये एव त्विन्यत्र ज्ञानानिवर्त्यत्वेनोक्तानां निवृत्तिप्रकारमाह—

( १४ अधिकारिणामपि मुक्तिनियत्यधिकरणम् । सू० १ )

भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

किं ब्रह्मसाक्षात्कारवान् देहपाताऽनन्तरमपि संसरति, न वेति सन्देहः। पूर्वपक्षे साक्षात्कारस्य मुक्तिहेतुत्वासिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति विवेकः । तत्र देहपातात् पूर्वं यथा साक्षात्कारेऽपि संसारानुवृत्तिरेवं देहपातानन्तरमपीत्यनारब्धा-ऽधिकरणदृष्टान्तेन प्राप्ते, ब्रूमः । सञ्चितकर्मणां ज्ञानान्नाश उक्तः। इतरे त्वारब्धकार्ये पुण्यपापे भोगेन क्षपयित्वा, विद्वान् ब्रह्म सम्पद्यते। अथ सम्पत्स्ये । ब्रह्मैव सन् ब्रह्माऽप्येतीत्यादि-श्रुतिभ्यः । देहपातात् पूर्वं प्रारब्धकर्मणां सत्त्वात् कुलाल-चक्रभ्रमिन्यायेन मिथ्याज्ञानरूपनिमित्तनाशेऽपि अविद्यालेशानु-

वृत्तिर्युक्ता । तद्भोगानन्तरं कस्यचिदपि कर्मणो जन्ममरणलक्षण-संसारहेतोरभावान्न संसारः । तस्माद्भोगेन प्रारब्धकर्मनाशा-ऽनन्तरं विद्वान् स्वरूपानन्दात्मनावस्थानलक्षणं स्वास्थ्यं मोक्षा-ख्यं लभते इति सिद्धम् ॥ १९ ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्माऽमृतवर्षिण्यां चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

## चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

पूर्वपादान्त्याधिकरणे उत्क्रान्त्यनपेक्षा निर्गुणप्राप्तिरुक्ता । इदानीं सगुणविद्याफलभूतस्य ब्रह्मलोकस्योत्क्रान्तिं विना प्राप्त्ययोगात् तत्फलं निरूपयिष्यन्नेव तद्धेतुभूतामुत्क्रान्तिं निर्गुण-ब्रह्मविद्व्यतिरिक्तसर्वजनसमानां निरूपयितुं पादमारभ्यते—

( १ वागादीनां मनसि वृत्तिलयाधिकरणम् । सू० २ )

### वाङ् मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अस्त्युत्क्रान्तिक्रमबोधिका श्रुतिः । अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः पर-स्यां देवतायामिति । प्रयतः म्रियमाणस्येत्यर्थः । तत्र वाङ् मनसि सम्पद्यत इत्यत्र संशयः। किं वृत्तिमत्या वाच एव मनसि लयात्मकसम्पत्तिरुच्यते, उत वाग्वृत्तेरेवेति । पूर्वपक्षे स्वोपादाने स्वस्य लय इति न्यायाऽसिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । तत्र श्रुतिबलाद्वाच एव मनसि लय इति प्राप्ते, ब्रूमः । उक्तिर्वागिति भावव्युत्पत्त्या वाक्शब्देन वाग्वृत्तिरुच्यते । मनो-वृत्तौ सत्यामेव मनसि वाग्वृत्तिः सम्प्रलीयते । कुतः। दर्शनात्॥ मनोवृत्तौ सत्यामेव लोके वाग्वृत्तिलयस्य दर्शनात्। तर्हि, वाङ् मनसि इति श्रुतेः का गतिरित्यत आह ॥ शब्दाच्चेति ॥ स्वो-पादान इत्यबाधितन्यायाऽनुसारेण वाक्शब्दो वृत्तिवृत्तिमतोरभे-दोपचारेण भावव्युत्पत्त्या वा नेय इत्यर्थः । नन्वनुपादाने वृत्ति-लयो वा कथमितिचेन्न । अग्निवृत्तिलयस्यानुपादानाप्सु दर्शना-दिति ॥ १ ॥

उक्तश्रुतौ वाच एव श्रवणादिन्द्रियान्तराणां चक्षुरादीनां मनसि वृत्तिलयो नास्तीति भ्रमं वारयति—

अत एव च सर्वाण्यनु ॥ २ ॥

यत एव मनसो वागुपादानत्वाभावान्मनसि वाचो वृत्तिलयमात्रम्, अत एव सर्वाणि चक्षुरादीन्यपि स्वानुपादाने मनसि सवृत्तिके स्ववृत्तिलयमात्रेणानुवर्तन्ते प्रलीयन्ते, न तु स्वरूपेणेत्यर्थः । तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैरिति श्रुतिः सर्वेषामिन्द्रियाणां मनसि वृत्तिलयबोधिका द्रष्टव्या । तस्मादुत्क्रमणादूर्ध्वमुपशान्तदेहौष्ण्यः पुनर्जन्म मनसि स्थितैरिन्द्रियैः प्राप्नोतीत्यर्थः ॥ २ ॥

एवं वाङ् मनसीति वाक्यं विचार्य मनः प्राण इत्युत्तरवाक्ये किं सर्वेन्द्रियवृत्तिलयाधारस्य मनसः प्राणे स्वरूपलयो वृत्तिलयो वेति संशये, अन्नमयं हि सोम्य मनः, आपोमयः प्राण इति श्रुतौ प्राणमनसोरबन्नविकारत्वश्रवणादबन्नयोश्चोपादानोपादेयभावात् स्वरूपलय इति प्राप्ते सिद्धान्तयति—

( २ मनसः प्राणे लयाधिकरणम् । सू० १ )

तन्मनः प्राण उत्तरात् ॥ ३ ॥

स्वोपादान इत्यादिन्यायाभावाद् भवत्विन्द्रियाणां मनसि प्रलयः, इह तु न्यायसत्त्वात् स्वरूपलय इति प्रत्युदाहरणसङ्गतिः । अतिदेशत्वात् सङ्गत्यनपेक्षा वा । तत् सर्वेन्द्रियवृत्तिलयाऽधिकरणं मनोऽपि प्राणे स्ववृत्तिलयेनैव लीयते, न स्वरूपेणेति, मनः प्राण इत्युत्तराद्वाक्यादवगन्तव्यम् । सुषुप्तिमूर्च्छावस्थयोः सवृत्तिके प्राणे सत्येव मनोवृत्तिलयदर्शनादिति हेत्वनुषङ्गः । न ह्यबन्नयोरुपादानोपादेयत्वमात्रेण तद्विकारयोरप्युपादानोपादेयभावो युक्तः । हिमघटयोस्तददर्शनादिति भावः ॥ ३ ॥

एवं मनः प्राण इति वाक्यं विचार्य, प्राणस्तेजसीत्युत्तर-

वाक्ये किं प्राणस्य वृत्तिलयस्तेजसि, उत जीव इति सन्देहे, श्रुतिबलात्तेजस्येवेति प्राप्ते, सिद्धान्तयति—

( ३ प्राणानां जीवे लयाधिकरणम् । सू० ३ )

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

वाक्यक्रमादर्थक्रमाच्चाऽधिकरणक्रमो बोध्यः । स प्राणोऽध्यक्षे कार्यकारणसङ्घातस्वामिनि तत्साक्षिणि वा जीवे निवृत्तवृत्तिः सन्नवतिष्ठते । कुतः । तं जीवं प्रति उपगमानुगमनावस्थानेभ्यः । यथा राजानं यात्रेच्छावन्तं सन्तं भृत्या आभिमुख्येनाऽऽगच्छन्ति, एवमेवेममात्मानमन्तकाले सर्वे प्राणाः अभिसमायन्तीति श्रुतिरिन्द्रियाणां मुख्यप्राणसहितानां जीवं प्रत्याभिमुख्येनाऽऽगमनं दर्शयति । तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति श्रुतिर्गच्छन्तं जीवं प्रत्यनुगमनं प्राणस्य दर्शयति । स विज्ञानो भवतीति श्रुतिः करणव्युत्पत्त्या विज्ञानशब्दवाच्येन्द्रियजातस्य प्राणसहितस्य प्राप्तव्यकर्मफलज्ञानवति जीवेऽवस्थानं दर्शयति । तस्माज्जीवे एव प्राणस्य वृत्तिलयः ॥ ४ ॥

ननु कथ तर्हि प्राणस्तेजसीति श्रुतिरित्यत आह—

भूतेषु तच्छ्रुतेः ॥ ५ ॥

तच्छ्रुतेः प्राणस्तेजसीति श्रुतेः सूक्ष्मात्मना विद्यमानेषु तेजःसहितेषु उत्तरदेहारम्भकेषु पञ्चभूतेषूपाधिषूपाहितत्वेन विद्यमाने जीवे प्राणस्य वृत्तिलय इत्यवगन्तव्यम् । उपगमादिश्रुत्यन्तराऽनुसारात् । तथाचोपाहितजीवप्राप्तौ प्राणस्योपाधितेजआदिभूतप्राप्तेरर्थसिद्धत्वात् प्राणस्तेजसीति श्रुत्युपपत्तिरित्यर्थः ॥ ५ ॥

ननु प्राणस्तेजसीत्येकस्यैव तेजसः श्रवणात् कथं तेजःसहितेषु भूतेष्वित्युक्तमित्यत आह—

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

एकस्मिन्नेव तेजसि जीव उत्क्रान्तिसमये नावतिष्ठते । उत्तरदेहस्य पाञ्चभौतिकत्वेन पञ्चभूतेषु स्थितेरावश्यकत्वात् । दर्शयतो हीममर्थं रंहत्याधिकरणे व्याख्याते प्रश्ननिरूपणे । यद्वा श्रुतिस्मृती इममर्थं दर्शयतः । पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमय इत्याद्या श्रुतिः ।

अण्व्यो मात्राऽविनाशिन्यो दशार्द्धानां तु याः स्मृताः ।
ताभिः सार्द्धमिदं सर्वं संभवत्यनुपूर्वश, इति स्मृतिः ॥

अण्व्यः सूक्ष्माः, मीयन्त इति मात्राः प्राङ्मोक्षादविनाशिन्यो दशार्द्धानां पञ्चानां भूतानामित्यर्थः ॥

ननु जीवस्योत्क्रान्तिकाले भूताश्रयत्वम् । तौ ह यदूचतुः कर्म हैव तदूचतुरिति कर्माश्रयत्वबोधकश्रुतिविरुद्धमितिचेन्न । कर्मणो बन्धनिमित्तत्वेनाऽऽश्रयत्वं भूतानां देहोपादानत्वेनाश्रयत्वमित्यविरोधात् । तौ याज्ञवल्क्याऽऽर्तभागौ यज्जीवाधारभूतम् ऊचतुः तत्कर्मैवेति श्रुतेर्वचनम् ॥ ६ ॥

( ४ उपासकाऽनुपासकयोरुत्क्रान्तिसामान्याधिकरणम् । सू० १ )

## समाना चाऽसृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

पूर्वोक्तामुत्क्रान्तिमुपजीव्य संदिह्यते— किमुत्क्रान्तिरविदुष एवोत विदुषो दहरादिसगुणब्रह्मोपासकस्यापीति । तत्र, तयोर्ध्वमायन्नमृतत्वमेतीति दहरोपासकस्य मोक्षश्रवणादविदुष एवोत्क्रान्तिरिति प्राप्ते, ब्रूमः । सृतिः सरणानुकूलो देवयानमार्गः । तदुपक्रमात् पूर्वभाविनी योत्क्रान्तिः सा सगुणब्रह्मविदाविदुषोः समानैव । अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यत इत्यादिसामान्यश्रवणात् । ननु कथं तर्हि सगुणविद्यायाममृतत्वश्रवणमितितत्राह ॥ अमृतत्वं चेति ॥ उप दाह इतिधातोरिदं रूपम् ।

अनुपोष्येति । रागादिक्लेशानदग्ध्वैवेदमापेक्षिकममृतत्वं ब्रह्मलोक-प्राप्तिलक्षणं, न मुख्यो मोक्षः। अतएव तयोर्ध्वमायन्निति मूर्धन्य-नाडीद्वारोत्क्रान्तिपूर्वकत्वममृतत्वस्य दर्शितम् । तस्माद्विद्वदविदुषोः समानैवोत्क्रान्तिरिति सिद्धम् ॥ ७ ॥

ननूत्क्रान्तिः समानेत्ययुक्तम् । मृतस्य स्वरूपत एवाऽत्य-न्तं ब्रह्मसंपत्तेरित्याक्षेपे इदमारभ्यते—

(५ उपासकस्य ब्रह्मणि स्वरूपेण लयनिराकरणाधिकरणम् । सू० ४)

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

तेजः परस्यां देवतायामित्यत्र तेजः सजीवं सेन्द्रियजातं सप्राणं मनःसहितं भूतान्तरसहितं परमात्मनि संपद्यत इति सूक्ष्मशरीरस्य लयः श्रूयते। स लयः किमात्यन्तिक एवोताऽना-त्यन्तिक इति संशयः । पूर्वपक्षे मृतमात्रस्य मुक्तिः, सिद्धान्ते तदभाव इति बोध्यम् । तत्र ब्रह्मण उपादानत्वादात्यन्तिक एव लय इति प्राप्ते, ब्रूमः । तद् उक्तविशेषणं सूक्ष्मं तेजः, आपीते-रामोक्षाद् अवतिष्ठते ॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।

स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्, इति संसार-व्यपदेशात् । विधितत्त्वज्ञानशास्त्रयोर्मृतमात्रस्य मुक्तावाऽऽनर्थक्यं प्रसज्ज्येत । तस्मात् सुषुप्ताविवानात्यन्तिको लयः ॥ ८ ॥

ननूक्तलक्षणतेजो यद्यस्ति तर्हि देहान्निर्गच्छत् पार्श्वस्थैरुप-लभ्येत, प्रतिहन्येत चेष्टादिवन्मूर्तान्तरेणेत्यत आह—

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

चकारः स्वरूपसौक्ष्म्यसमुच्चयार्थः। उक्तं तेजः परिमाणतः स्वरूपतश्च सूक्ष्मम्। त्रसरेणुवच्चक्षुर्वच्च तस्य नाडीद्वारा निष्क्रमण-

श्रुत्या तथा सूक्ष्मत्वेनोपलब्धेः । अत्र सूक्ष्मत्वेनैव, स्वच्छत्वमुपलक्ष्यते । तथाचानुद्भूतरूपवत्त्वेन सूक्ष्मत्वाच्चक्षुर्वन्नोपलभ्यते स्वच्छत्वान्मूर्तान्तरेण नप्रतिहन्यते, स्वल्पत्वान्नाड्यादौ संचारोपपत्तिरिति ॥ ९ ॥

नोपमर्देनातः ॥ १० ॥

अतएव स्वच्छत्वलक्षणात् सौक्ष्म्यादसक्तत्वरूपादस्य सूक्ष्मशरीरस्य स्थूलदेहस्य दाहच्छेदादिनिमित्तेनोपमर्देन नोपमर्द इत्यर्थः ॥ १० ॥

सूक्ष्मदेहसद्भावे चोष्मलिङ्गकमनुमानमाह—

अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

स्थूलदेहे एप उपलभ्यमान ऊष्मा अस्यैव सूक्ष्मदेहस्य धर्मः । सत्येव सूक्ष्मदेहे तदुपलब्धेस्तदभावे मृतदेहे तदनुपलब्धेरित्यन्वयव्यतिरेकाभ्यां तद्धर्मत्वस्यैवोपपत्तेरित्यर्थः ॥ ११ ॥

आसृत्युपक्रमाधिकरणे मुख्याऽमृतत्व उत्क्रान्त्यभावो दर्शितः । स न युक्त इत्याक्षिपति—

( ६ आत्मैक्यज्ञानिनः प्राणानां देहादनुत्क्रान्त्याधिकरणम् । सू० ३ )

प्रतिषेधादितिचेन्न शारीरात् ॥ १२ ॥

व्यवहिताधिकरणेनाऽस्य सङ्गतिः । किं निर्गुणब्रह्मविद उत्क्रान्तिरस्ति न वेति सन्देहे, अस्तीति प्राप्तम् । ननु अथाऽकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्तीति परब्रह्मविदः शरीरात् प्राणोत्क्रान्तिप्रतिषेधान्नास्त्युत्क्रान्तिरितिचेन्न । शारीराज्जीवादयं प्राणोत्क्रान्तिप्रतिषेधो न शरीरात् । न तस्मात् प्राणा उत्क्रामन्तीति माध्यन्दिनिशाखायां जीवादेव प्राणोत्क्रान्तिप्रतिषेधस्य श्रुतत्वात् । तस्मात् प्राणादिसहितस्य परब्रह्मविदोऽप्युत्क्रान्तिरस्तीति पूर्व-

पक्षः । श्रुत्यर्थस्तु, मुक्तिप्रक्रमार्थोऽथशब्दः । बाह्यविषयकामना-शून्यत्वमकामत्वम् । मानसिकविषयकामनाशून्यत्वं निष्कामत्वम् । प्राप्तस्वरूपानन्दतृप्तत्वमाप्तकामत्वम् । तत्र हेतुरात्मकाम इति ॥ १२ ॥

सिद्धान्तयति—

स्पष्टो ह्येकेषाम् ॥ १३ ॥

एकेषां काण्वानां शाखायां प्राणानां परब्रह्मविदेहाद् उत्क्रान्तिप्रतिषेधो हि यत उपलभ्यते, अतो न तस्योत्क्रान्तिरस्तीत्यर्थः । तथाहि । यत्रायं पुरुषो म्रियत उदस्मात् प्राणा उत्क्रामन्त्याहो नेत्यार्तभागप्रश्ने द्वितीयमनुत्क्रान्तिपक्षमाश्रित्य याज्ञवल्क्यो नोत्क्रामन्तीत्युक्त्वा तर्हि प्राणोत्क्रान्त्यभावे मृतो न भवेदित्याशङ्क्य, अत्रैव समवनीयन्त इति प्राणविलयं प्रतिज्ञाय तत्सिद्ध्ये स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेत इत्युत्क्रान्त्यवधेर्देहस्योच्छ्वयनादिकमाह।एतत्सामान्यान्माध्यन्दिनिशाखायामपि तस्मादित्यनेन देहस्यैव ग्रहणं बोध्यम् । उत्पन्नाऽऽत्मसाक्षात्कारस्य यत्र यदा अयं स्थूलः मर्त्यः पुरुषो देहो म्रियते सर्वचेष्टाशून्योऽतिशीतलो भूमौ शेते तदास्माद्देहात् प्राणा उत्क्रामन्त्याहो पक्षान्तरे । न अत्रैव नाशं यान्तीति प्रश्नार्थः । अत्र प्राणशब्देन सूक्ष्मदेह उक्तः सन्देहः । उच्छ्वयति उच्छूनो भवति । नन्वयं रोगः कश्चन ? इत्यत आह । आध्मायतीति । बाह्येन वायुना पूरितो विविधान् शब्दानाद्भेरीवत् करोति। यत आध्मातः शब्दवान् मृतो विलीनसूक्ष्मशरीरः सन् भूमौ शेत इत्यर्थः । तस्माज्जीवात् प्राणोत्क्रान्तेरप्राप्तत्वेन निषेधायोगाद् विद्वद्देहादेव प्राणोत्क्रान्तिप्रतिषेध इति न विदुषो मार्गोत्क्रान्ती स्तः ॥ १३ ॥

स्मर्यते च ॥ १४ ॥

महाभारते मार्गोत्क्रान्त्योरभावः—

सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः ।
देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिण, इति ॥

पदशब्दः प्राप्यवाची । स्वातिरिक्तपदशून्यब्रह्मविदः पदैषिणो देवा अपि मार्गे मुह्यन्ति मार्गं न जानान्ति तदभावादित्यऽर्थः । तस्माद्विदुषः स्वरूपे ब्रह्मण्येव प्राणानां लयो, नोत्क्रान्तिरिति सिद्धम् ॥ १४ ॥

ननु ब्रह्मणि प्राणलय इत्युक्तं, तदयुक्तम् । पृथिव्यादिषु लयश्रुतेरित्याक्षेप इदमाह—

( ७ तत्त्ववित्प्राणानां परमात्मन्येव लयाधिकरणम् । सू० १ )

तानि परे तथा ह्याह ॥ १५ ॥

किं विदुषः प्राणशब्दाऽभिधेयसूक्ष्मदेहलयः पृथिव्यादिषु उत परब्रह्मणीति संदेहे, गताः कलाः पञ्चदश प्रतिष्ठा इति विद्वद्विषयश्रुत्यैव पृथिव्यादिषु लयावगमात्तेष्वेव लय इति पूर्वपक्षः। यद्यपि मनःसहितानि दशेन्द्रियाणि पञ्चभूतसूक्ष्मसहितानि पञ्चप्राणसहितानि वा षोडशकलाः सन्ति । तथापि घ्राणमनसोरेकपृथिवीविकारत्वेनैक्यविवक्षया श्रुतौ पञ्चदशेत्युक्तम् ।प्रतिष्ठाशब्देन तत्तत्कलोपादानानि पृथिव्यादीन्युच्यन्ते । तानि कलागतास्तत्र लीना इति यावत् । तत्र सिद्धान्तः । तान्युक्तविशेषणानीन्द्रियाणि षोडशकलात्मकसूक्ष्मदेहरूपाणि परे ब्रह्मणि लीयन्ते । तथाहि आह श्रुतिः । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति । यथा नद्यः समुद्रं प्राप्यास्तं गच्छन्ति एवमेवास्य जीवस्य परि सर्वतोऽनवच्छिन्नं प्रत्यग्रूपं ब्रह्म द्रष्टुरिमाः स्वानुभवगम्याः कलाः पुरुषाश्रयास्तं प्राप्य लयं यान्तीत्यर्थः।स्वोपादाने स्वस्य लय इति व्याप्तिमूलकव्यावहारिक-

प्रमाणानुमानापेक्षया पूर्वश्रुतौ पृथिव्यादिषु लिङ्गशरीरलय उक्तः। तत्त्वावेदकश्रुत्यपेक्षया ब्रह्मविवर्त्तस्य सर्वस्य ब्रह्मणि लयो द्वितीय-श्रुतावुक्त इत्यविरोधः ॥ स्वोपादानेषु प्रलीनाः कलाः स्वोपादानैः सह ब्रह्मणि विनश्यन्तीति श्रुतिद्वयतात्पर्यम् ॥ १५ ॥

( ८ तत्त्वविद्वागादिलयस्य निःशेषत्वाधिकरणम् । सू० १ )

अविभागो वचनात् ॥ १६ ॥

सोऽयं विद्वत्कलाविलयः किमविदुष इवाऽनात्यन्तिकः उतात्यन्तिक इति संदेहः । एकविषयत्वं सङ्गतिः । पूर्वपक्षे मोक्षाऽसिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । यत्र फलं नोच्यते तत्र पूर्वोत्तरपक्षसिद्धिः फलमिति मन्तव्यम् । तत्र नात्यन्तिको लय इति प्राप्ते, ब्रूमः । विदुषः कलानां ब्रह्मणा सहात्यन्तमविभाग एव, न साऽवशेषो लयः कलानाम् । कुतः ? । कलानां लयोक्त्यनन्तरं, भिद्येते चाऽऽसां नामरूपे इति कलानां शक्त्यात्मकनामरूपयोः पुरुषे लयमुक्त्वा, स एषोऽकलोऽमृतो भवतीति वचनादित्यर्थः ॥ १६ ॥

परविद्याचिन्तां प्रासङ्गिकीं समाप्य प्रकृतामपराविद्याचिन्तामनुसरति—

( ९ उपासकस्योत्क्रान्तेर्विशेषाधिकरणम् । सू० १ )

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

आसृत्युपक्रमाऽधिकरणे सगुणब्रह्मविदाम् अविदुषां च समानोत्क्रान्तिरित्युक्तम् । तत्र विद्वदुत्क्रान्तौ विशेषोऽत्रोच्यते । तस्य लीनवृत्तिकवागादिसमूहस्योत्क्रमिष्यतो जीवस्यौक आय-

तनं हृदयं तस्य यदग्रं नाडीद्वारमुखं तस्य ज्वलनं प्राप्तव्यकर्म-फलज्ञानरूपं प्रद्योताख्यमादौ भवति । तेन प्रद्योत्येन प्रकाशित-द्वारो विद्वानविद्वाँश्च भवति । तथाहि श्रुतिः। तस्य हैतस्य हृदय-स्याऽग्रं प्रद्योतते । तेन प्रद्योतेन एष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य इति । तत्र संश-यः । किमविदुष इव विदुषोऽप्यनियतेन केनचिद् द्वारेणोत्क्रा-न्तिरुत मूर्धन्यनाडीद्वारेण नियतेनैवेति । तत्र विद्वत्कलानां वचनादविभागवचक्षुषो वेत्यनियमवचनादनियतेनेति प्राप्ते, ब्रूमः । दहरादिसगुणब्रह्मोपासकस्य मूर्धस्थानादेव निष्क्रमणं विद्यासामर्थ्यात् । अन्यथा द्वारनियमाभावे विद्यात उत्कृष्टफल-प्राप्तिर्न स्यादित्यर्थः। ननु द्वारानियमेऽप्युत्कृष्टफलप्राप्तिर्भविष्य-तीत्यत आह ॥ तच्छेषगत्यनुस्मृतियोगाच्चेति ॥ तस्याः सगुण-विद्यायाः शेषभूता या गतिर्मूर्धन्यनाडीप्रभृतिमार्गस्तस्यानु-स्मृतिर्ध्यानं, तद्विधानाच्च । तेनैव ध्यातेन मार्गेण निष्क्रमणं युक्तम् । अन्यथा द्वारानियमेऽपि फलप्राप्तौ मार्गध्यानविधि-वैयर्थ्यं स्यात् । तस्माद् हृन्निष्ठेन ब्रह्मणा मूपासितेनानुगृहीत-स्तद्भावमापन्नो विद्वान्मूर्धन्ययैव शतनाडीभ्योऽधिकया निष्क्रा-मति। अविद्वाँस्त्वितराभिर्नाडीभिः । तथाच श्रुतिर्हार्दब्रह्मविद्यायां, शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयो-र्ध्वमायन्नमृतत्वमेति विष्वङन्या उत्क्रमणे भवन्तीति । विष्वङ्ङ् नानागतयः । तस्माद् हृदयादुद्गतया भास्वरया मूर्धानं गतया सूर्यरश्मिभिरेकीकृतया ब्रह्मनाड्या विद्वान्निष्क्रामतीति सिद्धम्॥१७

( १० रात्रिमृतस्यापि रश्म्यनुसारित्वाधिकरणम् । सू० २ )

रश्म्यनुसारी ॥ १८ ॥

हार्ददहरब्रह्मविद्यायामेव ब्रह्मनाडीरश्मिसम्बन्धमुक्त्वा,

अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमत इति पूर्वोक्तरीत्या ब्रह्मनाड्या निष्क्रामतो रश्म्यनुसारित्वमुक्तम् । तदाश्रित्य सन्दिह्यते । किं रश्म्यनुसारित्वमहनि मृतस्यैव भवत्युत रात्रावपीति । पूर्वपक्षे रात्रौ मृतस्य सूर्योदयाऽपेक्षा, सिद्धान्ते तदनपेक्षयैव ब्रह्मलोकप्राप्तिरिति फलम् ॥ १८ ॥

तत्राहनि रात्रौ वा मृतो रश्म्यनुसारीति सिद्धान्ते प्रतिज्ञा तामाक्षिप्य समाधत्ते—

निशि नेतिचेन्न संबन्धस्य यावद् देहभावित्वा-
दर्शयति च ॥ १९ ॥

अहनि सूर्यरश्मिनाडीसम्बन्धस्य सत्त्वात्तत्रैव मृतो रश्म्यऽनुसारी, निशि तु न भवति । तदसत्त्वादितिचेन्न । नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वात् । यावद्देहभावित्वं च श्रुतिर्दर्शयति । अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्तेऽमुष्मिन्नादित्ये सृप्ता इति । प्रतायन्ते विस्तृता भवन्ति रश्मयः । सृप्ताः सम्बद्धाः । ननु तत्र सम्बन्धः श्रुतो, न तस्य यावद्देहभावित्वमित्याशङ्क्य प्रमाणान्तरसूचकः सौत्रश्चकारः प्रयुक्तः । रात्रावप्यौष्ण्यस्य देहे दर्शनाद्रश्मिसम्बन्धोऽनुमेय इति । तस्मादहनि रात्रौ वा मृतो विद्वानविलम्बेनैव रश्म्यनुसारीति सिद्धम् ॥ १९ ॥

( ११ उपासकस्य दक्षिणायनेऽपि विद्याफलाधिकरणम् । सू० २ )

अतश्चायनेऽपि दक्षिणे ॥ २० ॥

किं दक्षिणायने मृतो विद्वान् विद्याफलं प्राप्नोति न वेति सन्देहे उत्तरायणप्राशस्त्यप्रसिद्धेर्भीष्मस्य तत्प्रतीक्षादर्शनाच्च न प्राप्नोतीति प्राप्ते, अतिदिशति पूर्वन्यायम् ॥ अतश्चेति ॥ अत

एव च कालान्तरप्रतीक्षाऽनुपपत्तेर्विद्याया नित्यवत् फलसम्बन्धश्रवणाद्दक्षिणेऽप्ययने मृतो विद्वान् फलमाप्नोत्येवेत्यर्थः । अविदुषामुत्तरायणं प्रशस्तमिति । अभिवदनरूपसदाचारे प्रवृत्त्यर्थं, पितृप्रसादलब्धस्वेच्छामरणज्ञापनार्थं वा भीष्मस्य विदुष उत्तरायणप्रतीक्षेति भावः ॥ २० ॥

ननु भगवद्गीतासु— यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभेति कालमेव प्रतिज्ञायाऽहरादिकालविशेषस्यानावृत्तये नियतत्वोपदेशात् कथं रात्रौ दक्षिणायने वा मृतो विद्वाननावृत्तिमाप्नुयादित्यत आह—

योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥

योगिनः स्मार्तविद्योपासकान् प्रत्ययम् अहरादिकालविशेषः स्मर्यते । स्मार्तत्वप्रत्यासत्तेः । न श्रौतदहराद्युपासकान् प्रति । नन्वत्र योगो दहराद्युपासनमेवाऽस्तु, तत्राह ॥ स्मार्ते चैते इति । ब्रह्मार्पणबुद्ध्या कृतनित्याग्निहोत्रादिकर्मयोगः । अनाश्रितः कर्मफलमित्यादिस्मृतेः । धारणापूर्वकाऽकर्तृत्वाऽनुभवः सांख्यम् । इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्निति स्मृतेः । तथाच एते योगसांख्ये स्मार्ते एव, न श्रौतविद्यारूपे । तथाच श्रुतिस्मृत्योरर्थभेदान्न श्रौतोपास्तिषु कालनियमः। यदि च श्रुत्युक्तदेवयानपितृयाणयोरेवाऽत्र स्मृतावपि प्रत्यभिज्ञानात् स्मृतौ कालशब्देन तदभिमानिदेवताग्रहणं श्रुतिसमानार्थत्वाय क्रियते । तदा अहरादिकालाऽभिमानिदेवतानां सर्वदा सत्त्वान्न विदुषो मृतौ कालनियमापेक्षेत्यनवद्यम् । तस्माद् यदा कदाचिन्मृतो विद्वान् विद्याफलं प्राप्नोतीति सिद्धम् ॥ २१ ॥

इति श्रीब्रह्मसूत्रवृत्तौ चतुर्थाध्याये द्वितीयः पादः ॥ ४ ॥ २ ॥

## चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥

एवं सगुणविद्याफलप्राप्तये देवयानमार्गं वक्तुं तदङ्गोत्क्रान्तिचिन्ता कृता । सम्प्रत्यङ्गिनं देवयानमार्गं वक्तुमयं पाद आरभ्यते—

( १ अर्चिरादिकस्यैव ब्रह्मलोकमार्गताधिकरणम् । सू० १ )

### अर्चिरादिना तत्प्रथितेः ॥ १ ॥

अस्मिन् ब्रह्मलोकप्राप्तिहेतौ मार्गे श्रुतीनां विप्रतिपत्तिः । नाडीसम्बद्धरश्मिरूपो मार्गः क्वचिच्छ्रूयते । क्वचित्तु तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरित्यादावग्न्यादिरूपः । अन्यत्र तु सूर्यद्वारेण ते विरजाः प्रयान्तीति श्रुतम् । विरजाः विरजसः, मार्गतत्प्राप्यफलाविरोधिविधुरा इत्यर्थः । तत्र श्रुतिविप्रतिपत्त्या संशयः । किम्परस्परं भिन्ना एवैते मार्गाः, उताऽनेकविशेषणयुक्त एक एवेति । पूर्वपक्षे येनकेनचिन्मार्गेण गमनमिति विकल्पः । सिद्धान्ते मार्गैक्याद्विकल्पाऽभाव इति बोध्यम् । तत्र प्रकरणभेदान्मार्गभेदः । तथाच विदुषां मृतिकालाऽनियमवन्मार्गानियम इति प्राप्ते, ब्रूमः । सर्वो हि ब्रह्मलोकप्रेप्सुरर्चिरादिनैवैकेन मार्गेण गन्तुमर्हति । कुतः ॥ तत्प्रथितेः ॥ तस्यार्चिरादिमार्गस्य पञ्चाग्निविद्याप्रकरणे, ये चाऽमी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्तीति पञ्चाग्न्युपासकस्येवेतरस्यापि सगुणोपासकस्य श्रुतत्वादित्यर्थः । न च प्रकरणभेदान्मार्गभेदः । सर्वत्राऽर्चिराद्येकदेशप्रत्यभिज्ञानाद्गन्तव्यब्रह्मलोकाऽभेदाच्च सर्वविशेषणोपसंहारेणाऽनेकविशेषणयुक्तमार्गैक्यावगमात्, तस्माद् ब्रह्मलोकप्राप्तिहेतुर्मार्गः सर्वेषामेक एवेति सिद्धम् ॥ १ ॥

( २ वायोः सन्निवेशाधिकरणम् । सू० १ )

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

सर्वेषां मार्गविशेषणानां ग्रथनप्रकारः कथ्यते । स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमिति कौषीतकिनो देवयानं मार्गमामनन्ति । स विद्वांस्तत्तल्लोकं प्राप्तस्तत्तल्लोकस्वामिनाग्न्यादिना नीयते इत्यर्थः । छन्दोगास्त्वेवमधीयते । तेऽर्चिषमभिसंभवन्त्यार्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमिति । उदङ् आदित्यो यान् षड् मासानेति, तानिति योजना। अत्र श्रुतिद्वयेऽप्यग्निरादौ पठितः । अनन्तरं च कौषीतकिश्रुतौ वायुः श्रुतः। सोऽर्चिरादिमार्गे कस्मादनन्तरं ग्रथितव्य इति संदेहे,सर्वत्राऽर्चिराद्येकदेशप्रत्यभिज्ञानान्मार्गैक्यवदग्न्यनन्तरं वायुप्रत्यभिज्ञानात् तत्रैव तस्य प्रवेश इति प्राप्ते, ब्रूमः ॥अब्दात् संवत्सरादनन्तरम् आदित्यात् पूर्वं वायुमभिसंविशन्ति गन्तारः॥ अविशेषविशेषाभ्याम् ॥ कौषीतकिश्रुतौ वायोः कुतश्चिदानन्तर्यं पूर्वत्वं वा विशेषो न ज्ञायते । तद्वाचकपदाभावात् । बृहदारण्यके त्वाऽऽदित्यात् पूर्वत्वं विशेषो दृश्यते । यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते, यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छतीति । पुरुषो ध्याता, लोको देहः, प्रैति तदेति शेषः । तस्मै प्राप्ताय ध्यात्रे स वायुस्तत्र स्वात्मनि विजिहीते छिद्रं करोति । यथा रथचक्रस्य खं छिद्रम् । तेन वायुदत्तेन छिद्रेण द्वारेणोर्ध्व आक्रमते स ध्याता । क ऊर्ध्वस्तमाह ॥ आदित्यमिति ॥ तथाच, तेनेति श्रुत्या आदित्यगमनहेतुद्वारहेतोर्वायोः पूर्वत्वस्यादित्यादवगमा-

दग्न्यनन्तरपाठस्य बाधः । अत्रैवं क्रमो निष्पन्नः । नाडीरश्मिप्रवेशाऽनन्तरम्अर्चिरादिसंवत्सरान्तं गच्छति विद्वान् । छान्दोग्यश्रुत्यनुसारात् । बृहदाण्यके मासाऽनन्तरं संवत्सरस्यैवाऽनुप्रवेशः। तस्य मासावयवित्वेन योग्यत्वात् । संवत्सरानन्तरं देवलोकस्य देवलोकाद्वायोर्वायोरादित्यस्याऽऽदित्याच्चन्द्रमसश्चन्द्रात्तडिल्लोकस्य प्रवेशः । तथाच सूत्रे वायुपदं देवलोकोपलक्षकम् । अब्दादनन्तरं देवलोकसहितं वायुमागच्छति विद्वानिति सूत्राऽर्थः ॥२॥

एवमग्न्यनन्तरं श्रुतवायोः स्थानमुक्त्वा, तत्रैव कौषीतकिश्रुतौ, वाय्वनन्तरश्रुतवरुणादीनामर्चिरादिमार्गे स्थानमाह—

( ३ वरुणादिलोकानां व्यवस्थाधिकरणम् । सू० १ )

तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

किं कौषीतकिवाक्ये श्रुतो वरुणोऽर्चिरादिमार्गे सम्बध्यते न वेति सन्देहे, स्थानबोधकमानाऽभावान्न सम्बध्यत इति प्राप्ते, ब्रूमः । तडितोऽधि विद्युल्लोकादुपरिष्टाद्वरुणः सम्बध्यते । कुतः । सम्बन्धात् । तडित उपरि हि सजला मेघा दृश्यन्ते । जलाऽधिपतिश्च वरुण इति तडिद्वरुणयोः सम्बन्धादित्यर्थः । वरुणाऽनन्तरमिन्द्रादेः प्रवेशः । कौषीतकिनां पाठक्रमे बाधकाऽभावादिति ॥ ३ ॥

एवमर्चिरादीनां क्रमं निरूप्य तेषामेव स्वरूपं निरूपयति -

( ४ आतिवाहिकत्वमर्चिरादीनामित्यधिकरणम् । सू० ३ )

आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

किमेतेऽर्चिरादयो मार्गचिह्नभूताः, उत गन्तॄणां विदुषां भोगभूमयः, आहोस्विदातिवाहिका इति संशयः । तत्राऽर्चिरादीनां वृक्षनद्यादिवन्मार्गचिह्नत्वम्, अग्निलोकं वायुलोकमित्यादिलोकशब्दश्रवणाद्भोगभूमित्वं वेति प्राप्ते ब्रूमः । एतेऽर्चिरादय आति-

वाहिकाः कार्यब्रह्मगन्तॄणां विदुषां गमयितारः । कुतः॥ तल्लिङ्गात् ॥ अमानवः स एतान् ब्रह्म गमयतीत्यमानवपुरुषस्य विद्युल्लोकं प्राप्तान् उपासकान् प्रति गमयितृत्वश्रवणादित्यर्थः । नच यस्य गमयितृत्वं श्रुतं तस्यैव तदिति वाच्यम् । तस्य वाक्यस्याऽर्चिरादिमानवपुरुषसमभिव्याहारप्राप्तमानवत्वनिवृत्तिपरत्वेन सिद्धवद्गमयितृत्वानुवादकत्वात् । अतः सिद्धवद्गमयितृत्वदर्शनाल्लिङ्गात् पूर्वेषामप्यर्चिरादीनां पुरुषाणां नेतृत्वमिति॥न च लोकशब्दमात्रेण भोगभूमित्वमिति युक्तम् ।लीनेन्द्रियाणां ।विदुषां भोगाऽयोगात् । तस्मादग्निस्वामिकं लोकं प्राप्य तेनाग्निना वाहकेनाऽहर्देवं प्राप्नोति । तेन च देवतान्तरमिति योज्यम् ॥ ४ ॥

ननु लिङ्गमात्रं न पूर्वेषां नेतृत्वगमकं, न्यायाभावादित्यत आह—

उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

यद्यर्चिरादयोऽचेतनास्तदा विदुषामपि निर्देहानां लीनेन्द्रियाणां ज्ञानाऽभावेनोभयोर्विद्वदर्चिराद्योर्व्यामोहादज्ञत्वात् कार्यब्रह्मप्राप्तिर्न स्यात् । लोके हि मूर्च्छितो यत्नहीनो यत्नवद्भिश्चेतनान्तरैर्नीयते, नाचेतनैः । अतो यत्नहीनश्चेतनश्चेतनान्तरैर्नीयत इति न्यायसहिताल्लिङ्गात् पूर्वेषामर्चिरादीनां देवानां तत्सिद्धेर्नेतृत्वसिद्धेर्न न्यायहीनं लिङ्गम् । अर्चिरादीनां देवत्वे रात्रौ दक्षिणायने वा मृतस्य विदुषो ब्रह्मलोकगतिर्युक्ततरा भवति । देवानां सदा सत्त्वादिति ॥ ५ ॥

ननु नाऽर्चिरादीनां नेतृत्वं विद्युल्लोकादमानवपुरुषस्यैव नेतृत्वश्रवणाद्वरुणादीनां नेतृत्वायोगादित्यत आह—

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

अमानवः पुरुषो विद्युल्लोकमागतो वैद्युतस्तेनैव ततो विद्यु-

त्प्राप्तेरूर्ध्वं नीयमाना विद्वांसः कार्यब्रह्म प्राप्नुवन्ति । अमानव एत्य ब्रह्मलोकान् गमयति विद्युल्लोकस्थानित्यमानवस्यैव गमयितृत्वश्रवणात् । अमानवोपसर्जनत्वेन वरुणादीनां नेतृत्वं, न प्राधान्येन । अर्चिरादिविद्युतान्तानां तु प्राधान्येनैव नेतृत्वम् । तस्मादर्चिरादयो नेतार इति सिद्धम् ॥ ६ ॥

एवं गन्तव्यप्राप्तिहेतुं मार्गं निरूप्य फलभूतं गन्तव्यं निरूपयति—

( ५ कार्यब्रह्मण एवोत्तरमार्गगम्यत्वाधिकरणम् । सू० ८ )

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

स एतान् ब्रह्म गमयतीत्यत्र संशयः । किं परं निर्गुणं ब्रह्म गमयति अमानवः पुरुषः, उत कार्यं सगुणं ब्रह्मेति । पूर्वपक्षे अर्चिरादिगत्या ब्रह्मलोकप्राप्त्यनन्तरं विदुषो लिङ्गशरीरलयेन परब्रह्मप्राप्तिः फलम् । सिद्धान्ते कार्यब्रह्मप्राप्त्यर्थमेव गतिः, न परब्रह्मप्राप्त्यर्थमिति मन्तव्यम् । उत्तरत्र पूर्वपक्षयिष्यन्नादौ सिद्धान्तमाह । कार्यमिति ॥ कार्यमेव ब्रह्म गमयतीति बादरिराचार्यो मन्यते । कुतः ? ॥ अस्य कार्यब्रह्मणः परिच्छिन्नस्य गत्युपपत्तेः । गन्तव्यत्वोपपत्तेः। प्रत्यग्रूपस्याऽपरिच्छिन्नस्य परस्य तदनुपपत्तेरित्यर्थः ॥ ७ ॥

विशेषितत्वाच्च ॥ ८ ॥

ब्रह्मलोकान् गमयतीति श्रुत्यन्तरे बहुवचनेन गन्तव्यब्रह्मणो विशेषितत्वात् साऽवयवस्यावयवभेदेन भिन्नस्य ब्रह्मण एव गन्तव्यत्वं, न निर्विशेषब्रह्मणः । लोकशब्दाच्च भोगभूमेरेव प्राप्यत्वं न परस्येति चकारार्थः ॥ ८ ॥

ननु नपुंसकब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात् कथं कार्यब्रह्मणि, ब्रह्म गमयतीति व्यपदेशस्तत्राह—

सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

तुश्शोद्यनिरासार्थः। परमेव हि ब्रह्म सत्यकामत्वादिगुणयुक्तं कार्यब्रह्मेत्युच्यते । तथाच कार्यब्रह्मणः कारणपरब्रह्मसामीप्यात् कारणे मुख्यस्य ब्रह्मपदस्य कार्ये व्यपदेशः लक्षणया प्रयोग इत्यर्थः । मुख्याऽसम्भवादिति भावः ॥ ९ ॥

ननु कार्यब्रह्मप्राप्तौ तेषां न पुनरावृत्तिरिति श्रुतिविरोधस्तत्राह—

कार्याऽत्यये तदध्यक्षेण सहाऽतः परमभिधानात् ॥१०॥

कार्यब्रह्मलोकस्यात्यये नाशे सति तदध्यक्षेण तल्लोकस्वामिना हिरण्यगर्भेण सहातः कार्यब्रह्मणः परं ब्रह्म प्राप्नुवन्ति। उत्पन्नात्मसाक्षात्कारा विद्वांस इत्युक्तश्रुत्याभिधानादवगन्तव्यमित्यर्थः ॥ १० ॥

स्मृतेश्च ॥ ११ ॥

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।

परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति स्मृतिश्च ब्रह्मलोकप्राप्तानां क्रममुक्तिं दर्शयति । अतोऽपि नाऽनावृत्तिश्रुतिविरोधः । प्रतिसञ्चरो महाप्रलयः । तस्मिन् प्राप्ते परस्य हिरण्यगर्भस्यान्तोऽधिकारसमाप्तिः। तदा कृतात्मानः शुद्धधियो ब्रह्मलोकवासिनः परं पदं प्राप्नुवन्तीति योजना। तस्मात् कार्यब्रह्मप्राप्त्यर्थमेवाऽर्चिरादिगतिर्न प्रत्यग्रूपपरब्रह्मप्राप्त्यर्थं घटाकाशस्येव महाकाशप्राप्त्यर्थं गतेरफलत्वादिति सिद्धम् ॥११॥

एवं सिद्धान्तमुक्त्वा, पूर्वपक्षमाह—

परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

नपुंसकब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात् परमेव ब्रह्म

गमयत्यमानव इति जैमिनिराचार्यो मन्यते ॥ १२ ॥

दर्शनाच्च ॥ १३ ॥

तेषां न पुनरावृत्तिः, तयोर्ध्वमायन्नमृतत्वमेतीति च मुक्ते-र्गतिपूर्वकत्वदर्शनाच्च परमेव गन्तव्यमित्यर्थः ॥ १३ ॥

ननु प्रजापतेः सभां वेश्म प्रपद्य इति मरणकाले उपासक-स्य कार्यब्रह्मप्राप्तिसङ्कल्पश्रवणान्न परं गन्तव्यमित्याशङ्क्याह—

न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥

अयं प्रतिपत्त्यभिसन्धिः प्राप्तिसङ्कल्पः कार्ये ब्रह्मणि न, कार्यब्रह्मविषयो न भवतीति यावत् । किन्तु परब्रह्मप्राप्तिविषयक एव । ते यदन्तरा तद् ब्रह्मेति परस्यैव प्रकृतत्वात् । ननु प्रकरणबलाद्वेश्मब्रह्मप्राप्तिसङ्कल्पस्य परविषयकत्वेऽपि तस्याः प्राप्तेर्गतिपूर्वत्वं कथमितिचेत् । उच्यते । तदपराजिता पूर्ब्रह्मणः प्रभुविनिर्मितं हिरण्यमयं वेश्मेति दहरविद्यायां हिरण्यगर्भ-वेश्मप्राप्तेर्गतिपूर्वकत्वावगमात् । अस्या अपि परब्रह्मवेश्मप्राप्ते-र्गतिपूर्वकत्वमनुमीयते । वेश्मप्रतिपत्तित्वसामान्यात् । यद्वा प्रजा-पतेः सभां वेश्म इत्यत्रैव, पदेर्गत्यर्थत्वाद्गतेश्च मार्गसाध्यत्वा-न्मार्गसाध्यगतिपूर्वकत्वं परवेश्मप्राप्तेरिति पूर्वपक्षः । श्रुत्यर्थस्तु, तत् तत्र ब्रह्मलोके न केनापि अविदुषा पराजितेत्यपराजिता पूरस्ति ब्रह्मणो हिरण्यगर्भस्य, तेनैव प्रभुणा निर्मितं हिरण्मयं वेश्म चाऽस्ति । तत् प्रतिपद्यते ब्रह्मचर्यसम्पत्तिर्विद्वानिति । अत्र पूर्वपक्षे मुख्यत्वादर्शनाच्चेति हेतुद्वयं पूर्वमेव दूषितम् । यत्तु प्रकरणाद्वेश्मप्राप्तिसङ्कल्पः परविषय इति । तन्न । प्रजापतेः सभां वेश्म प्रपद्य इति वाक्यश्रुतिभ्यां दुर्बलप्रकरणविच्छेदेन वेश्मप्राप्तिसंकल्पस्य कार्यब्रह्मसभादिविषयत्वावगमात् । स्तुत्यर्थ-

त्वेन वाऽस्य परप्रकरणे कीर्तनम् । सगुणविद्या हि गतिमपेक्ष्य प्रजापतिसभादिप्राप्तिफलहेतुः । इयं तु परविद्या गतिनिरपेक्षैव, निरतिशयफलहेतुरतो महतीति । तस्मात् कार्यब्रह्मप्राप्त्यर्थैव गतिरिति सिद्धम् ॥ १४ ॥

एवमर्चिरादिगत्या गन्तव्यं निरूप्य गन्तॄन्निरूपयति—

( ६ प्रतीकोपासकानां ब्रह्मलोकगतिनिराकरणाधिकरणम् । सू० २ )

अप्रतीकाऽऽलम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥

किममानवः पुरुषः सर्वानुपासकान् ब्रह्मलोकं प्रापयति, उत प्रतीकोपासकभिन्नानिति संशयः । तत्र नियामकाभावात् सर्वानिति प्राप्ते, ब्रूमः । प्रतीकोपासकभिन्नान् सर्वानुपासकान्नयत्यमानव इति बादरायण आचार्यो मन्यते ॥

ननु तर्हि अनियमः सर्वेषामित्यत्र सर्वोपासनेषु मार्गोपसंहारोक्तिविरोधस्तत्राह ॥ उभयथा अदोषादिति॥कांश्चिदुपासकान्नयति, कांश्चिन्नेत्युभथा चाऽभ्युपगमे दोषाऽभावादित्यर्थः । अनियमन्यायस्य प्रतीकभिन्नविषयत्वादिति भावः । नियामकमाह ॥ तत्क्रतुश्चेति ॥ क्रतुरुपासनम् । कार्यब्रह्मविषयकः क्रतुर्यस्योपासकस्याऽस्ति स तत्क्रतुः । तथाच यो यदुपासकः स तत् प्राप्नोतीति श्रुतिस्मृतिसिद्धत्वात्तदुपासकानामेव कार्यब्रह्मप्राप्तिरित्यर्थः । प्रतीकोपासनेषु, नाम ब्रह्मेत्यादिषु ब्रह्मणः प्रतीकं प्रति विशेषणत्वेन प्रतीकस्यैव प्राधान्यान्न तदुपासकानां ब्रह्मोपासकत्वम् । पञ्चाग्न्युपासकानां त्वब्रह्मोपासकत्वेऽपि श्रुतिबलाद् ब्रह्मप्राप्तिरिति ॥ १५ ॥

विशेषं च दर्शयति ॥ १६ ॥

किञ्च, यावन्नाम्नो गतं तत्राऽस्य यथाकामचारो भवतीति नामप्रतीकोपासनफलादुत्तरोत्तरवागाद्युपासनानामुत्कृष्टफलविशेषं दर्शयति श्रुतिः— वाग्वा व नाम्नो भूयसीत्याद्या। अयं फलविशेषः, प्रतीकानामुत्कर्षाऽपकर्षवतामुपास्यत्वे युज्यते, न तु सर्वत्रैकस्य ब्रह्मण उपास्यत्वे। तस्माद्ब्रह्मोपासकानामेव ब्रह्मप्राप्तिर्न प्रतीकोपासकानामिति सिद्धम्॥ १६॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्माऽमृतवर्षिण्यां चतुर्थाध्यायस्य
तृतीयः पादः॥ ४॥ ३॥

## चतुर्थाध्याये चतुर्थः पादः ॥ ४ ॥ ४ ॥

एवं सगुणब्रह्मविदां प्राप्यमुक्त्वा निर्गुणब्रह्मविदां प्राप्यमाह—

( १ कैवल्यमुक्तेर्नवीनत्वनिराकरणाधिकरणम् । सू० ३ )

### संपद्याऽऽविर्भावः स्वेन शब्दात् ॥ १ ॥

एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपपद्य, स्वेन रूपेणाऽभिनिष्पद्यते इति श्रूयते । तत्र संशयः । यथा सुकृतिनः स्वीयेन रूपान्तरेण फलेनाऽभिनिष्पत्तिस्तथा निर्गुणविदोऽभिनिष्पत्तिरुताऽऽत्ममात्रेणाभिनिष्पत्तिरिति पूर्वपक्षे स्वर्गमोक्षयोरविशेषः, सिद्धान्ते विशेष इति फलम् । अत्र फलनिरूपणादध्यायपादसङ्गत्योः स्फुटत्वम् । तत्र स्वर्गवन्मोक्षस्याऽभिनिष्पत्तिः फलत्वाविशेषादिति प्राप्ते, ब्रूमः ॥ संपद्य स्वप्रकाशमात्मानं साक्षादनुभूय तेनैवाऽऽत्ममात्रेणाऽऽविर्भावः । अवस्थानवान् भवति मुक्तः । कुतः ॥ स्वेन रूपेणाऽभिनिष्पद्यते इति स्वशब्दादित्यर्थः । फलत्वहेतुकाऽनुमानं मोक्षनित्यत्वश्रुतिबाधितमिति ॥ १ ॥

ननु स्वरूपात्मकमोक्षस्य सदा सत्त्वात् कः पुनः पूर्वाऽवस्थातो विशेष इत्यत आह—

### मुक्तः प्रतिज्ञानात् ॥ २ ॥

यः स्वरूपेणाऽभिनिष्पद्यते स सर्वाऽनर्थविनिर्मुक्तः स्वप्रकाशनिरतिशयानन्दात्मनाऽवतिष्ठते । पूर्वत्र त्ववस्थात्रयकलुषितः, संसारी वेति विशेषः । ननु स्वरूपाऽभिनिष्पत्तौ मुक्त इति कुतोऽवगम्यते, तत्राह ॥ प्रतिज्ञानादिति ॥ य आत्माऽपहतपाप्मेति उपक्रम्य, एतं त्वेव ते भूयोऽनुव्याख्यास्यामीति

सकलदोषमुक्तस्यैवाऽऽत्मनो व्याख्येयत्वेन प्रतिज्ञानादित्य-ऽर्थः ॥ २ ॥

ननु कार्यज्योतिरुपसंपन्नस्य कथं मुक्तत्वमित्यत आह—

आत्मा प्रकरणात् ॥ ३ ॥

अत्र ज्योतिरात्मैव, न भौतिकं तेजः, य आत्मा अपहत-पाप्मेत्यात्मप्रकरणादित्यर्थः ॥ ३ ॥

( २ मुक्तेर्ब्रह्माभिन्नतानिराकरणाधिकरणम् । सू० १ )

अविभागेन दृष्टत्वात् ॥ ४ ॥

परं ज्योतिरुपसंपद्य मुक्तो विद्वानित्युक्तम् । तं मुक्तमुप-जीव्य संदिह्यते । किं मुक्तो ब्रह्माभिन्नत्वेनावतिष्ठते, उत ब्रह्मा-ऽविभागेनेति । तत्र भिन्नत्वेनेति भ्रान्तिं वारयति ॥ अविभागेने-ति ॥ निरतिशयानन्दब्रह्मात्मनैवावतिष्ठते मुक्तः । कुतः ॥ दृष्ट-त्वात् ॥ ब्रह्मैव सन् ब्रह्माप्येति, तत्त्वमसीत्यादिश्रुतिष्वभेदस्य दृष्टत्वादित्यर्थः ॥ ४ ॥

( ३ सविशेषत्वादिव्यवस्थानिराकरणाधिकरणम् । सू० ३ )

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

पूर्वसिद्धब्रह्माभिन्नं मुक्तमुपजीव्य संदिह्यते । स मुक्तो ब्रह्मात्मकः किं सत्येन सर्वज्ञत्वादिप्रपञ्चेन सहावतिष्ठते, उत शशविषाण-वदसन्नेव सर्वज्ञत्वादिरिति सच्चिन्मात्रेणावतिष्ठते, आहोस्विद्वस्तुतो निष्प्रपञ्चोऽपि व्यावहारिकसर्वज्ञत्वादिमानिति । अत्राद्यं पूर्व-पक्षमाह ॥ ब्राह्मेणेति ॥ ब्रह्मसंबन्धिना सत्येन सर्वज्ञत्वादिना सहावतिष्ठते ब्रह्मात्मको मुक्त इति जैमिनिराचार्यो मन्यते । कुतः ॥ उपन्यासविधिव्यपदेशेभ्यः ॥ उपन्यास उद्देशः । स च, सोऽन्वेष्टव्य इत्यादिविधानार्थमागतो, य आत्माऽपहतपाप्मेत्यादिरूपः । विधि-रज्ञातज्ञापनम् । स च तस्य सर्वेषु लोकेषु कामचारो भवतीत्या-

दिरूपः । उद्देशविधिविलक्षणो व्यपदेशः। स च, सर्वज्ञः सर्वेश्वर इत्यादिरूपः । अयं हि नोद्देशः । विध्यभावात् । नापि विधिः । सिद्धवन्निर्देशात् । अत एभ्यो हेतुभ्यः सप्रपञ्च एवात्मेति ॥५॥

अधुना द्वितीयं पूर्वपक्षमाह—

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

जीवात्मनस्तदात्मकत्वाच्चितितन्मात्रेण चैतन्यमात्रात्मनाऽवस्थिते मुक्ते ब्रह्मात्मनि सर्वज्ञ इत्यादिशब्दा निरर्थका एव प्रयुज्यन्ते इत्यौडुलोमिराचार्यो मन्यते। सर्वज्ञत्वादीनां धर्माणामसम्भवाद्धर्मिस्वरूपादत्यन्तभिन्नत्वे अत्यन्ताभिन्नत्वे वा तेषां गवाश्ववद्धर्मिवच्च धर्मत्वानुपपत्तेरिति प्राप्ते ॥ ६ ॥

सिद्धान्तयति—

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः॥७॥

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाऽभ्युपगमेऽपि पूर्वोपन्यासादिभ्यः पूर्वस्य ब्राह्मस्य रूपस्य सर्वज्ञत्वादेर्व्यावहारिकस्य भावाद् ब्रह्मणो मुक्तात्मनः सप्रपञ्चत्वनिष्प्रपञ्चत्वयोरविरोधं बादरायण आचार्यो मन्यते । आविद्यकधर्माणां सर्वज्ञत्वादीनामुपपत्तेर्न तेषां तुच्छत्वमिति भावः। अत एव सर्वात्मनाऽविद्यानिवृत्तौ विदेहकैवल्ये, निष्प्रपञ्चमेव । एतदभिप्रेत्योक्तं भगवता भाष्यकारेण, व्यवहारापेक्षयेति । न ह्यौपनिषदानां मोक्षेऽपि व्यवहृतिर्मता । मूलाभावादिति भावः ॥ ७ ॥

एवं परविद्याफलमभिधाय अपरविद्याफलं प्रपञ्चयितुमुपक्रमते—

(४परलोकगोपासकस्य भोग्यवस्तुसृष्टौ संकल्पहेतुताधिकरणम्।सू०२)

सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

दहरविद्यायां श्रूयते, स यदि पितृलोककामो भवति सङ्कल्पा-

देवाऽस्य पितरः समुपतिष्ठन्तीत्यादिः । तत्र संशयः । किं ब्रह्मलोकस्थस्य विदुषो भोगहेतवः पित्रादयः सङ्कल्पादेव सिद्ध्यन्ति ? उत यत्नान्तरसहकृतात् सङ्कल्पादिति । तत्र लोके भोगसाधनस्य प्रयत्नसाध्यत्वदर्शनादत्रापि यत्नसापेक्षेच्छात एव ब्रह्मभूतस्य विदुषो विभूतिसिद्धिः, न केवलेच्छात इति प्राप्ते, ब्रूमः । सङ्कल्पादेवाऽस्य विदुषः पित्रादिविभूतिप्राप्तिः । कुतः । साधनान्तरनिरासकैवकारश्रुतेः । श्रुत्या च लौकिकानुमानस्य बाध इति । किञ्च यदि सङ्कल्पः साधनान्तरसापेक्षस्तर्हि तदभावे विदुषो बन्ध्यसङ्कल्पत्वापत्तौ सत्यसङ्कल्पत्वं न स्यात् । सङ्कल्पानुगुणसाधनान्तरमिष्टमेवेति ॥ ८ ॥

अत एव चाऽनन्याधिपतिः ॥ ९ ॥

अत एव सत्यसङ्कल्पत्वादेव विद्वाननन्याधिपतिर्भवति । यदि विदुषः कश्चनाऽधिपतिः स्यात्तर्हि तदधीनभोगस्य सङ्कल्पमात्रादसिद्धेः सत्यसङ्कल्पत्वं न स्यात् । तस्मादीश्वरात्मकस्य विदुषः सङ्कल्पादेव सर्वैश्वर्यप्राप्तिरिति सिद्धम् ॥ ९ ॥

( ५ देहभावाभावयोरैच्छिकताधिकरणम् । सू० ५)

अभावं बादरिराह ह्येवम् ॥ १० ॥

सङ्कल्पादेवेति श्रुत्या विदुषस्तावन्मनोऽस्तीत्यवगतं, शरीरेन्द्रियाणि सन्त्युत न सन्ति, आहोस्वित् सन्ति न सन्ति चेति सन्देहे । यथा सङ्कल्पादेवेत्यवधारणश्रुत्या साधनान्तराऽभावस्तथा बादरिराचार्यः शरीरेन्द्रियाणामभावं मन्यते । आह ह्येव माम्नायः । मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोक इति यदि विदुषः शरीरादिकं स्यात्तदा मनसेति विशेषणमन्ययोगव्यवच्छेदकमवधारणपरं पीड्येतेति एकः पूर्वपक्षः ॥ १० ॥

पूर्वपक्षान्तरमाह—

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

शरीरेन्द्रियाणां मनस इव भावं सत्तां जैमिनिराचार्यो मन्यते। स एकधा भवति त्रिधा भवतीत्यादिना विदुषोऽनेकधा-भावविकल्पाऽऽमननात् । न हि शरीरभेदं विना कदाचिदेकधा भावः, कदाचित् त्रिधाभाव इत्याद्यनेकधाभावविकल्पः संभव-तीति भावः ॥ ११ ॥

सिद्धान्तमाह—

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

अत एव मनसेति विशेषणाद्विकल्पाऽऽमननाच्चेति लिङ्ग-द्वयात् । यदा शरीरादिसङ्कल्पस्तदा सशरीरेन्द्रियत्वम् । यदा तु तत्सङ्कल्पाऽभावस्तदा शरीरेन्द्रियराहित्यमित्युभयविधं विदुष ऐश्वर्यं बादरायण आचार्यो मन्यते ॥ द्वादशाहवत् ॥ यथा द्वादशाहमृद्धिकामाः उपेयुरिति उपेयचोदनागम्यत्वाद् द्वादशाह-स्य सत्रत्वं द्वादशाहेन प्रजाकामं याजयेदित्यहर्गणत्वे सति यजतिचोदनागम्यत्वादहीनत्वं चेत्युभयविधत्वं तद्वदित्यर्थः॥१२॥

ननु विदुषः शरीराद्यभावे कथं भोगस्तत्राह—

तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

तनोः सेन्द्रियशरीरस्याऽभावकाले सन्ध्यवत् । यथा स्वप्ने मानसिकविषयभोगो जाग्रद्भोगविलक्षणस्तद्वद्भोगः । कुतः । मनसैतान् कामान् पश्यन् रमत इति श्रुतेर्भोगे साधनान्तरं वार-यन्त्या एवमेवोपपत्तेरित्यर्थः ॥ १३ ॥

ननु देहाद्यभावेऽपि भोगसत्त्वे सशरीरताङ्गीकारो व्यर्थ-स्तत्राह—

भावे जाग्रद्वत् ॥ १४ ॥

देहादिभावकाले जाग्रद्वद्भोगः, स्वप्नभोगविलक्षणो भवतीत्यर्थः ॥ १४ ॥

ननु विकल्पामननलिङ्गेन विदुषोऽनेकशरीराणि सन्तीत्युक्तं तद् व्यर्थं निरात्मकेषु तेषु भोगाऽयोगादित्याक्षेपे इदमाह—

( ६ उपासकस्यानेकदेहेषु सात्मकत्वाधिकरणम् । सू० २ )

प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥

किं विदुपा सृज्यमानानि शरीराणि दारुयन्त्रवन्निरात्मकानि ? उत अस्मदादिदेहवत् सात्मकानीति संदेहः । पूर्वपक्षे विदुष एकस्मिन्नेव देहे भोगः फलं, सिद्धान्ते सर्वेष्वपीति बोध्यम् । तत्राऽनाद्यन्तःकरणपरिच्छिन्नस्य भोक्तुर्विदुषः शरीरान्तरेषु प्रवेशाऽयोगान्निरात्मकानीति प्राप्ते, ब्रूमः । विदुपा सृज्यमानेषु सेन्द्रियमनःसु बहुषु देहेषु विदुषआवेशोऽभिव्यक्तिर्विद्यासामर्थ्यादुपपद्यते । पुरातनान्तःकरणपरिच्छेदस्य विद्वांसं योगसामर्थ्याद्व्यापकं प्रत्यप्रतिबन्धकत्वात् प्रदीपवत् । यथा प्रदीप एकोऽनेकवर्तिषु प्रविशति, तथा विद्वाननेकागन्तुकान्तःकरणद्वारा देहेषु प्रविशति ॥ तथाहि दर्शयति शास्त्रम्— एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधेत्यादि । यद्यपि विदुषः सर्वेषु देहेषु एकत्वं, दीपानां तु भिन्नत्वमिति वैषम्यमस्ति, तथाप्युत्पादकदीपगतैक्यं सादृश्यादुत्पन्नदीपेषूपचर्यते इति साम्यं बोध्यम् । तस्मात् सर्वाणि शरीराणि सात्मकान्येव ॥ १५ ॥

ननु विदुषो न शरीरवत्त्वं युक्तं, तत्केन कं पश्येदिति, न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदिति च विशेषविज्ञानाऽभावश्रवणादित्यत आह—

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

सुषुप्तिपरममुक्त्योरन्यतरापेक्षयेदं विशेषविज्ञानाभावश्रवण-

म् । हि यतः प्रकरणादेवमाविष्कृतं सुषुप्तिप्रकरणे, न तु तद्-द्वितीयमस्ति ततोऽन्यदित्यादिश्रुतं परममुक्त्यपेक्षया च तत्केनेत्यादि । तस्मान्नेदं सगुणविदः शरीराङ्गीकारे बाधकमित्यर्थः । तत्तत्र सुषुप्तौ द्वितीयं विभक्तं न त्वस्तीत्यर्थः ॥ १६ ॥

( ७ ज्ञानिनो जगत्स्रष्टृत्वनिराकरणाधिकरणम् । सू० ६ )

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

पूर्वं सङ्कल्पमात्रेण देहादिसर्गे यदैश्वर्यमुक्तं विदुषः तस्य जगदुत्पत्त्यादावपवादोऽत्र क्रियते । किं विदुष, ऐश्वर्यमीश्वरस्येव निरङ्कुशम्, उत सातिशयमिति संशयः । पूर्वपक्षे ईश्वरनानात्वं, सिद्धान्ते तदैक्यमिति बोध्यम् । तत्र विदुषोऽनन्याधिपतित्वान्निरङ्कुशमैश्वर्यमिति प्राप्ते, ब्रूमः । जगदुत्पत्त्यादिव्यापारवर्जं, सातिशयमेवाऽणिमाद्यैश्वर्यं विदुषः । जगद्व्यापारस्तु परमेश्वरस्यैव सृष्टिवाक्येषु सर्वत्र तस्यैव प्रकरणात् । विदुषश्च तत्राऽसन्निहितत्वात् । नित्यसिद्धं हि परमेश्वरस्य निरङ्कुशमैश्वर्यं, कथं वा विदुष ईश्वरप्रसादायत्तमागन्तुकमैश्वर्यं निरङ्कुशमिति वक्तुं शक्यम् । तस्मात् सातिशयमैश्वर्यं विदुषः ॥ १७ ॥

प्रत्यक्षोपदेशादितिचेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

नन्वाप्नोति स्वाराज्यमिति प्रत्यक्षश्रुत्या ऐश्वर्योपदेशान्निरङ्कुशं विदुष ऐश्वर्यमितिचेन्न ॥ आधिकारिकमण्डलस्थोक्तेः॥ अधिकारे तत्तद्व्यापारे नियोजयत्यादित्यादीनित्याधिकारिकः सूर्यादिमण्डलस्थः परमात्मा । तस्योत्तरवाक्ये, प्राप्नोति मनसस्पतिमित्यत्र प्राप्यत्वेनोक्तेर्विदुषः सातिशयमैश्वर्यमिति गम्यते । यदि पूर्ववाक्ये, एव निरतिशयमैश्वर्यमुक्तं, तदेदमीश्वरप्राप्तिवचनं व्यर्थं स्यादतः सातिशयमैश्वर्यं विदुषः ॥ १८ ॥

## विकारावर्त्ति च तथाहि स्थितिमाह ॥ १९ ॥

सगुणे ब्रह्मणि विकाराऽवर्ति च निर्गुणं स्वरूपमस्ति । तथाहि ब्रह्मणि सगुणत्वनिर्गुणत्वयोः स्थितिमाह श्रुतिः । एतावानस्य महिमेति सगुणत्वमुक्त्वा, अतो ज्यायाँश्च पूरुष इति निर्गुणत्वमाह । एतावान् सहस्रशीर्षेत्यादिरस्य परस्य महिमा विभूतिरित्यर्थः । अयं भावः । यथा सगुणे स्थितं निर्गुणस्वरूपम् । उपासको न प्राप्नोति तदुपासकत्वाभावात् । तथा तद्गतजगत्स्रष्टृत्वादिकमैश्वर्यं न प्राप्नोति, तदुपास्त्यभावात् । उपास्त्यभावश्च श्रुत्यभावादिति ॥ १९ ॥

अत्र दृष्टान्तार्थं यन्निर्गुणस्वरूपमुक्तं तत्र प्रमाणान्तरमाह—

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

एवं ब्रह्मणो निर्गुणत्वं श्रुतिस्मृतीदर्शयतः । न तत्र सूर्यो भाति न चन्द्रतारकमित्याद्या श्रुतिः । न तद्भासयते सूर्य इत्याद्या स्मृतिरिति ॥ २० ॥

## भोगमात्रसाम्यं लिङ्गाच्च ॥ २१ ॥

उपासकस्योपास्यदेवतया सह भोगमात्रेण साम्यं श्रुतं, न जगद्व्यापारेण । तमाहाऽऽपो वै खलु मीयन्ते लोकोऽसाविति । तस्माल्लिङ्गाद्विदुषः साऽतिशयमैश्वर्यं गम्यत इत्यर्थः । तं ब्रह्मलोकस्थम् उपासकं हिरण्यगर्भ आह । आपो वै खल्वमृतमापो मया मीयन्ते भुज्यन्ते । तवाप्यसावमृतोदकलक्षणो लोको भोग्य इत्यर्थः ॥ २१ ॥

यदीश्वरैश्वर्येणातिशयेन सहितं विदुष ऐश्वर्यं साऽतिशयं तर्हि लौकिकैश्वर्यवदनित्यं स्यात् । तथाच विदुषोऽप्यावृत्तिः प्रसज्ज्येतेत्याशङ्क्य दयासिन्धुर्भगवान् बादरायणः समाधत्ते—

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

येऽर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तास्तेषामनावृत्तिरेव । तेषां न पुनरावृत्तिरित्यादिमुक्त्यभिधायकशब्दादित्यर्थः । निर्गुण-ब्रह्मविदाम् आवृत्तिशङ्कैव नास्ति । यतः सगुणविदामपि निर्गुणा-श्रयणेनैवाऽनावृत्तिः, नान्यथा । तस्माद्ब्रह्मविदां निरस्ता-ऽनर्थव्रातस्वप्रभनिरतिशयानन्दब्रह्मात्मनाऽवस्थितिरिति सिद्धम् । सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्था ॥ २२ ॥

यः सर्वश्रुतिबन्दिवन्दिततनुर्मायात्मनिद्रां गतः
सुप्तोऽस्मिन् भवपत्तनेऽपरिमिते कल्पान्ततल्पान्तरे ॥
यः सर्वाऽपरिपन्थिसाङ्गनयतः प्रज्ञाप्रवाहान्ततः
प्रज्ञालभ्यसुखाकृतिः कृतिमिमां रामः स गृह्णातु नः ॥ १ ॥

विदुषां कण्ठभूषेयं कृता वृत्तिर्मया प्रभो ॥
व्यासवाङ्मणि संदृब्धा, प्रीतये तेऽस्तु सर्वदा ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाऽऽचार्यश्रीमन्मुकुन्दगोविन्दश्री
चरणशिक्षितश्रीरामानन्दसरस्वतीकृतौ ब्रह्मसूत्रवृत्तौ
ब्रह्माऽमृतवर्षिण्यां चतुर्थस्याध्यायस्य
चतुर्थः पादः ॥ ४ ॥ ४ ॥

चतुर्ष्वध्यायेषु सर्वाणि सूत्राणि ॥ ५५५ ॥
अधिकरणसूत्राणि ॥ १९२ ॥
गौणसूत्राणि ॥ ३६३ ॥
प्रथमाध्यायेऽधिकरणानि ॥ ४० ॥
गौणसूत्राणि ॥ ९४ ॥
द्वितीयाऽध्यायेऽधिकरणानि ॥ ४७ ॥
गौणसूत्राणि ॥ ११० ॥
तृतीयाध्यायेऽधिकरणानि ॥ ६७ ॥
शेषसूत्राणि ॥ ११९ ॥
चतुर्थाध्यायेऽधिकरणानि ॥ ३८ ॥
अङ्गसूत्राणि ॥ ४० ॥
अथ पादसूत्राणि विभज्यन्ते––
प्रथमाध्यागप्रथमपादे न्याया एकादश ॥ ११ ॥
अङ्गानि विंशतिः ॥ २० ॥
द्वितीये पादे न्यायाः सप्त ॥ ७ ॥
शेपाः पञ्चविंशतिः ॥ २९ ॥
तृतीयपादे अधिकरणानि चतुर्दश ॥ १४ ॥
अङ्गानि एकोनत्रिंशत् ॥ २९ ॥
चतुर्थपादे अधिकरणानि अष्टौ ॥ ८ ॥
शेपसूत्राणि विंशतिः ॥ २० ॥ १ ॥
द्वितीयाध्यायस्य प्रथमपादे अधिकरणानि त्रयोदश ॥१३॥
अङ्गानि चतुर्विंशतिः ॥ २४ ॥
द्वितीयपादे अधिकरणानि अष्टौ ॥ ८ ॥
गुणानि सप्तत्रिंशत् ॥ ३७ ॥
तृतीयपादे अधिकरणानि सप्तदश ॥ १७ ॥

गुणानि षट्त्रिंशत् ॥ ३६ ॥
चतुर्थपादेऽधिकरणानि नव ॥ ९ ॥
गौणानि त्रयोदश ॥ १३ ॥ २ ॥
तृतीयाध्यायस्य प्रथमपादेऽधिकरणानि षट् ॥ ६ ॥
गुणानि एकविंशतिः ॥ २१ ॥
द्वितीयपादे अधिकरणानि अष्टौ ॥ ८ ॥
गुणानि त्रयस्त्रिंशत् ॥ ३३ ॥
तृतीयपादेऽधिकरणानि षट्त्रिंशत् ॥ ३६ ॥
गौणानि त्रिंशत् ॥ ३० ॥
चतुर्थपादेऽधिकरणानि सप्तदश ॥ १७ ॥
अङ्गानि पञ्चत्रिंशत् ॥ ३५ ॥ ३ ॥
चतुर्थाध्यायस्य प्रथमपादेऽधिकरणानि चतुर्दश ॥ १४ ॥
गुणानि पञ्च ॥ ५ ॥
द्वितीयपादेऽधिकरणानि एकादश ॥ ११ ॥
गुणानि दश ॥ १० ॥
तृतीयपादेऽधिकरणानि षट् ॥ ६ ॥
अङ्गानि दश ॥ १० ॥
चतुर्थपादेऽधिकरणानि सप्त ॥ ७ ॥
अङ्गानि पञ्चदश ॥ १५ ॥

इति शम् ॥

ब्रह्मामृतवर्षिणीसहित वेदान्तदर्शनाधिकरणानां ।

# सूचीपत्रम् ।

( इत्यधिकरणसूचीपत्रम् )

( अस्यामेषां ग्रन्थानां वाक्यानि विचारितानि )

१ ईशावास्योपनिषत् शु. यजुः
२ केनोपनिषत् सामवेद-
३ कठोपनिषत् कृष्णय-
४ प्रश्नोपनिषत् अथर्ववे-
५ मुण्डकोपनि अथर्ववे-
६ माण्डूक्योपनि. अथर्ववे-
७ ऐतरेयोपनि. ऋग्वे-
८ तैत्तिरीयोपनि. कृष्णयजुः
९ छांदाग्योपनि. सामवे
१० बृहदारण्योपनिष. शुक्लय-
११ श्वेताश्वतरोपनि. कृष्णोपनि
१२ कौषीतक्युपनि. ब्राह्मण ऋग्वेद
१३ कैवल्योपनि. कृ. य.
१४ जाबालोपनिषत् शुक्लयजुः
१५ काण्वशाखा अग्निरहस्यब्राह्मण शुक्लय-
१६ ताण्डिशाखा
१७ शाङ्ख्यायनिशाखा शुक्लयजुः
१८ पंञ्चीरहस्यब्राह्मणशुक्लयजुः
१९ भगवद्गीतास्मृतिः
२० मनुस्मृतिः
२१ कपिलस्मृतिः
२२ योगस्मृतिः
२३ करणादगौत्तमस्मृतिः
२४ बौद्धादिस्मृतिः
२५ पुराणानि
२६ इतिहासाः
२७ सर्वोपासकग्रन्थाः
२८ सर्वमतभेदाः
२९ सर्वतन्त्राणि
३० सर्ववैदिकसूत्राणि
३१ आर्षसूत्रविषयाः

( वेदान्तदर्शनस्य

# शुद्धयशुद्धिपत्रम् ।

| | शुद्धम | अशुद्धम् | पृ० | पङ्क्तिः |
|---|---|---|---|---|
| १ | चतुर्भिः | चतुर्भि | २४ | ११ |
| २ | दिदर्शयिषुः | दिदर्शयिषु | २८ | २ |
| ३ | त्वेकदेशिमतम् | त्वेकदशिमतम् | ३७ | २ |
| ४ | ब्रह्मेत्यत्रेत्यानन्द | ब्रह्मेत्यत्रत्पानन्द | ३९ | २ |
| ५ | नखाग्र | मूनखाग्र | ३९ | १ |
| ६ | रातेर्दातुः | रातेर्द्दातुः | ४२ | १ |
| ७ | मन्वायत्ता | मन्वायता | ४३ | ८ |
| ८ | मन्वायत्ता | मन्वायता | ४३ | १ |
| ९ | अमृतमभय | अमृतभय | ६९ | ८ |
| १० | केवलमिन्द्रियावि | केवलमन्द्रियावि | ७३ | १ |
| ११ | सुतेजा | सुतजा | ८१ | ९ |
| १२ | समाहिते | सामाहिते | ९५ | ४ |
| १३ | विधरण एषां | विधारण एषां | ९७ | ६ |
| १४ | नाहं | नाह | ९९ | ३ |
| १५ | मृतमभय | मृतभय | ९९ | ७ |
| १६ | तदेतदिति | तदतदिति | १०१ | ४ |
| १७ | शोधिततत्त्व | शोधितत्त्व | १०५ | ८ |
| १८ | विग्रहवर्ती | विग्रहवती | १०९ | ११ |
| १९ | नसृजता | नसृज्यता | ११० | ३ |
| २० | अवशिष्टं | अवथिष्ट | १३१ | ६ |
| २१ | स्थूलशरीरा | स्थूलशारीरा | १३१ | १ |
| २२ | उत्तरमाह | उत्तमाह | १४२ | २ |
| २३ | आम्नानात् | आम्नात् | १४२ | ९ |

| | | | | |
|---|---|---|---|---|
| २४ | मैत्रेयीब्राह्मण | मैत्रेयीब्रह्मण | १४८ | ७ |
| २५ | नवाह्यान् | नावाह्यान् | १४९ | १ |
| २६ | राम्नानाद् | राम्नाद् | १५३ | ७ |
| २७ | यत्किञ्चित् | यत्कञ्चित् | १६० | १२ |
| २८ | इत्यादिना | इत्यादिन | १६८ | ७ |
| २९ | संहर्तृत्वं | संह्रर्तृत्वं | ९६८ | १२ |
| ३० | शारीरात् | शरीरात् | १६८ | ९ |
| ३१ | दध्याकारेण | दध्याकरेण | १६९ | ५ |
| ३२ | वैषम्यनैर्घृण्य | वैषम्यनर्घृण्य | १७४ | ३ |
| ३३ | साम्यावस्था | साम्यवस्था | १७८ | १० |
| ३४ | विपर्ययोदर्शनात् | विपर्ययोऽदर्शनात् | १८४ | ९ |
| ३५ | जगत्कारणस्य | जगजत्कारणस्य | १८४ | १० |
| ३६ | मोहमपीपिपत् | मोहमामीपदत् | २१० | ३ |
| ३७ | जीवस्यांश | जीवस्पाश | २११ | १ |
| ३८ | ग्राह्यत्याज्यभेदः | ग्राह्यत्याजाभेदः | २२४ | ४ |
| ३९ | तथा प्राणाः | तथा प्राणः | २२७ | ७ |
| ४० | तथा प्राणा इति | तथा प्राण इति | २२७ | ६ |
| ४१ | विश्वेश्वरदर्शन | विश्वेरदर्शन | २३१ | ५ |
| ४२ | इत्यादिदोषा | इयदिदोषा | २३४ | ४ |
| ४३ | वदन् | वदद् | २३२ | २ |
| ४४ | भेदनिर्देशेन | भेदनिर्देशन | २३३ | ४ |
| ४५ | रूपमभवन् | रूप भवन् | २३८ | ८ |
| ४६ | त्रिवृदेकैका | वृत्रिदेकैका | २४१ | ११ |
| ४७ | प्रवाहणाख्य | प्रवाहाणख्य | २४४ | ८ |
| ४८ | द्युलोकाख्य | द्युलोकाख्य | २४६ | ९ |
| ४९ | इष्टादिकारिण | इष्टाकारिरिण | २५१ | ५ |
| ५० | तद्व्यापारादवि | तद्व्यादारादवि | २५३ | ६ |
| ५१ | तदंशो | तदशो | २६२ | १४ |
| ५२ | क्लेशैः | क्लैशैः | २६३ | १ |
| ५३ | तस्मात् | तस्मत् | २६७ | १ |
| ५४ | अनाम्नानात् | अनाम्नात् | २९९ | १० |

| | | | | |
|---|---|---|---|---|
| ५५ | तद्धिलिङ्गं | तद्धिलिङ्ग | ३२१ | ४ |
| ५६ | अध्ययनं | अध्यापनं | ३३९ | १ |
| ५७ | च | चै | ३४६ | १२ |
| ५८ | जुहोति | जुह्वाति | ३५० | १० |
| ५९ | जुहोति | जुह्वोति | ३५० | ११ |
| ६० | शारीरासनानां | शारीरासनानां | ३६६ | ७ |
| ६१ | पूर्वमनारब्ध | पूर्वमारब्ध | ३६९ | ९ |
| ६२ | ब्रूमः | ब्रूमेः | ३७१ | ५ |
| ६३ | निष्कमतो | निष्कामतो | ३८३ | २ |
| ६४ | अनन्तरं | अनन्तरम् | ३८७ | २ |
| ६५ | गतिर्न | गतिऽर्न | ३९० | ५ |
| ६६ | मुक्तमुपजीव्य | मुक्तमुमजीव्य | ३९५ | ९ |
| ६७ | जगत्स्रष्टृत्वादि | जगत्स्रष्टृत्वादि | ४०१ | ८ |

इति ।

ॐ नमो नारायणाय ।

# कुतर्कदग्धचिकित्सा ।

## नाम वेदान्तदर्शनभूमिका ।

### श्रीप्रज्ञानानन्दसरस्वतीस्वामिसंकलिता ।

प्रपञ्चोपशमायाऽस्मै सच्चिदानन्दमूर्त्तये ॥
गुरवे शान्तरजसे नमः परदयालवे ॥ १ ॥

प्रथमतो वादिनिर्मितग्रन्थनिरुक्त्यनुपपत्तिः । तथाहि । अद्वैतस्यात्मत्वात्तद्भिन्नस्य द्वैतस्य पारमार्थिकत्वनाशून्यत्वाद् वस्तुपरिच्छेदासंभवाच्च अज्ञानतत्कार्यवाङ्मनआद्यभावाच्च, यत्र त्वस्य सर्वमात्मैवाभूत् तत्र केन कं पश्येदित्यादिश्रुतिविरोधाच्च, न निरोधो न चोत्पत्तिरिति श्रुतेश्च शुद्धे अद्वये सच्चिदानन्दघने वादोऽनुपपन्न एव । तत्रापि खण्डनन्तु सुतरां हास्यास्पदमनुपपन्नञ्च । किञ्चाद्वैतस्यात्मत्वादपि स्वस्य खण्डनानुपपत्तिरेव । यः सर्वेषां खण्डयिता साक्षी विभुरेको बाधद्रष्टा स केन बाधयितुं शक्यः । न हि सर्वस्य खण्डनकर्त्ता ज्ञानस्वरूपः साक्षी केनापि खण्डयितुं शक्यः । साक्षित्वादेव । तथाचायं प्रयोगः । सर्वं द्वैतं तज्ज्ञेयं, सच्चिदात्मस्वरूपभास्यत्वात् । स्वप्नज्ञेयवदिति । किञ्च, ब्रह्मैवेदं सर्वमात्मैवेदं सर्वं, पुरुष एवेदं सर्वं, चैतन्यस्यैकरूपत्वाद् भेदो युक्तो न कर्हिचित्, वासुदेवः सर्वमिति, सच्च त्यच्चाहमर्जुन, क्षेत्रज्ञं चापि मां विद्धि, तदनन्यत्वमारम्भणशब्दादिभ्यः, आत्मेति तूपगच्छन्ति ग्राहयन्ति च, आत्मनि चैवं विचित्राश्च हि, भेदः सर्वत्र मिथ्यैव धर्म्मादेरनिरूपणादित्यादिश्रुतिस्मृतिसूत्रभाष्यवार्त्तिकपुराणानुभवविरोधादपि द्वैतं न पारमार्थिकम् । वादानुपपत्तिश्च ॥

किं वा अद्वैते ये वादाः कुतर्कदुराग्रहरूपाः, न ते वस्तुतो विरोधमावहन्ति । स्वकपोलकल्पितत्वात् संप्रदायबहिर्भूतत्वाच्च शिष्टाऽग्राह्यत्वाच्चोपेक्षणीयाः । तथाचोक्तं वेदव्यासेन अपरिग्रहाच्चात्यन्तमनपेक्षा । श्रुतिस्मृतियुक्तिशिष्टमन्वादिभिः केनाप्यंशेन द्वैतसत्य-

त्वाऽनङ्गीकारात् । परमाणुकारणवादाः प्रधानादिद्वैतसत्यवादाः प्र, लापवदुपेक्षणीया मुमुक्षुभिः ॥

किञ्च, अद्वैतवादो नाम जीवब्रह्मणोर्वास्तवैक्यं, जगच्चापि ब्रह्मैवाऽखण्डं, नान्यदिति सर्वोपनिषत्सिद्धान्तः । स सत्संप्रदायाज्ज्ञात्वा खण्ड्यते चेत्, तदा खण्डनानुपपत्तिः । ज्ञाते द्वैतं न विद्यत इति स्वरूपत्वादेव न सम्भवति ॥

उपनिषत्पदव्युत्पत्त्यापि, खण्डनानुपपत्तिः । उपनिपूर्वकषद्लृ विशरणगत्यवसादनेष्विति धातोः क्विपि सत्युपनिषत्पदं भवति । सामीप्यतया निश्चयेन, वास्तवैक्यं ब्रह्मतत्त्वमखण्डं भेदवर्जितं बोधयति जिज्ञासुमित्युपनिषद्, रागादीन् शिथिलयति सर्वदुःखं नाशयति च ब्रह्मविद्योपनिषत् ॥

किञ्च द्वैतं सर्वस्य ज्ञातमेवाऽहं जन्ममरणवान्, मत्त ईश्वरः पृथक्, जगत्सत्यमनादि च मूढा जानन्त्येव । तथाच द्वैतमेव बोधयेच्चेद् वेदस्तदा ज्ञातत्वादेव उपेक्षा स्यात् । अपूर्वत्वाऽभावाच्च । तस्माद‌द्वैतमेव बोधयति । तथाचोक्तं, प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् । द्वैतं न प्रतिपाद्यं, तस्य स्वयमेव लोकसिद्धत्वादिति ॥

संप्रदायाऽभावेन खण्डयतिचेत्तर्हि सुतरां खण्डनस्यानुपपत्तिः । नहि यस्य तत्त्वं ज्ञायतेऽज्ञायते वा तत् खण्डयितुं शक्यते । तत्त्वाज्ञानात् सत्खण्डनाऽनुपपत्तिः । योयं नजानाति, तं कथं खण्डयितुं समर्थः । स्वकपोलकल्पनया खण्डनं तु विदुषां समक्षे हास्यास्पदं प्रलापत्वादुपेक्षणीयञ्चेति । न हि प्रमां विना खण्डने मण्डने वा प्रवृत्तिः संभवति ॥

किञ्च, द्वैतस्य साधकं वा, अद्वैतं ब्रह्म । आद्ये आत्माश्रयादि । द्वितीये स्वविरुद्धस्य साधकं स्वं कथं भवेत् ! ! । न च चण्डभानुस्तमसि मानं भवितुमर्हति । यत्सत्त्वे यदभावस्य नियतत्वं विरोधि तत् । भानुसत्त्वे तमःसत्त्वं केन दृष्टं क्षितौ वद । प्रत्यक्षादीनि प्रमाणानि द्वैते सन्तीति चेद्, मानानि केन सिद्ध्यन्ति । मानान्तरपरिग्रहेऽनवस्थादयो दोषाः स्युः । अप्रमाणं द्वैतं भ्रम एव । स्वतः सिद्धत्वे, चित्त्वे च आत्मन एव नामान्तरम् । अनुभूतिस्तु न प्रमाणप्रयोजिका । मेयस्यापि च मानत्वं भवेत्तथा सति ॥

येन रूपेण यज्ज्ञानं तत्तथेति विनिश्चयः ।

कर्त्तुं न शक्यते क्वाऽपि रज्जुः सर्पायते न हि ॥
मेयसिद्धौ च मानत्वं मानसिद्धौ च मेयता ।
अन्योन्याश्रयदोषेण न सिद्ध्येदुभयं तव ॥
मानाभावाद्द्वयस्य न सिद्धिरिति चेत्तदा ।
पुत्राऽभावान्न सिद्धिः स्याद् वन्ध्याया अपि ते मते ॥
पुत्राभावः स्वरूपं चेन्मानाभावोऽपि तस्य तत् ।
शून्यवादप्रसङ्गश्चेच्छून्यं द्वैतस्य मे मतम् ॥
प्रमाणाभावतो द्वैतं शून्यमेव समाविशेत् ।
नाद्वैतशून्यता सा तु भवेन्मानाद्यसंभवे ॥
यदन्यस्य प्रमाणानि न सहेत कथं तु तत् ।
स्वस्मिन् सहेत मानानि विवस्वानिव तत्तमः ॥
तस्मात्तूष्णीं तिष्ठ वत्स ! तदेवाऽद्वैतमिष्यत, इति ॥
ब्रह्माऽभेदान्न जीवस्य भेदोऽस्ति जगता सह ।
सुपर्णऋतपानाख्यश्रुतिभ्यां भेद उच्यते ॥
इतिचेद्, ब्रूहि कस्त्वं भो जीवो ब्रह्माऽथवेश्वरः ।
जीवश्चेदीश्वराद्भिन्नो ब्रह्मणो वाऽथ मे वद ॥
भिन्नश्चेदीश्वराद् ब्रूहि, को भेदे हेतुरञ्जसा ।
सर्वज्ञत्वादयो धर्मा ऐश्वरा मयि नेति चेत् ॥
सर्वज्ञ ईश्वर इति ब्रुवता ज्ञात एव हि ।
प्रातिस्विकं न जानामीति चेच्छब्दार्थविद् भवान् ॥
न वा आद्येऽथ यत् किञ्चिद् वक्ति जानाति तद् भवान् ॥

किञ्च, अभिन्ने भेदशून्ये वस्तुनि शुद्धे सच्चिदानन्दरूपे प्रतीतः प्रतिभातो भेदः स्वप्रतियोगिकान्योन्याभावो मृषा मिथ्या स्यात् । यथा चन्द्रनानात्मता, चन्द्रव्यक्त्यनेकता, अभिन्ने चन्द्रे प्रतीता मृषा। यथा चन्द्रैकत्वबुद्धिर्द्वित्वबाधरूपा तथा सामानाधिकरण्यबुद्धिरप्यैक्यांशे भेदबाधरूपैव। भेदाभेदयोरविरोधकल्पने, चन्द्रेऽपि तथा कल्पनाप्रसङ्गात् । वस्तुनि विकल्पाऽयोगस्तु प्रकृतेऽपि समानः॥ अयं प्रयोगः– सामानाधिकरण्यप्रत्ययगोचरो भेदो मिथ्या । अभिन्ने प्रतीतत्वात् । चन्द्रभेदवत् । ननु वैपरीत्यमेव किं न स्यात् । उक्तप्रत्ययगोचरोऽभेदो मिथ्या । भिन्ने प्रतीतत्वात् । दूरस्थवृक्षद्वयप्रतिभासमानाऽभेदवत्।भवताऽप्यात्मनि प्रतिभासमानस्यान्तःकरणदेहेन्द्रिया-

ऐक्यस्य तथात्वाभ्युपगमादितिचेन्न । भवत्वेवं, तथापि कुण्डलादौ कनकात् पृथक्सत्ताऽदर्शनात् सत्कनकाऽभेदबाधस्य तेष्व-ऽसत्त्वापादकत्वेन, फलतो विशेषाऽभावात् । दूरस्थवृक्षादिवद् भिन्नवस्तुनि प्रतीतोऽभेद ऐक्यञ्च मृषैव । स च प्रकृते मृषा भवन् कुण्ड-लादिकं सत्त्वात् प्रच्याव्य मृषात्वे स्थापयिष्यति । अभ्युपेत्यापि भेदप्रतिभासस्याभेदबाधकत्वमुक्तम् । विशेषस्य प्रागुक्तत्वात् । उभ-यथापि वास्तवं कनकैक्यमव्याहतमेव । उक्तहेत्वोरन्यतरमृषात्वे-लक्षणात् । कनकादिवस्तुनः, स्वतो भेदो न प्रभवत्यनृतभेदस्यैक्या-ऽविघातित्वात् । नन्वेवं सामानाधिकरण्यप्रत्ययगोचरभेदाऽभेदयो-रेकतरविरोधादन्यतरमृषात्वमिव सत्प्रतिपक्षन्यायेन परस्परपराह-तत्वादुभयमृषात्वमेव किं नस्यात् । तथाच सर्वप्रपञ्चे प्रतिभासमान-स्य सदभेदस्यापि मृषात्वापत्तौ शून्यवादप्रसङ्ग इतिचेन्न । भवत्वेवं तथापि कुण्डलाद्यनृतविकारसापेक्षभेदाऽभेदयोर्मृषात्वेऽपि, निरपेक्ष-वास्तवकनकैक्याऽक्षतेः । ततस्तवदुक्तसापेक्षभेदाभेदोभयमृषा-त्वात् । स्वतः सिद्धनिरपेक्षवस्तुनः परमार्थसद्रूपस्य भेदोऽसत्त्वं न भवति । तथाविधसर्पभेदाभेदोभयबाधोऽपि, रज्ज्वादिस्वरूपाऽविघा-तदर्शनात् । ननु स्वतोऽभिन्नमपि कनकादिवस्तु, कटकत्वकुण्डल-त्वादिधर्मभेदाद् भिद्यताम् । यथाऽभिन्नोऽपि पुरुषो दण्डी कुण्डली स्रग्वीत्यादिविशेषणभेदाद् भिद्यते । केवले तस्मिन् विशेषणा-न्तरवति च, नायं दण्डीति भेददर्शनात् । स्वात्ममात्रनिरूपिताऽभेद-स्य चाऽन्यप्रयुक्तभेदाऽविरोधित्वेन बाधकाऽभावान्मिथ्यात्वाऽसिद्धे-रितिचेन्न । उक्तधर्मैः कनकादिधर्मिणि तदा भेदः प्रसिध्येद्, यदि तेषां धर्माणां दण्डकुण्डलादिविशेषणानामिव, धर्मिणः कनकादेः सकाशाद्, भिदा प्रमाणसिद्धा भवति । न तु तथा । तेषु कनकाद्य-ऽभेदस्यैव त्वयैवोच्यमानत्वात् ।ननु तर्हि कटकत्वादिजातयः कनका-दत्यन्तभिन्ना एव, तत्समवेताश्च सन्त्विति वैशेषिकाद्या मन्यन्ते इतिचेन्न । यस्माल्लोके गवाश्वादीनां भेदे सति, चन्द्रादिस्वरूपस्या-ऽभेदेपि वा सति, गौरश्वधर्मोऽश्वो गोधर्म इति गवाश्वौ परस्परस्य धर्मिणाविति वा, चन्द्रश्चन्द्रधर्मश्चन्द्रधर्मीति वा, धर्मधर्मिव्यवस्था, धर्मधर्मिव्यवहारः, तद्भावेन स्थितिर्वा नपरिचिता, न क्वचिदपि दृष्टा । तथाच धर्मधर्मित्वमपि विमर्शे प्रमाणाऽगोचरत्वात् प्रति-

योग्यनुयोगिधर्मधर्मिनिरूपणाऽशक्यत्वाद्, भेदवन्मृषैवेति धर्माणां भेदकत्वं दूरापास्तम् ॥

किञ्च, भिन्नैर्धर्मैर्धर्मिण्यन्यो भेद उत्पाद्यते, उत स्वनिष्ठ एवाऽऽसज्ज्यते । नाद्यः । यत् कनकादि वस्तु स्वतोऽभिन्नं भेदरहितं, तत् परतः स्वाऽतिरिक्तकटककुण्डलत्वादि धर्मतो भेदं भजत इति भेदभाग् न भवति, परोत्पाद्यभेदाधिकरणं न भवतीति यावत् । उत्पन्नेन भेदेन स्वाभाविकाऽभेदोपमर्दे कुण्डलादेरकनकत्वप्रसङ्गाद्नुपमर्दे चोत्पत्तुमेवाशक्यत्वात् । किञ्चाभिन्ने वस्तुनि लब्धात्मानौ धर्मौ भेदं जनयेताम्, अलब्धात्मानौ वा, आत्मलाभसमकालमेव वा । आद्ये अभिन्ने वस्तुनि विनापि भेदं यथोत्पत्तिं लभेते, एवं स्थितिमपि लप्स्येते इति भेदजननवैयर्थ्यम् । उत्तरकल्पयोस्तु, अलब्धात्मधर्मयोर्जनकत्वमेवाऽसंभवि । परेषां जन्यभेदाऽसंप्रतिपत्तिश्चेति दूषणत्रयं प्रसरति। द्वितीयेऽपि अन्यस्य भेदादन्यस्तादितरो न भिद्येत। सम्भावनायां लिङ् । एतच्च संभावितम् । न हि घटपटयोर्भेदाद् देवदत्तादि भिद्यते। परभेदस्य परस्मिन्नध्यासमन्तरेणाऽऽसञ्जयितुमशक्यत्वात् । अन्यथाऽभेदमात्रोच्छेदप्रसङ्गात् । एतेन दण्डी कुण्डली इत्यादिविभिन्नविशेषणानामप्यभिन्नपुरुषे भेदकत्वं न सम्भवतीति दर्शितम् । धर्माणां परस्परभेद एव न सिद्ध्यति । दूरे तेषां धर्मिभेदकत्वम् । अभिन्ने धर्मिणा सहाऽभेदाद्धर्माणामपि भेदो नोचित इति ते धर्मा भिन्नाः कथम् !! न कथञ्चिदिति ॥

स्वनिष्ठधर्मभेदादितिचेन्न । तत्राप्याऽऽक्षेपसाम्यादनवस्थापाताच्च । अथवा यदि धर्मभेदाद्धर्मी भिद्यत इति निर्युक्तिकमेवाभ्युपगच्छसि, तर्हि तथैव धर्म्यभेदाद् धर्माणामप्यभेद इति वैपरीत्यमेव किं नाऽभ्युपगच्छेः । धर्मधर्मिणोर्धर्माणां च परस्परं भेदो मिथ्येति, किं वक्तव्यं, यद् घटपटादीनामपि परस्परभेद आश्रयादितत्त्वविमर्शे तथैवेति । सर्वोऽपि भेदः, अभिन्नाश्रयो, भिन्नाश्रयो वा।नाद्यः।व्याघातात् । प्रतियोगितावच्छेदकसामानाधिकरण्यविरोधाच्च । द्वितीये भिन्नः स्वप्रतियोगिप्रतियोगिकाऽन्योन्याभावाऽनाश्रयो यस्य, स तथाविधोऽभ्युपगत इतिचेत्, तत्र पृच्छामः । निरूप्यमाणभेदाऽधिकरणस्य, व्यावर्त्तिका भिदा प्रतियोग्यन्यता निरूप्यमाणभेदेनैव, उत भेदान्तरेण । आद्ये तेन निरूप्यमाणभेदेनैवेतिचेत्तदा आत्माश्रयदोषः।

स्वाधिकरणविशेषनिर्णये, स्वाधिकरणनिर्णयस्य हेतुत्वोक्तिपर्यवसानात्। द्वितीयेऽपि तेनैवेति न, किन्तु भेदान्तरेणेतिचेत् तस्यापि भेदत्वात्। प्रतियोग्यन्यवृत्तित्वस्यावश्यवाच्यतया, पूर्वभेदेन तदधिकरणस्य प्रतियोग्यन्यतोक्तौ, अन्योन्याश्रयः। भेदयोः परस्पराऽधिकरणनिर्णये, परस्पराधिकरणनिर्णयस्य हेतुत्वोक्तिपर्यवसानात्। यदि तु तदधिकरणव्यावर्त्तनाय, तृतीयो भेदोऽभ्युपगम्येत, तदाऽप्यनवस्था। अथवा तद्भिदा दुर्निरूपा। आश्रयविशेषाऽनिरूपणात्। भेद मात्रं तत्त्वतो निर्वक्तुमशक्यमतो मिथ्यैव॥ किञ्च धर्मिताऽवच्छेकविशिष्टधर्मिज्ञानस्य प्रतियोगिताऽवच्छेदकविशिष्टप्रतियोगिज्ञानस्य चाऽभावे भेदबुद्ध्यदर्शनाद् भेदज्ञानस्य तथाविधधर्मिप्रतियोगिविषयकत्वनियमाच्च तस्मिन् धर्मिप्रतियोगिज्ञानं कारणमिति, निर्विवादम्। तत्र तयोरैक्यज्ञाने कुतो न भेदधीः।ऐक्यज्ञानं विरोधीतिचेन्न। प्रत्येकमैक्यज्ञानस्याऽवर्जनीयतया, भेदबुद्धिमात्रोच्छेदापत्तेः। भेदज्ञानात् प्राग् भेदाऽभावत्वतद्व्याप्यत्वादिना ऐक्योपस्थित्यसंभवेन विरोधित्वाऽसंभवाच्च। तस्मादगत्या भेदज्ञाने धर्मिप्रतियोगिनोर्भेदज्ञानं हेतुरित्यवश्यं वाच्यम्। तत्रकारणीभूतज्ञानगोचरो भेदो यदि ग्राह्यभेद एवोच्येत, तर्हि तज्ज्ञाने तज्ज्ञानं कारणमित्युक्तं स्यादित्यात्माश्रयदोपवारणायाऽन्यो वाच्यः।तस्यापि भेदवदेव धर्म्यादिभेदग्रहं विना ग्रहणायोगात् पूर्वभेदज्ञानस्याऽपेक्षणेऽन्योन्याश्रयप्रसङ्गादन्योऽन्यो भेदो वाच्यस्तथाचाऽनवस्थादुर्वारैव॥

अयं प्रसिद्धो भेदो, भिन्नौ यौ धर्मिप्रतिभटौ आश्रयप्रतियोगिनौ तौ विषयौ यस्य तथाविधाज्ज्ञानाज्जातं यज्ज्ञानं, तेन वेद्यो ग्राह्यः। भेदज्ञाने धर्मिप्रतियोगिभेदज्ञानं कारणमिति यावत्। तत्र धर्म्यादेः, आदिपदात् प्रतियोगिनश्च परस्परभेदस्य सिद्धिर्ज्ञानं, पुनरपि पूर्वभेदज्ञानवदेव, तथा धर्मिप्रतियोगिभेदज्ञानाधीना इत्येवंरीत्या अनवस्था स्यात्। परावृत्तावन्योन्याश्रयचक्रकयोरापत्तिः॥

किञ्च, भेदो धर्मिप्रतियोगिभ्यां भेदान्तराच्चाऽभिन्नो, भिन्नो वा। आद्ये वक्ष्यमाणाऽऽत्माश्रयादिदोषभयाद् भेदपदार्थे धर्म्यादेः प्रतियोगिनो भेदान्तराच्च सकाशादभेदे भेदाऽभावे पूर्वोक्तदोषाः। अथवा भेदशून्ये, तदनधिकरणे वा अभ्युपगम्यमाने, भेदबुद्धिर्भेदज्ञानं, मृषा निर्विषया भवति। घटात् पटो भिन्नो भवति इति बुद्धेर्भिन्न इत्यशो

घटपटातिरिक्तविषयाऽनिरूपणात् ॥

किञ्च, प्रतियोग्यभेदे घटशून्यो घटभिन्नो न स्याद्, घटभिन्नो वा घटशून्यो न स्याद्, घटभेदशून्यश्च घटो घटवान्न स्याद्, भेदप्रतियोगी च घटो न स्याद् । अभावविरहात्मत्वाऽभावात् । एवं धर्म्यभेदेऽप्याधाराधेयभावो न स्यात् । घटभेदात्मकपटाद्याश्रयस्य, घटाऽभिन्नत्वापत्तिरभावान्तराऽभेदे तत्तत्प्रतियोग्यवृत्तित्वप्रसङ्गे, निराश्रयत्वापत्तिः । परेषां भेदनिरूपणक्लेशवैफल्यदर्शनात् द्वितीयेऽपि भेदेऽधिकरणे धर्मिप्रतियोगिभ्यां विभेदेऽभ्युपगम्यमाने पूर्वदोषा आत्माश्रयादयः प्रादुःष्युः । तथाहि । भेदनिष्ठो धर्म्यादिभेदः स्वयमेवचेदात्माश्रयदोषापत्तिरभेदेआधाराधेयभावाऽयोगात् । पूर्वकल्पाऽविशेषात् तदुक्तसर्वदोषापत्तिः।सोऽपि भेदो धर्मिप्रतियोगिभिन्नोऽवश्यं वाच्यः । तन्निष्ठधर्मिप्रतियोगिभेदः । तस्याऽधिकरणात्मकत्वे, आत्माश्रयापत्तेरन्यत्वेऽन्योऽन्याश्रयः।अन्यत्वे परावृत्तौ चक्रकापत्तेस्तत्राप्यन्यस्तत्राप्यन्य इत्यनवस्था च । एवं द्वितीयादिभेदेषु पूर्वपूर्वभेदभेदस्यापि । तेषु चोत्तरोत्तरभेदभेदस्य चान्यत्वाऽनन्यत्वादिनाऽऽत्माश्रयाऽन्योन्याश्रयचक्रकाऽनवस्था अपि प्रसञ्जनीयाः । एवमेव घटभेदे पटभेदस्तस्मिँश्च घटभेदश्चाऽऽश्रयाऽनतिरिक्तश्चेत् सर्वभेदानामैक्यापत्तौ जगत एव तत्प्रतियोगितया, तदाश्रयत्वाऽयोगात् । निराश्रयत्वात् सर्वप्रमाणाऽगोचरत्वे अलीकत्वापत्तिः । प्रतियोगिनामेव तदाश्रयत्वाऽभ्युपगमे च घटोऽपि घटभिन्नः, पटोऽपि पटभिन्नो, भेदोऽपि भेदभिन्नः स्यादिति, सर्वं जगदव्यवस्थं मिथ्यैवाऽऽपद्येत । तयोराश्रयातिरिक्तत्वे चान्योन्याश्रयचक्रकाऽनवस्थाः । एवं कुड्यादिभेदे, तयोः स्तम्भादिभेदस्तास्मिन् कुड्यादिभेद इति चक्रकाऽनवस्था । तथा घटे घटभेदभेदस्तद्भेदस्तद्भेद इत्यनवस्था मूलक्षयकरी ॥

एवमभावाऽधिकरणकाऽभावान्तरस्याश्रयाऽभेदेऽत्यन्ताभावेऽपि न्यायसाम्यादैक्यापत्त्या, तस्य प्रतियोग्यधिकरणावृत्तित्वे निराश्रयत्वापत्तिस्तद्वृत्तित्वे तु जगन्मात्रस्य स्वाऽधिकरणनिष्ठाऽत्यन्ताभावप्रतियोगित्वेन मिथ्यात्वापत्तावस्मदभिलषितसिद्धिराश्रयाद् भेदे त्वऽनवस्थाद्यापत्तिः ॥

ननु घटभेदे घटभेद इत्यऽभेदेऽप्याधाराधेयभावः, प्रामाणिकप्रतीतिबलादभ्युपगम्यते । घटे घटभेदभेदस्तद्भेदस्तद्भेदइत्यनवस्था-

ऽपि प्रामाणिकत्वाम्नदोषायेत्यादि परेषां कुशकाशावलम्बनेन परिहारं निरस्यति। अपरा त्वदभ्युपगमलक्षणा गतिरुपपत्तिः प्रतीतेः प्रामाणिकत्वनिर्वाहिका न भवति घटो घटवानिति घटान्तराऽनधिकरण-घटविषयकप्रतीतेरपि प्रामाण्यापत्तेः। यदि तु तादृशघटस्यापि घटात्यन्ताभावाऽधिकरणत्वात्तदभाववति तदवगाहित्वात्साऽप्रमा तर्हि प्रकृते तुल्यम्। प्रतीयमाना अप्यन्ये भेदा नाऽभ्युपगम्यन्ते चेदाद्योऽपि तथास्तु, साधकबाधकयोः साम्यात्। तेन सर्वोऽपि भेदो मृषैव। मिथ्याभूतस्य तु दोषाऽऽकरत्वं भूषणम्॥

एवं भेदस्याऽधिकरणेन सह सम्बन्धस्य दुर्निरूपत्वादपि निरवच्छिन्नस्वसम्बन्धाभाववति प्रतीयमानत्वरूपमिथ्यात्वलक्षणाक्रान्तत्वाद् मिथ्यात्वम्।भेदाधिकरणत्वेनाऽभिमते भूतलादिद्रव्ये गुणादीनां विमर्शो द्रव्याऽनतिरेकात् तेभ्यो द्रव्यस्य प्राधान्याच्च। वस्तुमात्रोपलक्षणत्वेन द्रव्यनिर्देशः। वस्तुमात्रे भेदस्यान्योन्याभावमात्रस्य आधारतानियामको योगः सम्बन्धो भावरूपोऽभावरूपो वा। आद्ये तत्र भावस्वरूपस्तावन्न भवति। सम्बन्धो हि सम्बन्धिभ्यां भिन्नस्तावाश्रितश्चेति सम्बन्धलक्षणाक्रान्तस्यैव तस्यावश्यं वक्तव्यतया, अधिकरणवत् तस्याप्यभावेन सह सम्बन्धान्तरविकल्पनेऽनवस्थानादसिद्धेः। सम्बन्धाऽयोग्यत्वोपपादनाय भेदं विशिनष्टि-चेद् निरूपाख्यस्य, निर्गता धर्मिप्रतियोगिव्यावर्त्तकधर्मव्यतिरेकेण उपाख्या, शब्दप्रत्ययप्रवृत्तिनिमित्तधर्मो यस्य, स्वतोऽध्यासतो वा। व्यावर्त्तकसर्वधर्मशून्यस्य अभावादेव धर्माधारत्वस्याध्यासाधिष्ठानत्वस्य चाऽयोगात्। नच तेजोऽभावेऽन्धकारे, नैल्यचलनाद्यारोपो दृश्यत एवेति, नायं नियम इति वाच्यम्। अन्धकारस्यापि द्रव्याऽन्तरत्वात्। नचैवं सति तत्साक्षात्कारे आलोकसंयोगापेक्षापत्तिः। पेचकादीनां द्रव्यचाक्षुषे ह्यस्मदादीनामालोकचाक्षुषे चाऽऽलोकसंयोगाऽपेक्षाविरहेण तस्याऽसार्वत्रिकत्वात्। न चावश्यकतेजोऽभावेनैव निर्वाहः।अबाधितनैल्यचलनतारतम्यसंख्यापरिमाणसंयोग विभागपृथक्त्वपरत्वापरत्वसंस्कारे जात्यादिगोचरसर्वानुभवसिद्ध-प्रत्यक्षाणां स्वतः संवादतश्च निश्चितप्रामाण्यानां निर्वाहकत्वादावश्यकेन तमोद्रव्येणैव निर्वाहे तेजोऽभावस्यैव काममपलापापत्तेः। नचावयवादिकल्पनादिगौरवम्। अवयवानामप्यनुभवसिद्धत्वात्।

परमाणूनां च पृथिव्यादिष्वपि निरस्तत्वेन, क्वाप्यकल्पनीयत्वात् । अन्यथा तुल्यन्यायेन शीतोष्णस्पर्शयोरन्यतराभावेनैवोपपत्तेरेकस्याऽनुष्णाशीतस्पर्शस्य चापलापापत्तेः । नच पृथिवीवायोरुभयाभावानुभवविरोधः । तप्यमानोदके कदाचिदुभयाभाववदुपपत्तेः । किञ्च प्रौढप्रकाशतेजःसंसर्गाभावस्यैवान्धकारत्वे, घटे घटान्तराऽभाववत् प्रौढप्रकाशकतेजस्यपि तदभावसत्त्वात् सूर्येऽप्यन्धकारव्यवहारापत्तिः । तेजोगतगुणक्रियादिषु तेजःसंयुक्तघटादिसर्वद्रव्यनिष्ठगुणक्रियादिषु चान्धकारप्रत्ययापत्तिः । तत्र प्रौढप्रकाशकतया यावत्तेजःसंसर्गाभावस्य सदैव सुलभत्वादिति यत्किञ्चिदेतत् । द्वितीयेऽपि अभावश्च प्रकृतभेद एवेतिपक्षस्याऽग्रिमस्वरूपपक्षान्तर्भावात्तद्व्यावर्त्तनायान्य इति प्रकृतभेदातिरिक्तोऽभावो भेदतदधिकरणयोर्योगो न कुतः ? समत्वात् । तस्यापि निरुपाख्यत्वेन, भेदतुल्यत्वादधिकरणेन च सह संबन्धाऽयोगात् । एतेन विशेषणता पदार्थान्तरमिति नवीनतार्किकप्रलापो निरस्तः । तस्य भावाभावान्यतरान्तर्भावस्यावश्यवाच्यत्वात् । विशेषणताख्यः स्वरूपसम्बन्धविशेष इति जरत्तार्किकप्रलापमपि निरस्यति । स्वरूपसम्बन्ध इत्यस्य स्वरूपमेव सम्बन्ध इत्यर्थो वा स्वरूपयोः सम्बन्ध इति वा ? । आद्येऽपि तत्तदधिकरणस्वरूपं भेदस्वरूपमुभयस्वरूपं वा, न त्रितयमपि । कुतः ? । अनुभयमिलनात् । उभयाभ्यां सम्बन्धिभ्यां मिलनं सम्बन्ध, उभयमिलनं, तदभावात्, एकैकस्वरूपस्योभयाऽसम्बद्धत्वादुभयस्वरूपस्याप्यसम्बद्धस्यान्यसाधारणत्वादुभयाश्रितत्वाऽभावादनेकत्वाच्च । तेषां सम्बन्धत्वाऽयोगात् । द्वितीयेऽपि, तयोर्भेदतदधिकरणयोर्भावाभावाभ्यामतिरिक्तं किमपि सम्बन्धरूपं नास्ति । तदुभयभिन्नस्यालीकत्वात् । तेनोक्तदोषगणेन, सम्बन्धस्याभावो निःसम्बन्धम् । अर्थाभावेऽव्ययीभावस्याऽद्रुतायामसंहितं, रक्षोहागमलघ्वसन्देहाः प्रयोजनमित्युभयथापि महाभाष्ये प्रयोगेण तत्पुरुषेण सह विकल्पनाद् अव्ययीभावस्तत्पुरुषो वा । अव्ययीभावपक्षे, तृतीयासप्तम्योर्बहुलमिति बहुलग्रहणात् सप्तम्या अम्भावो न । सम्बन्धाभावेऽपि प्रतीतोऽर्थः, प्रतीयमानो भेदो मृषैव । यथा रजतसम्बन्धशून्यायां शुक्तौ प्रतीयमानत्वाद्रजतं मृषा, तद्वद् भेदोऽपि मृषा । अत्र निःसम्बन्धेऽपि तत्र प्रतीयमानत्वं मिथ्यात्वमिति लक्षणप्रदर्शनेन स-

म्बन्धविमर्शे, गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योरवयवा-ऽवयविनोर्विशिष्टकेवलयोरुपादानोपादेययोराधाराधेयप्रभृतीनां च सम्बन्धस्य, भिन्नाऽभिन्नत्वादिना दुर्निरूपत्वात्, सर्वप्रपञ्चस्य मृषात्वे, असङ्गोदासीनमद्वितीयकूटस्थचिन्मात्रवस्त्वेव परमार्थसत्यं शिष्यत इतिवेदान्तपरमासिद्धान्तरहस्यं सूचिततत्त्वदृशां महात्मनां, न तु कुतार्किकाणां पामराणाम् ॥

ननु प्रमाणजन्यप्रतीतिरेव वस्तुतत्त्वसाधिका। सा च घटपटा-ऽऽदीनां भेदं ग्राहयति । नच प्रामाणिकोऽर्थो युक्तिसहस्रेणापलपितुं शक्यः।युक्तीनामपि प्रमाणाऽधीनत्वेनोपजीव्यप्रमाणविरोधे, आभासत्वौचित्यात् । उपपत्तिरहितानामपि पक्षिमत्स्यादेर्निरालम्बनगमन-निरुच्छ्वासजीवनादीनां प्रत्यक्षसिद्धानामप्रत्याख्येयत्वादितिचेन्न । भेदस्यापिप्रमाणानि विमृश्य निराचष्टे । तथाहि । तत्र भेदस्याऽऽद्य-प्रमाणगम्यतां निरस्यति। चक्षुरादीन्द्रियाणां भेदो गोचरो विषयो न भवति । कुतः । संयोगादेर्न्यायनयप्रसिद्धस्य संयोगसंयुक्तसमवाया-देः, भाट्टाऽभिमतसंयुक्ततादात्म्यादेश्च संनिकर्षस्य, निरुपाख्ये त-स्मिन्नयोगात् । नच विशेषणतासंनिकर्षोऽस्ति । तस्याः सम्बन्ध-निरासेनैव, निरस्तत्वात् । तस्मान्न भिदा भेदः प्रत्यक्षस्यगोचरः, नाप्यनुमानस्य। तथाहि। अधिकरणविशेषणाऽसङ्गताया असम्बद्धाया भिदाया इति विभक्तिपरिणामेन, सम्बन्धः, सामानोक्तिर्वा व्याप्ति-रव्यभिचरितसामानाधिकरण्यलक्षणा, स्वाधिकरणनिष्ठात्यन्ताभा-वप्रातियोगिताऽनवच्छेदकभेदत्वाऽवच्छिन्नसामानाधिकरण्यलक्षणा-ऽन्यादृशी वा व्याप्तिः क्वचिदपि वस्तुनि नास्ति, यद्ग्रहात् साऽनु-मीयते । एवं निरुपाख्यत्वादेव, व्यापकतावच्छेदकधर्मशून्यत्वात् प्र-तियोगिताऽधिकरणत्वासम्भवात् प्रतियोग्यनुयोगिभावसंबन्धस्यैव, विमर्शो दुर्वचत्वाच्च, व्याप्तिर्नेत्यपि बोध्यम् ॥

नाप्युपमानस्य । तथाहि । गवादिसदृशे गवयादौ दृष्टे, गो-सदृशो गवय इति अतिदेशवाक्यार्थं स्मरतः प्राग्दृष्टगोपिण्डस्य पुरुषस्योपमितिः प्रसिद्धा। न च निरुपाख्ये भेदे कस्यचित् सादृश्य-मस्ति येनोपमीयेत । एवं वैधर्म्याऽसाधारणधर्मयोरप्याधारत्वा-ऽसंभवात्तत्सिद्धेः प्रमाणगोचरत्वासिद्ध्यधीनत्वाच्च वैधर्म्यासाधारण-धर्माविशिष्टपिण्डज्ञानजन्योपमितिगोचरताऽपि निरसनीया । असं-

निकृष्टे सन्निकृष्टसादृश्यज्ञानमुपमितिरिति भाट्टनयेऽपि, वस्तुतः सदृश एवोपमितिरिति सर्वतो विसदृशी भिदा भेदो न तद्गोचरः ॥

नाऽपि शब्दस्य । तथाहि । प्रत्यक्षादिसिद्धार्थानुवादित्वेन, प्रत्यक्षाद्यगोचरेऽप्रसरात् । दृश्यमानस्य च नीलं नभ इत्यादिवद् भ्रान्तिसिद्धाऽनुवादित्वेनाप्युपपत्तेर्वैदिकशब्दगोचरता न सम्भवति। तथाहि । वैदिकवाक्यस्य तात्पर्यम् ऐदम्पर्यं द्वारं यस्याः सकाशात् सा वाक्यतात्पर्यात् स्वयं दूरा, वैदिकवाक्यतात्पर्यगोचरता, भेदस्य दूरापास्ता । प्रत्युत, नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, एकधैवानुद्रष्टव्यम्, अत्र भिदामिव मन्यमानः, शतधा सहस्रधा जायते, न काचन भिदास्ति, उदरमन्तरं कुरुतेऽथ तस्य भयं भवति, यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति, अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथापशुरेवं स देवानां, सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयं, द्वितीयाद् वै भयं भवति, एक एव हि भूतात्मा भूते भूते व्यवस्थितः * एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ रूपं रूपं प्रतिरूपो बभूव, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, अशब्दमस्पर्शमरूपमव्ययं, ब्रह्मैवेदं सर्वं, पुरुष एवेदं सर्वम्, ईशावास्यमिदं सर्वं, कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते, न निरोधो न चोत्पत्तिर्न बद्धो नच साधकः * न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता, यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा, यदल्पं तन्मर्त्यमित्यादिश्रुतिसहस्रैः प्रत्यगद्वयसन्मात्रतात्पर्यकैः प्रतिषिध्यमानत्वाद् द्वैतस्य । तथापि, मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धनिर्मितमिति प्रलापकर्त्तुर्नास्तिकस्य धूर्तस्य पापिनः पशुतुल्यस्य वेदहृदयाऽनभिज्ञस्य, स्पष्टं द्वेषतां प्रतारकतामावहति ॥

ननु क्रियाकारकफलभेदस्य प्रतिषेधे सर्वप्रमाणप्रमेयव्यवहारोच्छेदः । कर्मकाण्डप्रमाण्यानुपपत्तिर्गुरुशिष्यादिद्वैताऽभावे श्रवणाद्यप्रसिद्धेरुपनिषदामपि प्रवृत्त्ययोगात् प्रामाण्याऽसिद्धिरित्यसंभावनाप्रपञ्चनोक्तदोषाणां कः परिहार इतिचेच्छृणु । लोकसिद्धव्यावहारिकभेदोपजीवनेनैव, सर्वव्यवहारसिद्धिरविद्यद्विषयत्वात् सर्वप्रमाणानाम् । उपपादितं चैतद् भगवद्भिर्भाष्यकारैः । तथाहि । ब्राह्मणो बृहस्पतिसवेन यजेत, राजा राजसूयेन स्वाराज्यकामो यजेत,

वैश्यो वैश्यस्तोमेन यजेत, जातपुत्रः कृष्णकेशोऽग्नीनादधीत, एतया निषादस्थपतिं याजयेदित्यादिश्रुतयो लौकिकवर्णाश्रमवयोऽवस्थादिविशिष्टदेहतादात्म्यमुपजीव्य प्रवृत्ता अपि, नाऽप्रमाणम्। तात्पर्यविषयीभूते यागादिक्रियाफलयोः साध्यसाधनभावेऽविसंवादात्। तथा क्रियाकारकफलभेदं कर्त्तृत्वभोक्तृत्वादिकं च वस्तुतो मिथ्याभूतमपि, लौकिकसर्वानुभवसिद्धमुपजीव्य प्रवृत्ता अपि वर्त्तन्ते। अन्यथा देहात्मवादस्यापि श्रुत्यनुमतत्वेन वस्तुत्वकल्पनाप्रसङ्गात्। नचोपजीव्यविरुद्धार्थं श्रुतिरपि कथं निवेदयेदिति वाच्यम्। तात्त्विकप्रामाण्यांशस्यानुपजीव्यत्वात्, तद्बाधेऽपि व्यावहारिकप्रामाण्यांशस्य बाधनेनतावन्मात्रस्यैवोपजीव्यत्वेनाऽविरोधात्। नच क्रियाकारकफलविभागस्य मिथ्यात्वनिश्चये, कर्मसु श्रवणादौ च प्रवृत्त्यनापत्तिः। प्राक् तन्निश्चयात् प्रवृत्त्युपपत्तेस्तादृशपुरुषान् प्रत्येव शास्त्रप्रामाण्योपपत्तेर्निश्चितात्मतत्त्वं प्रत्यप्रवृत्तावपि कृतकार्यायाः श्रुतेर्वैयर्थ्यस्यानाशङ्क्यत्वात्॥

नाप्यनुपलब्धिः प्रमाणं द्वैतसत्यत्वे। तथाहि। उपलब्धिर्ह्यर्थसद्भावावगाहनान्मानम्। तदभावश्चानुपलब्धिः। सा च न मानं, न प्रमाणम्। न ह्युपलब्धिरर्थं साधयतीति तदभावोऽपि तथेति वक्तुं शक्यम्। चक्षुरादेरर्थग्राहित्वे दृष्टमित्यान्ध्यादेरपि तथात्वकल्पनापत्तेः। नच तस्याः स्वतोऽर्थग्राहित्वाभावेऽपि प्रतियोगितद्व्याप्येतरयावत्प्रतियोग्युपलब्धिसामग्रीसहकृतत्वरूप-योग्यताविशिष्टाया अभावोपलब्धिजनकत्वमस्त्विति वाच्यम्। अननुगतगुरुतरप्रतियोग्युपलब्धिसामग्रीणां कारणतावच्छेदकत्वाऽनुपपत्तेः। अनुपलब्धिविशिष्टप्रतियोग्युपलब्धिसामग्री वा, तद्विशिष्टाऽनुपलब्धिर्वा, सामग्रीघटकैकैककारणानि वा, प्रत्येकं तदितरकारणान्यनुपलब्धिविशिष्टानि, वा, वैपरीत्यं वेत्यत्र विनिगमनाविरहेणाऽभावग्रहे प्रमाणानन्त्यापत्तेरनुपलब्धिमात्रग्राह्यत्वनियमभङ्गापत्तेश्च। किञ्चाऽन्धकारेऽपि घटाभावप्रत्ययापत्तिः। घटालोकसंयोगादेर्घटव्याप्यत्वेन तदितरचक्षुरादिसत्त्वात्। अपिच पिशाचचाक्षुषसामग्र्यप्रसिद्ध्या स्तम्भे पिशाचभेदग्रहाऽनापत्तिः। किञ्चाऽनुपलब्धेरप्यभावतया साऽप्यनुपलब्ध्यन्तरेण सिद्ध्यतीत्येवं वाच्यम्। तथाच साप्यन्यया साप्यन्ययेत्यनवस्थानादनुपलब्धिरेव स्वयं न सिद्ध्यति, दूरे तस्या

अर्थसाधकत्वम्। एतेन प्रतियोगिसत्त्वप्रसञ्जनप्रसाञ्जितप्रतियोगिक-सत्त्वरूपा तद्योग्यताऽपि प्रत्युक्ता। तर्कस्यापाद्यापादकव्यतिरेकनिश्च याधीनत्वेनानुपलब्ध्यग्रहे अयोगात्। तद्ग्रहे चाऽनवस्थानात्। यद्यनवस्थाभयादनुपलब्धिरन्यतः स्वतो वा सिद्ध्यतीत्युच्येत तर्ह्य-भावान्तरमपि तथैव सेत्स्यतीत्यनुपलब्धिकल्पनवैयर्थ्यम्। यदि तु सा साक्षिवेद्या, तर्हि स्वाप्नार्थवति नार्थसाधिका। अभावान्तराणा-मपि तथात्वापत्तिश्चेति त्वदभिलपितभङ्ग एव॥

अर्थापत्त्यादिगोचरताऽपि भेदस्य नास्ति। तथाहि अस्यां भिदायां ह्यर्थापत्तिः प्रमाणं नास्ति। अर्थापत्तेर्व्यतिरेकव्याप्तिग्रहाधी-नत्वेन प्रतियोग्यप्रसिद्धौ व्यतिरेकाप्रसिद्धेः। किञ्च पटे कस्या-ऽनुपपत्त्या घटे भेदः कल्पेत। पटत्वस्येति चेन्न। तस्य भेदाऽवि-नाभावानियामकतज्जन्यत्वादिसम्बन्धाप्रसिद्ध्या तत्कल्पकत्वायो-गात्। घटत्वाभावानुपपत्त्येति चेन्न। समनियताभावानामैक्येन भेदाभावाभावरूपत्वेन च तस्य भेदाव्यतिरेकाद् व्यतिरेकाऽभ्यु-पगमेऽपि भेदसमानयोगक्षेमत्वात्, सोऽपि कस्याऽनुपपत्त्या पटे कल्पेतेति प्रष्टुं शक्यत्वात्। कल्पकाऽपरिचये अर्थापत्त्यप्रसरात्।

नाऽपि सम्भवः प्रमाणं भेदे। तस्य सर्वसंमतत्त्वाऽभावात्। अभ्युपगन्तृणामपि संख्यापरिमाणादिमात्रगोचरत्वप्रसिद्धेरभावग्रा-हकत्वाऽभावात्। एवमुपदेशनिरपेक्षत्वादैतिह्यप्रमाणगोचरताऽपि भेदस्य न सम्भवत्येव॥

तर्हि सा किमलीकैव। तथा सति न भासेतेति शङ्कां वारय-न् साक्षिवेद्यत्वपरिशेषणेन तन्मिथ्यात्वं साधयति।तथाहि। प्रमाणा-ऽगोचरत्वेऽपि प्रत्यक्षाऽपरोक्षत्वेन सर्वाऽनुभवसिद्धा सा विमृष्टा। साधु एषा भिदा मृषैव। यथा स्वप्नदृष्टमैन्द्रजालिकमायोप-दर्शितं नगरं यथा साक्षिमात्रवेद्यत्वान्मिथ्या। तथाच प्रयोगः। भेदो मिथ्या स्वरूपेणाऽविषयत्वे सत्यपरोक्षत्वात् स्वप्नगन्धर्वनगरादिवत्। भेदस्य मिथ्यात्वसाधकयुक्तयः संसर्गाभावेऽपि समाः सुधीभिरूहितुं शक्यन्ते।इत्थं कार्यकारणभेदोऽपि मिथ्यैव ब्रह्मणः सर्वप्रपञ्चकारणत्वं-श्रुत्युपजीवितर्कैः कनककुण्डलन्यायेनापि, स्वप्नदृष्टान्तैश्चासिद्धमेव मिथ्यात्वम्। सर्वप्रपञ्चभेदो निरस्तो मूढकल्पितः। तस्मात्। सिद्धं शुद्धं सच्चिदानन्दाद्वितीयं ब्रह्म सर्वोपनिषदां परमसिद्धा-

न्तभूतम्। वेदहृदयाऽनभिज्ञप्रलापेन, न परमार्थसद् वस्त्वन्यथा भवति। तथाचोक्तं--

नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥
निश्चितं युक्तियुक्तञ्च यत्तद् भवति नेतरद्, इति॥

किञ्च एवमन्योन्याभावलक्षणे भेदे निरस्ते, द्वित्वपृथक्त्वादिरूपस्यापि तस्य निरासे अयमेवावसरः। तत्र वैशेषिकादयस्तावदेवमाहुः। संख्याख्यो गुणः सर्वद्रव्यवृत्तिरेकत्वद्वित्वबहुत्वभेदात् त्रिधा। तत्राऽवयवगतैकत्वैरवयव्येकत्वमनित्यद्रव्येषु यावद्द्रव्यभावि जन्यते। नित्यद्रव्येषु तु तन्नित्यमेव। द्वित्वादौ तु विशेषः। घटद्वये चक्षुरादिसंयोगादयमेकोऽयमेक इत्यपेक्षाबुद्ध्या द्वित्वोत्पत्तिस्ततो द्वित्वाद्वितत्वनिर्विकल्पकमनन्तरमिमौ द्वौ घटाविति विशिष्टवैशिष्ट्यावगाहिसाक्षात्कारो द्वित्वे प्रत्येकवृत्त्येकत्वद्वयमसमवायिकारणं द्रव्यद्वये समवायिकारणमपेक्षाबुद्धिर्निमित्तकारणम्। एवं बहुत्वादावप्यूह्यम्। अपेक्षाबुद्धिनाशाच्च द्वित्वनाशः। अपेक्षाबुद्धिः क्षणचतुष्टयस्थायिनी। एवं पृथक्त्वेऽपि सर्वं बोध्यमिति। तदेतन्निराक्रियते। अपेक्षाबुद्ध्या द्वित्वं जन्यते इत्यसत्। यतो बहिर्भवो बाह्यो घटादिप्रदेशवृत्तिरर्थः सत्यवस्तुरूपोबुद्धिमात्रादिच्छाप्रयत्नकायचेष्टाद्यद्वारकज्ञानान्न भवति नोत्पद्यते। उत्पद्यमानश्च मिथ्यैव स्यात्। तथाच प्रयोगः। द्वित्वादिर्मिथ्या। बुद्धिमात्रजन्यबाह्यार्थत्वाद्। गिरिशिखरे मनोरथपरिकल्पितप्रासादवदिति। एवं स्वाप्नपदार्थवदेकैकपुरुषमात्रग्राह्यत्वादपि तस्य मिथ्यात्वम्। स द्वित्वादिलक्षणोऽर्थो भवन्नपेक्षाबुद्ध्या जायमानत्वेन त्वयाऽभ्युपगम्यमानः, परेषां पुरुषान्तराणां गोचरः प्रत्यक्षः स्यात्। बाह्यसत्यार्थस्यैकपुरुषमात्रग्रहणयोग्यस्य प्रसिद्धेः। तथाविधशुक्तिरजतादेर्मिथ्यात्वप्रसिद्धेश्च। स्वसमानाधिकरणाऽत्यन्ताऽभावप्रतियोगित्वस्वविशेष्यनिष्ठभेदप्रतियोगिताऽवच्छेदकत्वरूपमिथ्यात्वलक्षणयोगादपि द्वित्वादेर्मिथ्यात्वम्। एकैकत्र न द्वित्वमेकैको न द्वौ इति प्रतीतेरेकैकं वस्तु प्रत्येकं न द्वये, द्वित्वशून्यं द्वयभिन्नं वा इति तवाप्यभिमतमेव। एवञ्चेत् प्रत्येकमऽनीलयोर्नीलाविति प्रतीयमाननीलरूपवत् प्रत्येकमनुभयस्वरूपयोरुभयमिति प्रतीतं द्वित्वमपि मिथ्यैव। द्वौ न

द्वौ, द्वयोर्द्वित्वं नास्तीति प्रतीतिर्नास्तीतिचेत् । प्रत्येकमनीलयोर्द्वा- वप्यनीलौ द्वयोरपि नैल्यं नास्तीतिवद् द्वावपि न द्वौ, द्वयोरपि द्वित्वं नास्तीति प्रतीतौ बाधकाभावात् । द्वित्वाभावप्रकारतायां द्वित्वं विशेष्यतावच्छेदकं नेतिचेन्न । नेदं रजतमितिवद्रजतं रजतं नेति, बाधाऽनुल्लेखाद् बाधे क्वाप्यरोपितरूपस्य विशेष्यताऽवच्छे- दकत्वाऽप्रसिद्धेस्तदनपेक्षणात् । किञ्च सति नीले, पाकेन रक्तरूपा- ऽनिष्पत्तेर्व्याप्यवृत्तिगुणस्य, समवायेन गुण त्वव्याप्यजात्या सजा- तीयस्योत्पत्तौ, प्रतिबन्धकत्वमवश्यं वाच्यम् । तथाच सत्येकत्वे समवायेन, द्वित्वाद्युत्पत्त्यनुपपत्तिरेकत्वस्य नाशे तस्य यावद्द्रव्य- भावित्वसिद्धान्तव्याघातः । प्रत्येकमेकत्वप्रत्ययानुपपत्तिश्च । किञ्च यदि प्रत्येकं न द्वित्वं तर्हि क्व द्वित्वम् । द्वयोरितिचेत् किं तद्द्वयम् । द्वित्वान्तरस्य पर्याप्त्यधिकरणं चेदनवस्था । स्वस्यैवचेदात्माश्रयः । स्वाधिकरणविशेषनिश्चये स्वाधिकरणविशेषनिर्णयस्य हेतुत्वा- पत्तेः ॥

अथ केयं पर्याप्तिः । स्वरूपसम्बन्धविशेष इतिचेद्, विशेषणतोक्त- दोषग्रासः । अतिरिक्ताचेत् साऽपि प्रत्येकमसती क्वास्ते । साऽपि द्वयोः पर्याप्ताचेदनवस्थेति न द्वित्वाश्रयसिद्धिः । किञ्च त्वया योग्य- विभुविशेषणगुणानां स्वोत्तरजन्यगुणनाश्यत्वाऽभ्युपगमाद् द्वित्व- समकालोत्पन्नज्ञानेन द्वित्वत्वानिर्विकल्पकेन वा अपेक्षाबुद्धिनाशाऽव- श्यम्भावात् तेन द्वित्वनाशे द्वित्वं सविकल्पकं द्वित्वविशिष्टद्रव्य त्वं वा निर्विषयं स्यात् । तथाच प्रत्यक्षे विषयस्य कार्यसहभावेन, हेतुत्वसिद्धान्तहानिस्तदभाववति तदवगाहित्वात् । द्वावितिप्रत्यक्ष- स्या प्रमात्वापत्तिश्च । पूर्वं द्वित्ववानासीदिति तद्वत्येव तदवगाहन- मितिचेन्न । तस्करापहृतकुण्डले पुरुषेऽसौ कुण्डली पुरस्तादा- स्ते इतिशब्दप्रत्यययोः, प्रामाण्याऽदर्शनात् तदानीं घटवति भूतले पूर्वोत्तरकालयोर्घटाभावत्वमात्रेण घटाऽभाववदिदं भूतलमिति शब्द- प्रत्ययप्रमाणत्वापत्तेस्तुल्यन्याये घटवदिदं भूतलमितिशब्दप्रत्यययो- रप्रमाणत्वापत्तेश्च । प्रातीतिकालिकतत्तदभाववत्तयोरेव प्रमात्वा- ऽप्रमात्वप्रयोजकताया अवश्यं वाच्यत्वात् । तस्य द्वित्वस्य विशिष्ट- प्रथा । सविकल्पकज्ञानं द्वित्वविशिष्टद्रव्यप्रत्यक्षं वा मृषा । निर्विषया अप्रमा स्यात् । अथवा, अपेक्षाबुद्धेर्विनैव प्रमाणं चतुःक्षणाऽव-

स्थानाऽभ्युपगमेऽपि,दण्डकुण्डलयोभयवानिति षष्ठक्षणोत्पन्नज्ञानस्याऽप्रामाण्यं दुर्वारमेव । पञ्चमक्षणेऽपेक्षाबुद्धिनाशने षष्ठक्षेण द्वित्वनाशात्। किञ्च अयमेकोऽयमेक इत्यपेक्षाबुद्ध्या द्वयोरेव द्वित्वं, त्रित्वमित्यादिनियमः कुतः।वैपरीत्यस्यापि दुर्वारत्वात् । समवायिकारणादिसाम्ये कार्यवैलक्षण्यं वा कथम् । नचैकत्वयोर्द्वयं, द्वित्वे त्रयं, त्रित्वे हेतुरिति नियमाद् व्यवस्थेति वाच्यम् । एकत्वे द्वित्वाद्यभावाद् गुणे गुणाऽनङ्गीकारात् । द्वित्वोत्पत्तेः प्राग् द्रव्येऽपि तदभावेन परम्परासम्बन्धेनापि तत्र तस्य दुर्वाच्यत्वात्।अत एव द्वित्वे द्रव्यद्वयं हेतुरित्यपि नोक्तिः।सम्भवाऽभावात् । द्वित्वस्य त्रित्वादिसंख्यामात्रस्य च सङ्करः। आश्रयाऽव्यवस्था,एकत्रैव समवधानमवैलक्षण्यमेकैकस्याऽनेकजात्याक्रान्तता च स्यात्।कारणवैचित्र्यं विना कार्यं वैचित्र्याऽयोगात्।योगे चाऽत्रेदमेवैतज्जातीयमेव । जननीयमिति विनिगमकाऽभावेनैकैकत्रैवाऽनेकवैजात्यशालिद्वित्वत्रित्वादिसमावेशप्रसङ्गाज्जायमानैकसंख्याव्यक्तेरेव लाघवात् । द्वित्वे च, त्रित्वत्वाद्यनन्तवैजात्यकल्पनप्रसङ्गात् । नच तत्तत्प्रागभावव्यवस्थाभेदाभ्यां कार्यव्यवस्थाभेदवैलक्षण्यानीत्युदयनाचार्योक्तं युक्तम्, प्रागभावस्य कार्यवैलक्षण्याप्रयोजकत्वादन्यथा गुणगुणिनोः समानसामग्रीकत्वेऽपि, प्रागभावभेदादेव वैलक्षण्योपपत्तेः । समवायिकारणादिभेदकल्पनस्याऽनुभवविरुद्धपौर्वापर्योत्पत्तिकत्वकल्पनाप्रयासस्य च, नैष्फल्यापत्तेः । सजातीयकारणजन्यघटादीनां नानाद्वित्वादिव्यक्तीनां च प्रागभावभेदाद्, वैजात्यापत्तेः, प्रागभावतद्भेदयोः प्रतियोगितद्भेदसिद्ध्यधीनत्वेनाऽन्योन्याश्रयापत्तेः । प्रागभावाऽनभ्युपगमाच्च । प्रागभावाद् व्यवस्था, आश्रयनियमो, विविधावस्थाव्यवस्थेतिव्युत्पत्तेर्वैलक्षण्यं च न भवति । यत्त्वाहुरेकत्वान्तरसहितैकत्वेन द्वित्वं, द्वित्वसहितैकत्वेन त्रित्वं, तत्सहितचतुष्ट्वमिति । तत्र द्वयोरेव द्वित्वोत्पत्त्यनन्तरं, त्रित्वचतुष्ट्वाद्यापत्तेः । तयोः प्रत्येकमेकत्वस्यापि सत्त्वेन द्वित्वसहितैकत्वस्य तत्रैव सुलभत्वात् । नच द्वित्वाऽसमानाधिकरणैकत्वमेव, तथाविधं त्रित्वहेतुरिति वाच्यम् । द्वित्वान्तराश्रयघटकैकेन सह द्वयोस्त्रित्वव्यवहाराऽनापत्तेः । ननु नानैकत्वाविषयिण्या, अपेक्षाबुद्ध्याऽऽदित्वं द्वित्वतद्व्यक्तिव्यधिकरणैकत्वं चेत्यादि तद्व्यवस्थयैव कार्यव्यवस्थासिद्धिरिति नोक्तदोष इतिचेन्न । अपेक्षाबुद्धेः क्लृप्तिरीदृश्येवा-

ऽस्यां संख्यायां हेतुरितिनिश्चयो नास्ति । उपलक्षणञ्चैतदसमवायिकारणत्वेनाऽभिमतसंख्यानामप्यनिश्चयस्य । तथाहि । अयमेकोऽयमेक इत्येकरूपया द्वित्वम् । अयमेकोऽयमेकोऽयमेक इति वा, इमौ द्वावयमेक इति वा विविधया त्रित्वम् । एवमेकत्वचतुष्कविषयिण्या, इमौद्वावयमेकोऽयमेकइमेत्रयोऽयमेक, इमौ द्वाविमौ द्वाविति च, चतुर्विधया चतुष्टयं च सर्वैरनुभूयत इति नैकतरैव कारणमिति, विनिगमकमस्ति । इत्थं सर्वासामासां साङ्कर्यवैजात्यादिनियामकत्वे, द्वित्वस्यैकरूपस्य सम्भवेऽपि, त्रित्वे वैजात्यद्वयं, चतुष्ट्वे वैजात्यचतुष्टयं, पञ्चत्वे वैजात्याष्टकमित्येवं, क्रमेणोत्तरोत्तरं बहुतरवैजात्यवृद्धिरनुगतत्रित्वत्वाद्युच्छेदश्च स्यात् । एवमेव विनिगमनाविरहाद्, गणितशास्त्रप्रसिद्धगुणनभाजनवैचित्र्यबुद्धीनामपि संख्याज्ञानहेतूनां संख्यावैजात्यप्रयोजकत्वे, द्वित्वादिसर्वसंख्यास्वप्यनन्तवैजात्यानि स्युरिति । एवं तत्तद्द्रव्यसमवेतपूर्वपूर्वसर्वसंख्यानां व्यस्तसमस्तानां स्वस्वन्यूनाधिकसर्वसंख्यासु गुणनभाजनादिवैचित्र्येण प्रत्येकमसमवायिकारणत्वे वैजात्यप्रयोजकत्वे च सर्वसंख्यासु प्रत्येकमनियतानन्तवैजात्यापत्तिः । कारणीभूतद्वित्वाद्यव्यवस्थया, त्रित्वादिष्वव्यवस्थापत्तिश्च बोध्या । नन्वेकमेकत्वस्याप्यनुपपत्तावद्वयं ब्रह्मेतिवदनेकं ब्रह्मेत्यप्यापद्येतेतिचेन्न । तस्येतरनिरपेक्षत्वेन वस्तुस्वरूपत्वात् । न एकत्वं संख्यापरं, संख्येयाऽभावात् ब्रह्मातिरिक्तस्य, नेह नानास्ति किञ्चनेति श्रुत्या निषेधनाच्च । परमाणुतदेकत्वयोर्मानाभावेन कारणपरम्पराभङ्गाज्जन्यैकत्वासिद्धेः । आकाशादेरुत्पत्तिश्रवणान्नित्यद्रव्याऽप्रसिद्ध्या नित्येऽपि तस्मिन् मानाऽभावात् । गुणकर्मादिष्विव सर्वत्रापि वस्तुस्वरूपमात्रावलम्बनेनैवैक्यव्यवहारोपपत्तेः । नचाऽऽश्रयगतसंख्ययैव गुणादिष्वेकत्वादिव्यवहारो न स्वरूपमात्रेणेति साधुः । एकव्यक्तिसमवेतगुणक्रियादिषु एकत्वादिषु चाऽऽश्रयैक्यापत्तौ विनैवाऽऽयासमस्मदिष्टसिद्ध्यापत्तेः । व्यक्त्यनेकत्वाज्जातिसमवायादिषु द्वित्वादिसर्वसंख्याव्यवहारापत्तेरेकव्यक्तिगतरूपरसादिषु द्वित्वबहुत्वव्यवहाराऽनापत्तेश्च । तत्रैकत्वं स्वरूपमेवेति यद्युच्येत तर्हि द्रव्येष्वपि तथैवाऽस्तु । किञ्चाऽऽकाशैकत्वव्यक्तेरेकत्वव्यवहारः किमाश्रयैकत्वव्यक्त्यन्तरादुत स्वतः । आद्ये तस्याप्यन्यतस्तस्याप्यन्यत इत्यन्योन्याश्रयचक्र-

काऽनवस्थाः स्युः । द्वितीये तस्येव घटादीनामपि स्वत एकत्वव्यवहारोपपत्तौ नैकत्वाख्यसंख्या गुणस्वीकारे प्रयोजनं प्रमाणं वास्तीति मूलोच्छेदादपि न द्वित्वादिसिद्धिः।साधकबाधकसाम्यात्। संख्योक्तदूषणानि पृथक्त्वेऽपि तुल्यानि । तस्यापि संख्यावदेवैकपृथक्त्वद्विपृथक्त्वादिभिन्नस्य कारणगतैकपृथक्त्वापेक्षाबुद्ध्यादिजन्यत्वस्य परैरभ्युपगमात् ॥

एतेन बहुतरपतनपरिस्पन्दाश्रयत्वादिसाध्याः परत्वादयः, परास्ता वेदितव्याः ॥

ननु कनककुण्डलयोरन्योन्याभावलक्षणो द्वित्वपृथक्त्वादिलक्षणश्च भेदो मास्तु । तथाप्यधिकरणात्मकाऽभाववादिनां प्रभाकराऽऽदीनां मते इवाऽधिकरणस्वरूपएव भेदोऽस्त्वितिचेन्न । कार्यं घटशरावादिनिदानादुपादानकारणान्मृदादेर्नान्यत् स्वरूपतोऽपि भिन्नं न भवति । कुतः । पृथक् कारणात् पृथग्भावेनाऽनधिगमात् । मृदः पृथक्कृत्य घटादेर्दर्शयितुमशक्यत्वात् । ननु क्षीरोदकयोर्मिलितयोः पृथक्कारणाऽसामर्थ्येऽपि,तत्स्वरूपभेदवदत्राप्यास्त्वितिचेन्न । कार्यस्योपादानऽन्यत्वे सति हि उपादानकारणनिमित्तकारणयोर्वैलक्षण्यं, विभिन्नलक्षणत्वं न सम्भवति । गवाश्वयोरिवाऽत्यन्तभिन्नयोस्तयोरयुतसिद्धिनियामकस्य दुर्वचत्वात् । स्वतादात्म्यापन्नकार्यजनकत्वमुपादानत्वं, स्वातिरिक्तकार्यजनकत्वं निमित्तत्वमित्येवोपादाननिमित्तयोर्लक्षणभेदस्याऽवश्यवाच्यतया भेदाऽभ्युपगमे लक्षणभेदाऽसंभवात् । ननु स्वस्मिन् समवायेन, कार्यजनकत्वमुपादानत्वं, तदन्यसम्बन्धेन, कार्यजनकत्वं निमित्तत्वमित्येव लक्षणमयुतसिद्धिनियामकश्च समवाय एवाऽभ्युपगम्यत इतिचेन्न। समवायाभ्युपगमाच्च साम्यादनवस्थितेरिति बादरायणदर्शितदिशा निरसनीयत्वेनानुपेतादनभ्युपगतात् समवायात्त्वदुक्तलक्षणव्यवस्था न सम्भवत्येव । तथाहि । उपादानोपादेययोर्गुणगुणिप्रभृतीनां च, न तावत्सवायाख्योयः सम्बन्धः सम्भवति। स हि संयोगवदेव सम्बन्धिभ्यां भिन्नस्तावाश्रितश्च वाच्यः । तस्य यद्युभयसम्बन्ध्याऽऽश्रितत्वं संयोगवदेव स्वातिरिक्तसमवायेन कल्पेत तर्हि तस्यापि पूर्वसमवायसाम्यात् । पूर्वसमवायं तत्सम्बन्धिनौ चाऽऽश्रयितुं समवायान्तरपर्येषणायां तस्यापि पूर्वाभ्यां, साम्यमित्यन-

वस्थाप्रसङ्गात् । किञ्च पटादिद्रव्यस्यैकेन समवायेन बहुभिस्तन्तुभिर्गन्धरसादिभिश्च न सम्बन्धत्वसम्भवः । संयोगे तथाऽदर्शनात् । अपिच सत्स्ववयवेष्ववयविनाशस्थले,एकसम्बन्धिनि,नश्यति सम्बन्धो न नष्ट इत्येतदनुभवविरुद्धं, घटध्वंसाधिकरणकपालेषु घटसमवायप्रत्ययापत्तिश्च । तदानीं तेषु तत्समवायो नास्तीतिचेदनपसृतस्यानष्टस्य च तस्य तत्र कुतोऽसत्त्वम् । सत एव तस्य समवायस्तदाधारता,नियामको नेतिचेत् तत्प्रागपि, तस्य कपालेष्वाधारतानियामकसम्बन्धस्य दुर्वचत्वेन पूर्वोत्तरकालयोरविशेषात् । अभावीयविशेषणतानिरासोक्तयुक्तिभिरनवस्थानप्रसक्त्या च विशेषणताविशेष्ययुक्तिसम्भवाऽभावात् । एवं तन्तुषु प्रागसतः पटसमवायस्योत्पत्तिमन्तरेण कथं पटोत्पत्त्यनन्तरमपि सत्त्वं, तत्राऽनागतस्यानुत्पन्नस्य चासतस्तत्र सत्त्वोक्तेरनुभवपथाऽनारोहात् । अत एवोपहसितं वृद्धैः ।

न याति न च तत्रासीदस्ति पश्चान्न चांशवः ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिरिति ॥

अयं च दोषगणो जातिष्वत्यन्ताभाव च बोध्यः । किञ्च यद्येक एव समवायस्तर्हि तन्तुषु घटोऽश्वे गोत्वं, गवि चाश्वत्वमिति रीत्या सर्वेषां समवेतद्रव्यगुणकर्मजातीनां सर्वद्रव्यगुणकर्मसु समवेतत्वात् सर्वस्य सर्वात्मत्वे वस्तुव्यवस्था स्यादिति निष्प्रमाणकाद् दुरवस्थिताच्च समवायान्न लक्षणव्यवस्थासिद्धिः।कार्यस्योपादानाऽन्यत्वाभ्युपगमे दोषान्तरमाह । कर्षादिपरिमितसुवर्णादेः, कार्ये कुण्डलकटकादौ द्रव्यान्तरभूते कारणगुरुत्वेन तत्सदृशगुरुत्वान्तरारम्भादापाद्यमानया द्विगुणगुरुतया मूल्यस्य क्रेतृप्रत्यर्पणीयद्रव्यस्य वृद्धिप्रसङ्गः । द्वैगुण्यं प्रसज्ज्येत । कर्षान्तरसञ्चालिते गुरुत्वमूलद्वैगुण्यदर्शनात् । कारणगुरुत्वस्य, कार्यगुरुत्वेनाऽभिभवान्न द्वैगुण्यप्रत्यय इतिचेदतीन्द्रिये कार्यप्रतिबन्धाऽतिरिक्ताऽभिभवनिरूपणासम्भवाद्विनिगमनाविरहेण परस्परेण परस्परकार्यप्रतिबन्धे पतनादिकार्यस्यैवासम्भवापत्तेः । पतनादिकार्यातिरेकेण तदनुमापकान्तराऽप्रसिद्धेस्तदसम्भवे गुरुत्वप्रत्ययस्यैवोच्छेदापत्तेश्च । नन्वस्तु कनककुण्डलयोरत्यन्ताऽभेदस्तथापि तदभिन्नकुण्डलाद्यवस्थापरिमाणभेदात्तदनुषक्तकनकस्वरूपमपि भिन्नमेवोच्यताम् । अन्यथा

वैचित्र्यबुद्धेर्निरालम्बनत्वापत्तेरवस्थाभेदेऽपि कनकैकाकारप्रत्ययस्तु कनकत्वजात्यैक्यनिबन्धनो भविष्यतीतिचेन्न । पिण्डकुण्डलाद्यवस्थादिभेदात् कनकादिवस्तुभेद उच्यमाने स्थित्युपवेशनाद्यवस्थाभिदया देवदत्तादयो नरा मनुष्याश्च प्रत्येकं प्रतिक्षणं भेदिनो भवेयुः । तथाच देवदत्तस्योपविष्टस्योत्थाने तदवस्थस्य मरणादुत्थितस्य च जन्मत आशौचजातकर्मादिप्रसङ्ग उपाविष्टस्य मरणहेताबुत्थाने इच्छाऽयोगात् सर्वपुरुषाणां स्पन्दनाऽनुपपत्तिश्च । यदि तु तेष्वबाधितप्रत्यभिज्ञाबलादभेदस्तर्हि प्रकृतेऽपि तुल्यम् । अवस्थानां तु भेदाऽभेदादिना दुर्वचत्वेन मिथ्यात्वमेव । एवमाश्रयात् पार्थक्येनोत्पत्तिविनाशनिरवयवत्वसावयवत्वपरिस्पन्दापरिस्पन्दव्याप्तिविच्छित्तिव्यासक्तिपर्याप्तिसांकर्यासांकर्यादिना दुरवधारणस्वभावत्वादावश्यकाऽनुगतोपादानेनैवाऽनुगतकनकादिबुद्धिनिर्वाहाच्च तार्किकाऽभिमतनित्यजातिपदार्थोऽपि निरसनीयः । तत्रापि, न याति न च तत्रासीदितिश्लोकोक्तदोषसाम्यादिति नाधिकरणस्वरूपोऽपि भेदः प्रामाणिक इति सर्वोपादानसन्मात्रवस्त्वैक्यं सिद्धम् ॥

ननु वस्तुनोऽत्यन्ताभेदे कार्यकारणभावप्रत्ययः किन्निबन्धन इतिचेत् । सोऽपि मायिकाऽवस्थाभेदपर्यालोचननिबन्धनो, न वास्तवः । तदन्वयव्यतिरेकाऽनुविधानादिति दर्शयति । तस्मात् संसारः सम्भावनामात्रः प्रत्यगात्मनि तदबोधविजृम्भितः । अत्रार्थे संशयश्चेत् स्यात् प्रत्यग्दृष्ट्या निरीक्ष्यतामिति वार्त्तिकोक्तप्रत्यग्दृष्टिप्रकारोपदर्शनेन निष्प्रपञ्चं सन्मात्रमनुभावयति । तथाहि । पूर्वोत्तरोभयाऽवस्थाऽनुगतं हि मृद्वस्तु प्राक्तनपिण्डावस्थापन्नं कारणमित्युच्यते, पश्चात्तनं घटावस्थापन्नं तु कार्यमिति । तत्र पूर्वतनीं पिण्डावस्थां पश्चात्तनं घटत्वं घटावस्थां च मनसि विमृशतो विभेदेनाऽनुसन्दधानस्य पुरुषस्य वस्तुतो भेदशून्येऽपि मृद्वस्तुनि, अवस्थाद्वयाऽनुषङ्गमपेक्ष्य, हेतुकार्यत्वधीः, कार्यकारणभावलक्षणभेदग्राहिणी बुद्धिः स्यात् । प्राप्तकालतायां लिङ् । एकमुभयाऽवस्थाऽनुगतं मृदमेव मृन्मात्रं स्फुटमवस्थाद्वयविविक्तं परिमृशतः पर्यालोचयतः पुरुषस्य पूर्वोत्तरावस्थयोर्मृद्व्यतिरेकेणाऽसत्त्वप्रतीतेः स्वरूपमात्रनिष्ठे मृद्वस्तुनि चाऽभिन्ने कार्यकारणभावाऽसम्भवाद्धेतुः कारणं नैवास्ति, नास्त्येव । एवं कार्यमपि नास्ति । वास्तवरूपपर्या-

लोचने मायिकरूपतिरोभावात् । यथाऽयं दृष्टान्तस्तद्वन्मायी माया-संवलितः परमात्मा प्रपञ्चस्य पूर्वावस्था, सदेव सोम्येदमग्र आसी-दिति श्रुतेः सर्वप्रपञ्चशून्य एव, न तु सृष्टिकर्तृत्वं, प्रत्यक्षाश्रयत्वं वा सम्भवति । तत्कर्तृत्वे, न निरोधो न चोत्पत्तिः, असङ्गो ह्ययं पुरुषः, चैतन्यस्यैकरूपत्वाद् भेदो युक्तो न कर्हिचिदित्यादिश्रुतिविरोधः स्यात् । सर्वभेदशून्य एव । एतत् सर्वं सत्सम्प्रदायादेव ज्ञायते । स्वतस्तु श्रुत्यर्थाऽन्यथाप्रदर्शनेन प्रलापित्वं मूर्खत्वं च सिद्ध्यति तत्त्वदृशां समक्षे, स्वार्थाद् भ्रश्यति च नरकादिप्राप्तिरपि भवति । तथाचोक्तं भवता—

यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्, इति ॥

तस्मान्मायिकप्रपञ्चश्चोत्तरावस्था । तद्धेदं तर्ह्यव्याकृतमासीत्त-न्नामरूपाभ्यामेव व्याक्रियते इति श्रुतेः । तौ मायिप्रपञ्चौ द्वैतवासना-वासिते मनसि कलयतः प्रतिसंदधानस्य पुरुषस्य । तदेतद् ब्रह्मा-ऽपूर्वमनपरमित्यादिश्रुतेर्वस्तुतः कार्यकारणभावनिर्मुक्तमपि ब्रह्म जग-तो हेतुधीरपि स्यात् । वस्तुतो मायिप्रपञ्चयोः सर्वानुगतसद्वस्त्व-ऽव्यतिरेकात् सदैवैकरूपं सच्चिदानन्दघनं ब्रह्मैव पटु द्वैतवासना-नास्कन्दितं यथा स्यात्, तथा परिमृषतो हि सर्वत्र पश्यतः पुरुष-धौरेयस्य मायी मायाविशिष्टो जगत्कारणं नास्त्येव । तथा जगदपि-नास्त्येव । मायिप्रपञ्चयोः सदविचारमात्रसिद्धत्वेन, विचारपूर्वक-दर्शने सत्येव तिरोधानात् । यथाहुः—

दन्तिनि दारुविकारे दारु तिरोभवति सोऽपि तत्रैव ।
जगति तथा परमात्मा परमात्मन्यपि जगत्तिरोभवतीति ॥

श्रुतिरपि, कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते, मनसैवेद-माप्तव्यं, नेहनानास्तिकिञ्चन पूर्णमदः पूर्णमिदमित्यदौ तदेव बोध-यतीति ॥

ननु यदि ब्रह्मैव सत्यमितरत् सर्वमनृतं तर्हि कथं जगति सत्य-ताप्रतीतिरितिचेत् । देहादावात्मताप्रत्ययवत् सत्पदार्थे जगदध्या-सात्तद्धर्मेणैव तथा प्रतीतिरिति लौकिकदृष्टान्तेन बोधयति । सन् कुम्भइतिमृत्सत्तैव कुम्भसत्ता । ननु घटशरावादौ, मृन्मृदित्यनुगत-प्रत्ययवज्जगति प्रतिवस्तुनो ब्रह्माऽनुगतिः प्रतीयते । तत्प्रतीतौ जाड्य-

दुःखानुभवविरोध इतिचेद् विरुद्धाचित्सुखरूपानुगमादर्शनेऽप्यध्यस्त-रूपाविरुद्धसत्तांशानुगतिर्दृश्यत एव। यथा घटः सन् कुशूलं सत् एव मखिलं जगत्सत्यमितिवत् सर्वत्रैकं सद्रूपं भाति। यच्च सृष्टेः प्राक् सदेव सोम्येदमग्र आसीत् तद्धेदं तर्ह्यव्याकृतमासीदात्मा वा इदमेक एवाग्र आसीत्, अहमेकः प्रथममासं वर्त्तामि च भविष्यामिचेत्यादि-श्रुतिर्नित्यसत्ताबोधकेनाऽस्धातुना सदेकस्वभावं वस्तु श्रुतम्। तदेव मायिप्रपञ्चोभयानुगतमुभयाधिष्ठानरूपं सत्यम्। तदेव मृत्तिका-कुम्भस्थालीशरावादिस्वकार्यजातमिव कृत्स्नं प्रपञ्चं व्याप्यावभाति। तर्हि मृदिव किं ब्रह्मापि सविकारम्?। नेति। सद्रूपे ब्रह्मणि निखिल-मपि जगदध्यस्तम्। रज्जुगतऋजुवक्रतादेस्तदध्यस्तसर्पे इव विवर्त्ते-ऽप्यन्यथाभावप्रतीतिरूपे स्वरूपाऽपरित्यागेन सत्याधिष्ठाने जगत्। तत्सत्तानुवृत्तिदर्शनात्। तद् ब्रह्मैव, तद्व्यतिरेकेण जगन्नास्तीत्य-ऽद्वितीयसद्वस्तुसिद्धिः। सद्रूपादन्यत्वे इदमखिलं जगदसत् स्यात्। सतः अभेदे तु सदैकरूप्याद् ब्रह्मैव जगत् सम्पन्नम्। तत एवा-ऽद्वितीयसन्मात्ररूपलक्ष्यासिद्धिः। तथाच ब्रह्मैवाऽद्वितीयं पारमार्थिकं सत्यम्। द्वैतं तु मिथ्यैवेत्यत्र सहस्रशः श्रुतिस्मृतिपुराणादिवाक्या-नि सन्ति। तथाहि—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥

सर्वं खल्विदं ब्रह्म, पुरुष एवेदं सर्वं, ब्रह्मैवेदं सर्वम, आत्मैवेदं सर्वं, नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, न काचन भिदास्ति, ॐमित्येतदक्षरमिदं सर्वं, स एवाध-स्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उतरतः स एवेदं सर्वम्, अहमेवाऽधस्तादहमेवोपरिष्टादहं पश्चादहं पुर-स्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वम्। आत्मैवाऽधस्ताद् आत्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वम्। एतद् ब्रह्मैतत्सर्वम्। नारायण एवेदं सर्वम्। सच्चि-दानन्दरूपमिदं सर्वम। सत्तामात्रं हीदम्।

स एव सर्वं यद् भूतं यच्च भव्यं सनातनम्।

स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः ॥

स्वयं विश्वमिदं सर्वं स्वस्मादन्यं न किञ्चन । ईशावास्यमिदं सर्वम् ॥

शिवो गुरुः शिवो वेदः शिवो देवः शिवः प्रभुः ।
शिवोऽस्म्यहं शिवः सर्वं शिवादन्यं न किञ्चन ॥

मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् । जगत्त्रयमिदं सर्वं चिन्मात्रं स्वविचारतः ॥

भववर्जितचिन्मात्रं सर्वं चिन्मात्रमेव हि ।
यत्किञ्चिद्यच्च किञ्चिच्च सर्वं चिन्मात्रमेव हि ॥
अखण्डैकरसं सर्वं यद्यच्चिन्मात्रमेव हि ।
भूतं भव्यं भविष्यच्च सर्वं चिन्मात्रमेव हि ॥
ज्ञाता चिन्मात्ररूपश्च सर्वं चिन्मात्रमेव हि ।
यच्च यावच्च दूरस्थं सर्वं चिन्मात्रमेव हि ॥
आत्मनोऽन्या गतिर्नास्ति सर्वमात्ममयं जगत् ।
आत्मनोऽन्यत्तुषं नास्ति, सर्वमात्ममयं जगत् ॥
सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम् ।
सर्वं च खल्विदं ब्रह्म, सर्वमात्मेदमाततम् ॥
न त्वं नाहं न चान्यं वा सर्वमात्मेदमक्षतम् ।
न तदस्ति न यत्राहं न तदस्ति न मन्मयम् ॥
भ्रान्तिरभ्रान्तिर्नास्त्येव सर्वं ब्रह्मैव केवलम् ।

न देहो न च कर्माणि सर्वं ब्रह्मैव केवलम् ।
जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् ॥
सर्वं प्रशान्तमजमेकमनादिमध्य-
माभास्वरं स्वदनमात्रमचैत्यचिह्नम् ।
सर्वं प्रशान्तमितिशब्दमयी च दृष्टि-
र्बोधार्थमेव हि मुधैव तदोमितीदम् ॥

न तु तद्द्वितीयमस्ति । सर्वं विकारजातं मायामात्रम् । नास्ति द्वैतं कुतो मर्त्यम् ॥

प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥
विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित् ।

उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥
द्वितीयकारणाऽभावादनुत्पन्नमिदं जगत् ।
यथैवेदं नभः शून्यं जगच्छून्यं तथैव हि ॥
इदं प्रपञ्चं नास्त्येव नोत्पन्नं नोत्थितं जगत् ॥
सर्वं शशविषाणवत् ॥
चित्तं प्रपञ्चमित्याहुर्नास्ति नास्त्येव सर्वदा ।
मायाकार्यादिकं नास्ति माया नास्ति भयं न हि ॥
परं ब्रह्माहमस्मीति स्मरणस्य मनो न हि ।
बन्ध्याकुमारवचने भीतिश्चेदस्त्विदं जगत् ॥
मृगतृष्णाजलं पीत्वा तृप्तश्चेदस्त्विदं जगत् ।
शशशृङ्गेण नागेन्द्रो मृतश्चेज्जगदस्ति सत् ॥
गन्धर्वनगरे सत्ये जगद् भवति सर्वदा ।
गगने नीलिमासत्ये जगत् सत्यं भविष्यति ॥
ज्ञानिनो हृदयं मूढैर्ज्ञातश्चेदस्त्विदं जगत् ।
सर्वदाभेदकलनं द्वैताद्वैतं न विद्यते ॥
नास्ति नास्ति जगत्सर्वं गुरुशिष्यादिकं न हि ।
सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ॥
चैतन्यस्यैकरूपत्वाद् भेदो युक्तो न कर्हिचित् ।
जीवत्वं च मृषा ज्ञेयं रज्ज्वां सर्पग्रहो यथा ॥
घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ।
जगन्नाम्ना चिदाभाति नास्ति नास्ति हि सर्वदा ॥
अनात्मेति प्रसङ्गो वा अनात्मेति मनोऽपि वा ।
अनात्मेति जगद्वापि नास्त्यनात्मेति निश्चिनु ॥
चिदिहास्मीति चिन्मात्रमिदं चिन्मात्रमेव हि ।
चित्त्वं चिदहमेते च लोकाश्चिदिति भावय, इत्यादिश्रुति-
सिद्धमद्वैतम् ॥

भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।
आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥
ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
स एव सर्वो भुवनैकरूपो यदस्ति यन्नास्ति च विप्रवर्य, इति
महाभारते ॥

एकः समस्तं यदिहास्ति किञ्चित् तदुच्यते नास्ति परं तदन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥
यमेनोक्तम्—
सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान् विहाय दूरात् ॥
यथाह वसुधा सर्वं सत्यमेतद्दिवौकसः ।
अहं भवो भवन्तश्च, सर्वं नारायणात्मकम् ॥
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसत्यं कः करिष्यति इति विष्णुपुराणे ॥
विष्णोरन्यं न पश्यन्ति येऽमी ब्राह्मणमेव च ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेऽशुचौ ॥
ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः ।
ब्रह्माणं च तथा तेषां भ्रूणहत्यासमं त्वघम् ॥
आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् ।
त्वत्तः सर्वमभूद् विश्वं त्वयि सर्वं प्रतीयते ॥
अहं त्वं सर्वगो देव त्वमेवाऽहं जनार्दन ।
आवयोरन्तरं नास्ति सर्वैरर्थैर्जगत्त्रये ॥
न तदस्ति विभो देव यत्ते विरहितं क्वचित् ।
यदासीद्वर्त्तते यच्च यच्च भावि जगत्पते ॥
सर्वं त्वं देवदेवेश विना किञ्चित्त्वया न हि ।
यदस्ति यद् भाति तदात्मरूपं नान्यत्ततो भाति नचान्यदस्ति ॥
स्वभावसंवित्प्रतिभाति केवला ग्राह्यं ग्रहीतेति मृषा विकल्पः ।
यदकारणकं भाति भानं तन्नैव किञ्चन ॥
तत्तथा परमार्थेन परमार्थः स्थितोऽनघ ।
चिदेव पञ्चभूतानि चिदेव भुवनत्रयम् ॥
विज्ञातमधुना सम्यगहमेव चिदेव हि ।
अयं प्रपञ्चो मिथ्यैव, सत्यं ब्रह्माहमद्वयम् ॥
अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा ।
साकारमनृतं विद्धि निराकारं निरन्तरम् ॥
एतत्तत्त्वोपदेशेन न पुनर्भवसम्भवः ।
पञ्चभूतात्मकं विश्वं मरीचिजलसंनिभम् ॥

कस्याप्यहो नमस्कुर्यामहमेको निरञ्जनः ।
आत्मस्वरूपश्च कथं समाधिरनात्मरूपश्च कथं समाधिः ॥
अस्तीति नास्तीति कथं समाधिर्मोक्षस्वरूपं यदि सर्वमेकम् ।
दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ॥
सम्पन्नं चेत्तदा तात परा निर्वाणनिर्वृत्तिः ।
आत्मा नित्यो हि सद्रूपो देहोऽनित्यो ह्यसन्मयः ॥
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ।
रज्ज्वज्ञानात् क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी ॥
भाति तद्वच्चितिः साक्षाद् विश्वाकारेण केवला ।
उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते ॥
तस्मात् सर्वप्रपञ्चोऽयं ब्रह्मैवास्ति न चेतरत् ।
व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् ॥
इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ।
दोषोऽपि विहितः श्रुत्या मृत्योर्मृत्युं स गच्छति ॥
इह पश्यति नानात्वं मायया वञ्चितो नरः ।
सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम् ॥
ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत् ।
स्वल्पमप्यन्तरं कृत्वा जीवात्मपरमात्मनोः ॥
यः संतिष्ठति मूढात्मा भयं तस्याऽभिभाषितम् ।
यस्मिन् सर्वाणि भूतानि ह्यात्मत्वेन विजानतः॥
न वै तस्य भवेन्मोहो न च शोकोऽद्वितीयतः ।
अनुभूतोऽप्ययं लोको व्यवहारक्षमोऽपि सन् ।
असद्रूपो यथा स्वप्न उत्तरक्षणबाधतः ॥
स्वप्नो जागरणेऽलीकः स्वप्नेऽपि जागरो न हि ।
द्वयमेव लये नास्ति लयोऽपि ह्युभयोर्न च ॥
त्रयमेव भवेन्मिथ्यागुणत्रयविनिर्मितम् ।
अस्य द्रष्टा गुणातीतो नित्यो ह्येकश्चिदात्मकः ॥
यद्वन्मृदि घटभ्रान्तिं शुक्तौ वा रजतस्थितिम् ।
तद्वद् ब्रह्मणि जीवत्वं वीक्षमाणो, नपश्यति ॥
यथा मृदि घटो नाम कनके कुण्डलाभिधा ।
शुक्तौ हि रजतख्यातिर्जीवशब्दस्तथा परे ॥

यथैव शून्ये वेतालो गन्धर्वाणां पुरं यथा ।
यथाकाशे द्विचन्द्रत्वं तद्वत् सत्ये जगत्स्थितिः ॥
यथा तरङ्गकल्लोलैर्जलमेव स्फुरत्यलम् ।
पात्ररूपेण ताम्रं हि ब्रह्माण्डौघैस्तथात्मता ॥
घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ।
जगन्नाम्ना चिदाभाति ज्ञेयं तत्तदभावतः ॥
घटत्वेन यथा पृथ्वी पटत्वेनैव तन्तवः ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥
कनकं कुण्डलत्वेन तरङ्गत्वेन वै जलम् ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥
ज्ञानज्ञेयप्रभेदेन यथा स्वाप्नं प्रतीयते ।
विज्ञानमात्रमेवेदं तथा जाग्रच्चराचरम् ॥
तन्तोर्भेदे पटो यद्वच्छून्य एव स्वरूपतः ।
आत्मनोऽपि तथैवेदं भानमात्रं चराचरम् ॥
भागवते—
दृष्टं श्रुतं भूतभवद्भविष्यत् स्थास्नुश्चरिष्णुर्महदल्पकञ्च ।
विनाच्युताद् वस्तुतरां न वाच्यं स एव सर्वं परमार्थभूतः ॥
न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् ।
पूर्वापरं बहिर्यस्य जगतो यो जगच्च यः ॥
यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ।
अविद्ययाऽऽत्मनि कृते इति तद् ब्रह्मदर्शनम् ॥
ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥
यथा हिरण्यं स्वकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥
न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् ।
भूतं प्रसिद्धं च परेण यद्यत्तदेव तत् स्यादिति मे मनीषा ॥
अविद्यमानोऽप्यवभासते यो वैकारिको राजसर्ग एषः ।
ब्रह्म स्वयञ्ज्योतिरतो विभाति ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥
अर्थे ह्यविद्यमाने हि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ।
स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥
ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ।
आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥
ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् ।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा ॥
सर्वभूतेषुयेनैकम्भावमव्ययमीक्ष्यते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥
यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥
आत्मैव केवलं सर्वं भेदाभेदो न विद्यते ।
तत्त्वमस्यादिवाक्यैश्च स्वात्मा हि प्रतिपादितः ॥
नेति नेति श्रुतिर्ब्रूयादनृतं पाञ्चभौतिकम् ॥
सर्वं जगद्विद्धि निराकृतीदं सर्वं जगद्विद्धि विकारहीनम् ।
सर्वं जगद्विद्धि विशुद्धदेहं सर्वं जगद्विद्धि शिवैकरूपम् ॥
आत्मा साक्षी विभुः पूर्ण एको मुक्तश्चिदक्रियः ।
असङ्गो निस्पृहः शान्तो भ्रमात् संसारवानिव ॥
यथा न तोयतो भिन्नास्तरङ्गाः फेनबुद्बुदाः ।
आत्मनो न तथा भिन्नं विश्वमात्मविनिर्गतम् ॥
तन्तुमात्रो भवेदेव पटो यद्वद्विचारितः ।
आत्मतन्मात्रमेवेदं तद्वद्विश्वं विचारितम् ॥
श्रीहर्षमिश्रप्रणीतखाद्यखण्डनरीत्यापि भेदो मिथ्यैव ॥
किं जीवब्रह्मणोर्भेदे मानमस्ति न वाऽथवा ॥
नचेत् सिद्ध्येत् कथं भेदो दर्शनीयमथास्ति चेत् ॥ १ ॥
नाहं ब्रह्मेतिचेन्मानं प्रत्यक्षं तन्निशम्यताम् ॥
शुद्धचिन्मात्रयोर्भेदे मानं नोपाधिभेदकम् ॥ २ ॥
अहङ्कारं परित्यज्य जीवोपाधिं निरीक्ष्यताम् ॥
जीवो ब्रह्मास्ति तद्भिन्नो वेति वैदिकचक्षुषा ॥ ३ ॥
यद्यल्पज्ञत्वधर्मादीन् स्वान् विलोक्य तथेश्वरान् ॥
सर्वज्ञत्वादिकान् धर्मान् भेदं ब्रूषे त्वमेतयोः ॥ ४ ॥
तथापि नो वयं ब्रूमः सार्वज्ञादिविशिष्टयोः ॥

अद्वैतं येन तद्बुद्धा श्रुतिः स्वार्थं न साधयेत् ॥ ५ ॥
अल्पज्ञत्वादिकान् धर्मान् स्वान् विहाय तथेश्वरान् ॥
सर्वज्ञत्वादिकाँस्त्यक्त्वा ह्यभेदः साध्यतां तयोः ॥ ६ ॥
द्वासुपर्णादिवाक्येभ्यो भेदश्चेन्न स युक्तिभाक् ॥
द्वैताऽनुवादतस्तेषामद्वैतैकपरत्वतः ॥ ७ ॥
किञ्च भेदं वदन् वादी प्रष्टव्योऽत्राधुना मया ॥
प्रतीचो ब्रह्मभिन्नं वा ब्रह्म तद्भिन्नतां गतम् ॥ ८ ॥
आद्ये ब्रह्माऽनृतं दुःखं जडं वापि भवेद् ध्रुवम् ॥
प्रातिलोम्येन दुःखादेरञ्जनो भिद्यते यतः ॥ ९ ॥
द्वितीये देहबुद्ध्यादेर्हेतुः प्रत्यङ् न सम्भवेत् ॥
न भवेच्च तथा व्यापीत्यात्मनोऽनर्थमाविशेत् ॥ १० ॥
किञ्च भेदस्य धर्मी स्याद्भिन्नो वाऽभिन्न एव वा ॥
भिन्नश्चेत् केन भेदेन स्वेन वाऽथ परेण वा ॥ ११ ॥
स्वेन भेदेन भिन्नत्वे स्फुटमात्माश्रयो मतः ॥
स्वस्यै वाव्यवधानेन स्वापेक्षित्वात् स्वसंस्थितौ ॥ १२ ॥
भेदेनान्येन भिन्नत्वे त्वन्यस्याप्यस्य संस्थितिः ॥
वक्तव्या भिन्न एव स्यान्नाभिन्ने व्याहतत्वतः ॥ १३ ॥
सत्यवं केन भेदेन भिन्न इत्यपि कथ्यताम् ॥
स्वेन चेत् पूर्ववत्तर्हि दोषोऽत्रात्माश्रयो भवेत् ॥ १४ ॥
भेदेनान्येन भिन्नत्वे स्यात्तथाऽन्योन्यसंश्रयः ॥
चक्रकं च तृतीयेन तथान्येनानवस्थितिः ॥ १५ ॥
अथेयमनवस्थाऽपि सोढव्या चेत्तदा वद ॥
किं क्रमेणाऽसकृद्वैषां भेदानां धर्मिणि स्थितिः ॥ १६ ॥
आद्ये भेदप्रवाहस्यानन्तस्य स्यादवस्थितिः ॥
कथं सान्तपदार्थेषु स्थितौ चानन्तता भवेत् ॥ १७ ॥
उत्तरोत्तरभेदेन भेदव्यवहृतेः क्षयात् ॥
प्रागलोपश्च भवेद् दोषः प्रमाणापगमस्तथा ॥ १८ ॥
तथाऽक्रमिकपक्षेऽपि केन भेदेन धर्मिणि ॥
भिन्ने चावस्थितिः कस्य स्यादत्राऽविनिगम्यता ॥ १९ ॥
दुष्टत्वात् सर्वथैवेवं भेदस्य ब्रह्मजीवयोः ॥
परिशेषादभेदः स्यात्तयोर्वेदप्रचोदितः ॥ २० ॥

एवं घटपटादीनां भेदादौ खण्डनोक्तयः ॥
अद्वैतमतसिद्ध्यर्थं प्रचार्य्यन्तां तथाविधाः ॥ २१ ॥
घटादस्मात् पटो भिन्नः किञ्चैतद् भेदसाधकम् ॥
प्रत्यक्षं साधयेद् भेदं शुद्धं संसृष्टमेव वा ॥ २२ ॥
नाद्यो भेदस्य धर्म्यादिघटितत्वान्निरन्तरम् ॥
द्वितीयेऽपि च वक्तव्यं कीदृशस्तद्ग्रहक्रमः ॥ २३ ॥
ज्ञात्वा घटपटौ पूर्वं तद्भेदो गृह्यते ततः ॥
यद्वा भेदं गृहीत्वैवं गृह्येते तावनन्तरम् ॥ २४ ॥
अन्त्ये दोषः पुरैवोक्तो वाद्यपक्षेऽपि कथ्यताम् ॥
भानं कीदृशयोरस्ति तयोर्भेदप्रसाधकम् ॥ २५ ॥
स्वरूपेणैव चेत्तर्हि ज्ञायतां क्षीरनीरयोः ॥
मिथःसङ्कीर्णयोर्भेदः स्वरूपेण च भातयोः ॥ २६ ॥
धर्मित्वादिस्वरूपेण वा घटत्वादिना यदि ॥
भानं निरूपयेद् भेदं तदा चान्योन्यसंश्रयः ॥ २७ ॥
भेदव्यवस्थितौ सत्यां धर्मित्वादेर्व्यवस्थितिः ॥
धर्मित्वादेर्व्यवस्थायां ततो भेदो भवेदिति ॥ २८ ॥
यौगपद्येन चेद् भेदं घटं चैव पटं तथा ॥
त्रीनेतान् बोधयेन्मानं प्रत्यक्षं ते तदा वद ॥ २९ ॥
असंसृष्टतयाऽन्योन्यमङ्गुलित्रयवद् भवेत् ॥
भानमेषां त्रयाणां वा किं संसृष्टतयाऽथवा ॥ ३०
आद्ये घटः पटो भेद इत्येवंरूपता भवेत् ॥
प्रत्यक्षस्यास्य न स्याच्च पटो भिन्नो घटादिति ॥ ३१ ॥
संसृष्टत्वेन भानेऽपि घटादेर्ज्ञानपूर्वकम् ॥
भेदज्ञानं भवेत् किं वा तद्भेदज्ञानपूर्वकम् ॥ ३२ ॥
वज्रलेपायते दोषः पुरोक्तः पक्षयोर्द्वयोः ॥
तस्माद् द्वैताऽऽग्रहं त्यक्त्वा चिन्तनीयं सदाऽद्वयम् ॥ ३३ ॥
भिन्नौ घटपटौ चैतद्यन्मानं द्वैतसाधकम् ॥
तच्च घटपटद्वैतं साधयेत् स्वात्मनो न च ॥ ३४ ॥
तथाच श्रुतिरद्वैतबोधिका मानमेययोः ॥
अभेदद्वारतो धावेदभेदेऽपि प्रमेययोः ॥ ३५ ॥
मानान्तरेण चेत् सिद्ध्येन्मानमेयोभयोर्भिदा ॥

तदानवस्थितिर्यद्वा काप्यन्तेऽभेद इष्यताम् ॥ ३६ ॥
तस्मात् केनापि मानेन भेदः सेद्धुं न चार्हति ॥
ज्ञात्वैतदन्ततोऽद्वैतं श्रुत्युक्तं परिचिन्त्यताम् ॥ ३७ ॥
श्रुत्याऽद्वैते सुनिर्णीतेऽभयो भवति मानवः ॥
द्वितीयाद् वै भयं यस्माद् भवत्येतत् सुनिश्चितम् ॥ ३८ ॥
शोकमोहाम्बुधिं तीर्त्वा सुखसिन्धौ स्व आत्मनि ॥
प्रतिष्ठामचलां प्राज्ञो विन्दते ध्यानतत्परः ॥ ३९ ॥
इति खाद्यखण्डनरीत्याऽपि भेदमिथ्यात्वम् ॥

अथ संक्षेपेण वेदान्तदर्शनस्य षोड़शपादार्थोऽपिनिरूप्यते, तथाहि। समन्वयाध्यायस्य प्रथमे जिज्ञासाधिकरणे, ब्रह्म जिज्ञासितव्यमित्युक्तं, किं लक्षणं तद् ब्रह्मेत्याकाङ्क्षायां, द्वितीयाधिकरण सूत्रं, "जन्माद्यस्ययत इति" अस्य जगतो नामरूपाभ्यां व्याकृतस्य, कर्त्तृभोक्तृ संयुक्तस्य, मनसाप्यचिन्त्यरचनारूपस्य, यतः सर्वज्ञात्सर्वशक्तेः सर्वाधिष्ठानान्मायोपहितात्कारणाज्जन्मस्थिति भङ्गं भवति, तद् ब्रह्मेति द्वितीयाधिकरणार्थस्तत्रहेतु भूतं, तृतीयाधिकरणं, "शास्त्रयोनित्वादिति" ऋग्वेदादिशास्त्रस्याऽनेकविद्यास्थानोपबृंहितस्य, देवतिर्यङ्मनुष्यवर्णाश्रमादिव्यवहारहेतोः, सर्वार्थावद्योतिनः, सर्वज्ञकल्पस्य, श्वासादिवत्कारणत्वात्, तस्मादेव वेदादेः प्रादुर्भावः। किंवा शास्त्रं हितशासकत्वाद् वेद वेदान्ताद्येव, कारणं यस्य ब्रह्मात्मैक्यानुभवेऽसाधारणं, यथावत्स्वरूपानुभवे, तद् ब्रह्म सच्चिदानन्दाऽद्वितीयमिति तृतीयाधिकरणार्थः। पुनस्तत्रैव हेतुत्वेन, चतुर्थाधिकरणं, " तत्तुसमन्वयादिति " तदेव शुद्धसच्चिदानन्दाऽद्वितीयं वेदान्तशास्त्रादेवाऽवगम्यते, तदेवचमायोपाधित्वेन, जगज्जन्मादिकारणं तदपि वेदान्तादेवनिश्चीयते, कथं समन्वयात् सर्वेषु वेदान्तेषु वाक्यानि परमतात्पर्येणतस्यार्थस्यैव प्रतिपादकत्वेन समनुगतानि, सर्वे वेदान्ता अखण्डार्थमेव प्रतिपादयन्ति न संसर्गविशिष्टं वेति यावत्। तद्बोधनार्थमेव जगज्जन्मादिकारणञ्च सर्वज्ञं सर्वशक्तिञ्चेति ब्रह्मबोधयन्तीति चतुर्थाधिकरणार्थः। एकमेवाऽद्वितीयं सर्वभेदपारमार्थिकशून्यंब्रह्मेति वेदान्तदर्शनार्थः। एवं चतुःसूत्र्यां चतुर्भिरधिकरणैर्ब्रह्मणएव सर्वज्ञत्वेन सर्वशक्तित्वेन जगत्कारणत्वेन, सर्वाधिष्ठानतयाच, परमसत्यत्वेनिश्चिते, तद्विज्ञा-

नार्थं समित्पाणिः सगुरुमेवाभिगच्छेच्छ्रोत्रियं ब्रह्मनिष्ठमितिश्रुतेः प्रामाण्यात्तङ्गत्वा,विधिवद्वेदान्तवाक्यैरेव विवेकवैराग्यादिसाधनचतुष्टय युक्तेनाऽधिकारिणा ब्रह्मात्मैक्यविचारः कर्त्तव्य इतिनिरूपितं भवति, तत्राऽन्यस्यापि जडप्रधानपरमाण्यादिकारणत्वं सम्भति न वेति संशयनिरासाय पञ्चमाधिकरणं, "ईक्षतेर्नाशब्दमिति" न सांख्यपरिकल्पितं प्रधानमचेतनं कारणं शक्यं वेदान्तेष्वाश्रयितुं, यतोऽशब्दं हि तज्जगत्कारणत्वे, न वेद प्रतिपादितमिति सूत्रार्थः, कुतः ? प्रधानस्याऽशब्दत्वं ईक्षतेः, ईक्षितृत्वश्रवणात्कारणस्य, कथं? एवं हि छान्दोग्योपनिषदिश्रूयते, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्युपक्रम्य, तदैक्षतबहुस्यां प्रजायेय इति कारणस्येक्षितृत्वश्रवणाच्चेतनत्व श्रवणादिति, न हि जडस्येक्षितृत्वं सम्भवति लोकेऽपि घटादिष्वदर्शनात्। तस्मान्नप्रधानं जगत्कारणं, परमाण्वादीनामपि तथैवोक्तहेतोः इति पञ्चमाधिकरणार्थः । प्रधानशब्दवाच्याऽव्यक्तस्य मायायाब्रह्माधीनत्वश्रवणाच्च ब्रह्मणश्चमायोपहितस्य विवर्तकारणत्वनिरूपणादिति, न हि शुद्धं ब्रह्म केवलं कारणं भवितुमर्हति, तथा सति, सुषुप्तेरुत्थानाऽनुपपतिर्मुक्तानां बन्धत्वापत्तिश्चेति दोषद्वयं स्याच्छुद्धत्वाऽविशेषात् । न निरोधोनचोत्पत्तिर्नबन्धोन च साधकः ॥ न मुमुक्षुर्न वैमुक्त इत्येषा परमार्थता, कार्योपाधिरयजीवः कारणोपाधिरीश्वरः । कार्यकारणतां हित्वापूर्णबोधोऽवशिष्यते, मायिनन्तु महेश्वरं, केवलो निर्गुणश्चेत्यादिश्रुतिविरोधाच्च । तथाऽद्वैतसिद्धिविरोधोपि, तथाहि न च ब्रह्मोपादानं तस्याऽपरिणामित्वान्नचशुक्त्यादेरिवविवर्त्तोपादानमविद्यामन्तराऽन्यथा भावलक्षणस्य विवर्त्तस्यैवाऽसम्भवादिति, शुद्धत्वव्याघाताच्च, शेषेषु षडधिकरणेष्वानन्दमयत्वाऽऽदित्याद्यन्तर्गतत्वाऽऽकाशज्योतिः प्राणादिशब्दप्रतिपाद्यत्वादीनि तस्यैव परमात्मन उक्तानि, तेषामपि तत्रैवान्तर्भाव इति, न ब्रह्मातिरिक्तं कारणं भवितुमर्हतीति श्रौतोऽर्थः । प्रथमाध्यायस्य द्वितीयेऽस्पष्टपादे सप्तभिरधिकरणैरस्पष्टब्रह्मलिङ्गैर्ब्रह्मण एवोपास्यत्वमुक्तं, प्रधानजीवादीनान्नोपास्यत्वमिति चोक्तम् । प्रथमाध्यायस्य तृतीयेज्ञेयपादे चतुर्दशभिरधिकरणैर्ब्रह्मणः सर्वाधिष्ठानत्वं, सर्वश्रेष्ठत्वमक्षरशब्दवाच्यत्वं, प्रणवेनोपास्यत्वं, प्रकाशकत्वं प्रणवरूपत्वं, विज्ञानमयादिशब्दवाच्यत्वं चोक्तम् ।

प्रथमाध्यायस्य चतुर्थेपादे पदाचिन्ताख्येऽष्टभिरधिकरणैः पुनः प्रधानकारणतानिराकरणपूर्वकं ब्रह्मणएवाऽभिन्ननिमित्तोपादानकारणत्वमुक्तमवैदिकमतान्तरनिराकरणंचार्थान्निरूपितमिति सर्ववेदवाक्यानांशुद्धेसच्चिदानन्दस्वरूपे ब्रह्मात्मन्येवपरमतात्पर्येण समन्वयो, नामाऽखण्डार्थतेति यावत् । १ । अविरोधाख्यद्वितीयाध्यायस्य प्रथमेस्मृतिपादेत्रयोदशभिरधिकरणैःसांख्यादिस्मृतिविरोधपरिहारं कृत्वा, निर्गुणस्यापिब्रह्मणोमायाशक्तिवशाद् विवर्त्ताधिष्ठानत्वेनप्रकृतित्वंनिमित्तकाणत्वंचसाधितम् । द्वितीयाध्यायस्य तर्कपादेद्वितीयेऽष्टभिरधिकरणैःसांख्यतार्किकबौद्धजैनपाशुपताद्यवैदिकमतदुष्टत्वप्रदर्शनेनाऽविरोधस्तत्तद्युक्तिभिरेवसाधितः । द्वितीयाध्यायस्य तृतीयेवियत्पादेसप्तभिरधिकरणैराकाशादीनामानित्यत्वमुत्पत्त्यादिनासाधितं, वायोश्चाऽनित्यत्वमुत्पत्तिश्चेतिब्रह्मणो जगज्जनकत्वं, जीवस्य ब्रह्मस्वरूपत्वमेकलक्षणत्वेनचोक्तम् । द्वितीयस्यचतुर्थे लिङ्गपादे नवभिरधिकरणैरिन्द्रियादीनामात्मसमुत्पन्नत्वं तेषां परिच्छिन्नत्वं, देवताधीनत्वमीश्वरस्यैवप्राणादिनिर्मातृत्वमुक्तम् । २ । साधनाख्यतृतीयाध्यायस्य प्रथमेवैराग्यपादे, षडभिरधिकरणै जीवस्याऽज्ञानिनो,भाविशरीरबीजरूपभूतसूक्ष्मवेष्टितस्यैवेतागमनं, परलोकेसुखादिभोगार्थं, जाग्रदवस्थाभिन्नत्वमारोहणमवरोहणञ्चसस्यादौजीवस्यनमुख्यंजन्म, किन्तु तत्र तत्राऽऽकाशादिषु संश्लेपमात्रं, प्रथमाहुतौ श्रद्धाशब्देनाऽपां प्रतिपादनमुपासनाफलभोक्तृत्वं चोक्तम् । तृतीयस्यद्वितीयेतत्वंपदशोधनपादेऽष्टभिरधिकरणैर्ब्रह्मणोऽसङ्गत्वनिरूपणायस्वप्नादिसृष्टेर्मिथ्यात्वमात्मनः स्वप्नाद्यवस्थासाक्षित्वं, ताभ्योभिन्नत्वंचोक्तमखण्डार्थत्वं योग्यायेति । तत्रैवाऽणुमध्यमविभुपरिमाणविचारश्चोक्तइतिब्रह्मणोनिषेधावधित्वेनसर्वबाधसाक्षित्वेन,परमार्थसत्यत्वं, जीवस्यापिब्रह्मरूपत्वेन,सर्वावस्थासाक्षित्वं, स्वप्रकाशत्वंचानंतत्वं साधितं तत्रैवद्वितीयपादे ॥ तृतीयस्यगुणोपसंहारेतृतीयेपादे,षट्त्रिंशद्भिरधिकरणैश्छान्दोग्यबृहदारण्यकादिश्रुत्युक्तयोःपञ्चाऽग्निविद्योपासनयोर्विध्यनुष्ठानफलसाम्येनैकत्वं, सर्वशाखास्वविरुद्धत तद्गुणोपसंहारस्यकर्त्तव्यत्वं, नानोपासानानांप्रतीकाऽहंग्रहाङ्गाऽववद्धसंज्ञकानांकथनं, विकल्पेन समुच्चयेनवानामस्मरणमूर्त्तिपूजाख्यायांप्रतीकोपासनायामे-

च्छिकत्वं, विकल्पसमुच्चयोर्यथाकाम्यंचोक्तम् । तृतीयस्यान्तरङ्गव-
हिरङ्गरूपज्ञानसाधनपादेचतुर्थे, सप्तदशभिरधिकरणैर्ब्रह्मात्मैक्यज्ञान-
स्यकर्मोपासनानिर्पेक्षस्वतन्त्रस्यैवनिर्वाणमोक्षजनकत्वं, कर्मोपासन-
योश्चनिष्कामयोरन्तःकरणशोधकत्वेन परंपरयामोक्षजनकत्वं, वैदि-
कसम्प्रदायरीत्याब्राह्मणपरमहंसाख्यसंन्यासिनएव, ब्रह्मात्मैक्यज्ञाने,
मुख्याधिकारित्वं, ज्ञानस्य,नकर्मभिरुपासाभिश्चसमसमुच्चयः, तस्य
ज्ञानस्य स्वोत्पत्तौनिष्कामकर्मोपासनासापेक्षत्वं, योग्यतावशादश्व-
वलीवर्द्दवदितिरथचर्यायांशकटेवेति, भ्रष्टोर्ध्वरेतसोःसंन्यासिनै-
ष्ठिकब्रह्मचारिणोश्चप्रायश्चित्तस्याऽमुष्मिकं शुद्धिजनकत्वं, न व्य-
वहारार्हत्वं, तयोःपतितयोः पंक्तिवाह्यत्वं स्मृत्याचार प्रामाण्या-
दितियावत् । सालोक्यादिमुक्तीनामीश्वरोपासनाफलानां साति
शयत्वं, निर्वाणमुक्तेश्चनिरतिशयनित्यसुखब्रह्मस्वरूपत्वंचोक्तम् । ३
फलाध्यायस्यचतुर्थस्यप्रथमेजीवन्मुक्तिपादे, चतुर्दशभिरधिक-
रणैर्वेदान्त श्रवणादीनामावर्त्तनीयत्वं, मध्यमाधिकारिणां नतूत्त-
मानामुपासनायामासननियमत्वमामरणंतासांकरणीयत्वंच, ध्यान-
साधनस्यैकाग्रस्यप्रधानत्वाद्दिग्देशकालनिमानियमै,र्ब्रह्मात्मैक्यज्ञानि-
नांजीवतामेवपुण्यपापयोर्लेपाऽभावः, प्रारब्धस्यकर्मणोभोगेनैव क्षयः,
सञ्चितकर्मणांतुब्रह्मज्ञानेनविनाशः । ज्ञात्राजीवेनस्वात्मतयाब्रह्मणो-
ज्ञातव्यत्वं, नतुभेदिनामिव स्वात्मभिन्नत्वेन, तथासति,घटादिवद्-
विनाशत्वापत्तिर्जडत्वापत्तिश्च,ब्रह्मभिन्नस्य सर्वस्यजडत्वादनित्यत्वा-
च्च,नान्योऽतोस्तिद्रष्टा,यावद्विकारन्तु विभागोलोकवदितिश्रुतिसूत्र-
विरोधात्स्वानुभवविरोधाच्च । प्रतीको पासनायामहंत्वेनाऽग्राह्यत्वं,
तथासति प्रतीकाऽभावप्रसङ्गात् । कर्मणांकर्मफलानांचतारतम्येनवि-
द्यमानत्वमनित्यत्वं, विवेकादिसाधनवतां मोक्षावश्यकत्वंचोक्तम् ।
चतुर्थस्य द्वितीयेपादे एकादशभिरधिकरणैर्वागादीनां मनसिलयो,न
स्वरूपेण, ब्रह्मात्मैक्यतत्त्वविदोवागादीनांपरमात्मनिनिःशेषेणलयो,
ज्ञानेनसर्वस्य वाध्यमानत्वात् । उपासकानां मूर्द्धस्थानादेवोत्क्रमणं,
तेषां निशायामपि मृतानामुपासनाफलप्राप्तिः, ब्रह्मात्मैक्यतत्त्वविदस्तु
स्वस्यव्यापकदर्शनान्नोत्क्रमणं सम्भवति, नतस्यप्राणाउत्क्रामन्तीत्या-
दिप्रोक्तम् । चतुर्थस्यतृतीयेपादेषडभिरधिकरणैरर्चिरादिकस्य ब्रह्म-
लोकमार्गस्यैकत्वमुत्तरमार्गेणकार्यब्रह्मगमनम् । प्रतीकोपासकानांब्रह्म-

लोकादिषु न गमनमतत्क्रतुत्वादिति, तेषां देवतान्तरोपासकत्वा-दित्याद्युक्तम । चतुर्थाध्यायस्यचतुर्थेपादेविदेहमुक्त्याख्येब्रह्मलोकसं-ज्ञकेसप्तभिरधिकारणैर्मुक्तिरूपस्यवस्तुनोब्रह्मणः, पुरातनत्वंयत्पूर्व-मेवस्वतःसिद्धस्वरूपं,जीवस्यतदेव मुक्तावाविर्भवत्यविद्यावाधेनत्यु-क्तं, ब्रह्मणोऽभिन्नमभेदेनवास्तवेनाऽवस्थानं, तथाच श्रुतिः, ब्रह्मैवसन् ब्रह्माप्येतीतिमुक्तस्वरूपस्यनिर्विशेषशुद्धब्रह्मणोयुगपत्साविशेषनिर्वि-शेषत्वमज्ञानिज्ञानिदृष्टिभेदेन, नवस्तुतः, सविशेषत्वंकदापि, तथाच श्रुतिः,उपासकानां सिद्धयर्थं ब्रह्मणोरूपकल्पना। केन चिच्छिष्टेनाप्युक्तं निर्विशेषंपरंब्रह्मसाक्षात्कर्त्तुमनीश्वराः । येमदास्तेऽनुकम्प्यन्ते सवि-शेषनिरूपणैरिति । अर्चिरादिमार्गेणब्रह्मलोकेप्राप्तस्योपासकस्यभोग्य-वस्तूनांसृष्टौमानसस्यैवहेतुत्वमुपासनयासत्यसङ्कल्पत्वाद्,देहान्तर-सृष्टावपि स्वातन्त्र्यं, जगत्सृष्टौस्वातन्त्र्याऽभावेपि भोगमोक्षयोः स्वातन्त्र्यम् । सदेहत्वमदेहत्वमपितस्य स्वेच्छिकमेवत्यादिविषयजा तंनिरूपितमितिशम ॥ इति ॥

इति श्री १०८ परमहंसपरिव्राजकाचार्य्यपूज्यपादस्वामिस्वय-म्प्रकाशानन्दसरस्वतीशिष्यप्रज्ञानानन्दसरस्वतीस्वामिप्रकाशिता कुतर्कदग्धचिकित्सा वेदान्तदर्शनभूमिका समाप्ता ॥

ॐ तत्सत ॥ श्रीकृष्णार्पणमस्तु ॥

# श्री १०८ जगद्गुरुवर्य्यश्रीमच्छङ्कराचार्य्यस्तोत्रम् ॥

शङ्कराचार्य्यवर्यायश्रीजगद्गुरवेनमः ॥
श्रुतिसिद्धान्तपाराय सर्वविद्यास्वरूपिणे ॥ १ ॥

ब्रह्मरूपायशान्तायसच्चिदानन्दमूर्त्तये ॥
अत्यन्तपद्मसूर्यायसर्वरूपायते नमः ॥ २ ॥

सर्वाधिष्ठानभूतायपाखण्डमतभेदिने ॥
निराकारायशुद्धाय निष्प्रपञ्चायते नमः ॥ ३ ॥

निष्कलायनिर्गुणायनिर्विशेषाय आत्मने ॥
निस्संगायसुमहते नित्यानन्दाऽद्वयाय च ॥ ४ ॥

परहंसायरागादिमलरहितायविष्णवे ॥
शङ्करायनमस्तुभ्यं विद्याधीशायते नमः ॥ ५ ॥

महादेवायतुर्यायतुर्यातीतायवै नमः ॥
श्रुतिरूपस्ववचसाशिष्यसंतापहारिणे ॥ ६ ॥

नमःसंन्यासिवर्यायजगदुद्धारहेतवे ॥
पूज्यपादायसकलागमसच्छास्त्रदर्शिने ॥ ७ ॥

अनादिगुरुसंप्राप्तसंप्रदायप्रकाशिने ॥
अधर्मनाशकायाऽस्तु प्रणतिर्मेसहस्रशः ॥ ८ ॥

कैवल्यमोक्षरूपायसृष्टिस्थित्यन्तहेवते ॥
कार्यकारणमुक्तायब्रह्मणेपरमात्मने ॥ ९ ॥

साक्षिणे सर्ववेदान्तवेद्यायपुरुषाय च ॥
मनोवाचांविदूरायनमोऽस्तुसर्वशक्तये ॥ १० ॥

स्तोत्रमेतत्पठेद्यस्तुप्रयतःशुद्धमानसः ॥
धर्मार्थकाममोक्षाणांसिद्धिस्तस्यनसंशयः ॥ ११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योर्ध्वाम्नायकाशीकैवल्यधाम-
निवासिपूज्यपादप्रज्ञानानन्दसरस्वतीस्वामिविरचितं
श्रीजगद्गुरुशङ्कराचार्य्यस्तोत्रं समाप्तं

( कुतर्कदग्धचिकित्सायाः )

# शुद्ध्यशुद्धिपत्रम्

| | शुद्धम् | अशुद्धम् | पृ० | पंक्ति |
|---|---|---|---|---|
| १ | सर्वमात्मै | सर्वमात्मे | १ | ६ |
| २ | तं | स | २ | ४ |
| ३ | द्वैतं | | २ | ९ |
| ४ | धर्मतां | धर्मता | ५ | ५ |
| ५ | इत्यंशो | इत्यंशो | ६ | १ |
| ६ | दात्माश्रय | दात्माश्रप | ७ | १० |
| ७ | नाभ्युपगम्येरन् | नाभ्युपगम्पन् | ८ | ६ |
| ८ | सूचितं | सूचितम् | १० | ५ |
| ९ | आद्य | आघ | १० | १२ |
| १० | तात्पर्यं | तात्पर्यम् | ११ | ६ |
| ११ | तदितर | तदितरं | ११ | ११ |
| १२ | ननिरोधो | नविरोधो | ११ | १८ |
| १३ | लेखः | | ११ | ८ |
| १४ | लब्ध्य | तब्ध्य | १२ | २ |
| १५ | कार्प्यारोपित | कार्प्यपरोपित | १५ | ५ |
| १६ | यावद्द्रव्य | याव द्रव्य | १५ | ४ |
| १७ | षष्ठक्षणे | षष्ठ क्षेण | १६ | २ |
| १८ | उपादानान्यत्वे | उपादानन्यत्वे | १८ | १६ |
| १९ | मसन्तं | मसत्तं | २५ | ९ |
| २० | ब्रह्माणमेवच | ब्राह्मणमेवच | २५ | १० |
| २१ | वीक्ष्यमाणे | वीक्ष्यमाणो | २६ | ३ |
| २२ | षड्भिः | षडभिः | ३४ | २ |
| २३ | करणैः | कारणैः | ३५ | ३ |
| २४ | कंप्यन्ते | कथ्यन्ते | ३५ | ९ |
| २५ | रूपेणवचसा | रूपस्ववचसा | ६६ | १२ |